## अथ चतुर्थोऽध्यायः

**मैत्रेय उवाच —**

**एतावदुक्त्वा विरराम शङ्करः**
**पत्न्यङ्गनाशं ह्युभयत्र चिन्तयन् ।**
**सुहृद्दिदृक्षुः परिशङ्किता भवान्नि-**
**ष्क्रामती निर्विशती द्विधा च सा ॥ १ ॥**

**प्रकाशिका** – ॥ हरिः ॐ ॥ उभयत्रानुज्ञादाने बलान्निवारणे च सुहृद्दिदृक्षुः स्वधाम्नो निष्क्रामतीति भवात्परिशङ्किता स्वधाम पुनर्निर्विशतीति वाऽभूदित्यन्वयः ॥ १ ॥

**सुहृद्दिदृक्षाप्रतिघातदुर्मनाः**
**स्नेहाद्रुदन्त्यश्रुकलातिविह्वला ।**
**भवं भवान्यप्रतिपूरुषं रुषा**
**प्रधक्षतीवैक्षत जातवेपथुः ॥ २ ॥**

**प्रकाशिका** – सुहृदां दिदृक्षायाः प्रतिघातेन निवारणेन दुर्मनाः । अश्रूणां कलाभिर्लेशैरति-विव्हला व्याकुलाऽप्रतिपूरुषमिन्द्रादिषु स्वस्वसमपुरुषरहितं प्रधक्षतीवभस्मीकरिष्यतीव रुषा जातो वेपथुः कंपा यस्याः सा । अनेन स्त्रियः पुरुषवशीकरणसाधनाभ्यां कोपरोदनाभ्यां शिवो गमनेऽनुज्ञां दास्यतीति तस्या भावः सूचित इति ज्ञातव्यम् ॥ २ ॥

**ततो विनिःश्वस्य सती विहाय तं**
**शोकेन रोषेण च दूयता हृदा ।**
**पित्रोरगात् स्त्रैणविमूढधीर्गृहान्**
**प्रेम्णाऽऽत्मनो योऽर्धमरासत प्रियः ॥ ३ ॥**

**प्रकाशिका** – दूयता दुःखवता । कथंभूतम् । यः प्रीत्याऽऽत्मनः स्वस्यात्मनो देहस्यार्धं तस्यै अरासतादात् । आत्मन इति द्विरावर्तनीयम् । त्यागे हेतुः स्त्रीणां स्वभावः स्त्रैण तेन विमूढा धीर्यस्याः सा ॥ ३ ॥

**तामन्वगच्छन् द्रुतविक्रमां सती**
**मेकां त्रिनेत्रानुचराः सहस्रशः ।**

**सपार्षदमुख्या मणिमन्मदादयः**
**पुरो वृषेन्द्रास्तरसाऽऽगतव्यथाः ॥ ४ ॥**

**प्रकाशिका –** द्रुतविक्रमां द्रुतं शीघ्रं विक्रमः पादविक्षेपो यस्यास्ताम् । पार्षदमुख्यैः सह वर्तमानाः सपार्षदमुख्याः । मणिमान्मदश्चादिर्येषां ते पुरः पुरतो वृषेंद्रो येषाम् । रुद्रातिक्रमणेन गमनादागतव्यथा गतव्यथा निर्भया इति वा ॥ ४ ॥

**तां सारिकामण्डुकदर्पणाम्बुजैः**
**श्वेतातपत्रव्यजनस्रगादिभिः ।**
**गीतायनैर्दुन्दुभिशङ्खवेणुभि-**
**र्वृषेन्द्रमारोप्य विलम्बिता ययुः ॥ ५ ॥**

**प्रकाशिका –** सारिका क्रीडाशुकी मण्डूकं जलक्रीडावाद्यं गीतायनैर्गीताश्रयैः । विलंबिता यथा सर्वेषां संभूय गमनं यथा तथा शनैश्चरन्तः । विटंकिता इति पाठे शोभिता इत्यर्थः ॥ ५ ॥

**आब्रह्मघोषोर्जितयज्ञवैशसं विप्रर्षिजुष्टं विबुधैश्च सर्वशः ।**
**मृद्दार्वयःकाञ्चनदर्भचर्मभिर्निसृष्टभाण्डं यजनं समाविशत् ॥ ६ ॥**

**प्रकाशिका –** आसमंताद्ब्रह्मघोषेण वेदध्वनिनोर्जितम् । जुष्टं संकुलमिति यावत् । यज्ञार्थं वैशसं पशुविशसनं यस्मिंस्तत् । मृच्च दारुचायश्च काञ्चनं च दर्भाश्च चर्माणि च मृद्दार्वयः काञ्चनदर्भचर्माणि तैर्निसृष्टानि निर्मितानि भाण्डानि पात्राणि यस्मिंस्तत्तथा । यजनं यज्ञस्थानम् ॥ ६ ॥

**तामागतां तत्र न कश्चनाद्रियद्**
**विमानितां यज्ञकृतो भयाज्जनः ।**
**ऋते स्वसारो जननीं च सादराः**
**प्रेमाश्रुकण्ठ्यः परिसस्वजुर्मुदा ॥ ७ ॥**

**प्रकाशिका –** नाद्रियन्नादृतवान् । यज्ञकृतो दक्षस्य भयात् । तत्र हेतुस्तेन विमानिताम् । स्वसृर्जननीं च ऋते विना । तास्तु सादराः परिषस्वजुरालिङ्गितवत्यः । प्रेमाश्रुभिर्निरुद्धः कण्ठो यासाम् ॥ ७ ॥

सौन्दर्यसम्प्रश्नसमर्थवार्तया
माता च मातृष्वसृभिश्च सादरम् ।
दत्तां सपर्यां वरमासनं च सा
नादत्त पित्राऽप्रतिनन्दिता सती ॥ ८ ॥

**प्रकाशिका –** सौन्दर्यमङ्गकौशल्यं तद्विषयको यः प्रश्नः । सौदर्येति पाठे सोदर्यविषयकोऽयं संप्रश्न इति व्याख्येयम् । तत्र समर्था योग्या या वार्ता तया सह सपर्यां सा सती नादत्त न गृहीतवती वार्तां च नाश्रुणोदित्यर्थः । यतः पित्राऽप्रतिनिन्दिताऽनादृता ॥ ८ ॥

अरुद्रभागं तमवेक्ष्य चाध्वरं
पित्रा च देवे कृतहेलनं विभौ ।
अनादृता यज्ञसदस्यधीश्वरी
चुकोप लोकानिव धक्ष्यती रुषा ॥ ९ ॥

**प्रकाशिका –** न विद्यते रुद्रस्य भागो यस्मिंस्तम् । देवे रुद्रे कृतहेलनमवज्ञानं चावेक्ष्य तदाज्ञाद्यकरणात्स्वयं चानादृता ॥ ९ ॥

जगर्ह सामर्षविपन्नया गिरा
शिवद्विषं धूमपथश्रमस्मयम् ।
स्वतेजसा भूतगणान् समुत्थितान्
निगृह्य देवी जगतोऽभिशृण्वतः ॥ १० ॥

**प्रकाशिका –** जगर्ह निन्दितवती । अमर्षेण कोपेन विपन्ना सम्यगव्यक्ता तया । गद्गदयेति यावत् । धूमपथः कर्ममार्गस्तद्विषये श्रमोऽभ्यासो यस्य स तथा तम् । स्वतेजसा स्वसामर्थ्येन कोपेन निगृह्य निवार्य ॥ १० ॥

देव्युवाच —

न यस्य लोकेऽस्त्यतिशायनः प्रिय-
स्तथाऽप्रियो देहभृतां प्रियात्मनः ।
तस्मिन् समस्तात्मनि मुक्तवैरके
ऋते भवन्तं कतमः प्रतीपकः ॥ ११ ॥

**पवित्रकीर्तिं तमलङ्घ्यशासनं**
**भवानहो द्वेष्टि शिवं शिवेतरः ॥ १४ ॥**

**प्रकाशिका** – ननु रुद्रस्य महापुरुषत्वमेव कुतो येन तन्निन्दकोऽहं महापुरुषद्वेषी स्यामित्यतस्तस्य महापुरुषत्वमुपपादयंत्याह ॥ यद्व्यक्षरमिति द्वाभ्यां श्लोकाभ्याम् । यच्छिव इति द्वेऽक्षरे यस्मिंस्तद्व्यक्षरं नाम । तत्प्रसंगादन्यकथाप्रसङ्गात्सकृदेव गिरा वागिन्द्रियेणेरितमुच्चारितं नृणामघं पापमाशु हन्ति । अलंघ्यमन्यथाकर्तुमशक्यं शासनमाज्ञा यस्य तम् । भवान्द्वेष्टि । अतस्त्वं शिवेतरोऽशिवः । अनेन पापहरनामवाच्यत्वात्पवित्रकीर्तित्वादलंघ्यशासनत्वाच्च रुद्रो महापुरुष इत्युपपादितमिति ज्ञातव्यम् ॥ १४ ॥

**यत्पादपद्मं महतां मनोऽलिभि-**
**र्निषेवितं ब्रह्मरसासवार्थिभिः ।**
**लोकस्य यद् वर्षति चाशिषोऽर्थिनः**
**तस्मै भवान् द्रुह्यति विश्वबन्धवे ॥ १५ ॥**

**तात्पर्यम् – ब्रह्मरसासवार्थिभिः शिष्याणां मनोऽलिभिः । 'सनकादयो रुद्रशिष्यास्तेषामन्ये तु योगिनः । ब्रह्मशिष्यस्तथा रुद्रो ब्रह्मा नारायणस्य चे'ति ब्राह्मे ॥ १५ ॥**

**प्रकाशिका** – भक्तानामैहिकामुष्मिकसकलपुरुषार्थप्रदत्वाच्चायं महापुरुष इत्याशयेनाह ॥ यत्पादपद्ममिति । अत्र महतामित्यस्य ब्रह्मादीनामित्यर्थकत्वप्रतीतिं वारयन् ब्रह्मरसासवार्थिभिरित्यस्यान्वयं दर्शयति ॥ ब्रह्मरसेति । महतामित्यस्यार्थः ॥ शिष्याणामिति । ननु के ते रुद्रशिष्याः कुतश्च महतामित्यस्य संकोच इत्यपेक्षायामत्र प्रमाणं पठति ॥ सनकादय इति । रुद्रो ब्रह्मशिष्य इत्यनेन संकोचकरणमावश्यकमिति सूचयति ॥ ततश्चायं श्लोकार्थः ॥ यस्य रुद्रस्य पादपद्मं महतामितरयोगिपूज्यानां रुद्रशिष्याणां सनकादीनां ब्रह्मरसासवार्थिभिर्ब्रह्मरसो ब्रह्मज्ञानजन्यानन्दः स एवासवो मकरंद इन्द्रियतृप्तिकरं मधु तदर्थिभिस्तस्यार्थनं शीलं येषां मनोलक्षणाभिर्नितरां सेवितम् । अनेन मोक्षप्रदत्वमिति ज्ञातव्यम् । यच्चार्थिनः सकामस्य लोकस्याशिषो मनोरथान् । अत एव विश्वबन्धवे ॥ १५ ॥

**किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये**
**ब्रह्मादयस्तमवकीर्य जटाः श्मशाने ।**
**तन्माल्यभस्मनृकपाल्यवसत्पिशाचै-**
**र्ये मूर्धभिर्दधति तच्चरणावसृष्टम् ॥ १६ ॥**

**तात्पर्यम् – ब्रह्मादयो ब्रह्मपुत्राः । 'सुपर्णशेषप्राणेशब्रह्मविष्णून्गिरं श्रियम् । ऋते नमन्ति नो रुद्रं क एव पुरुषार्थभागि'ति गारुडे ॥ १६ ॥**

**प्रकाशिका** – शिवापदेशो ह्यशिवः । ननु शिवश्रिताभस्मकृतस्नानः प्रेतावासेषु यो घोरै-रित्याद्युक्तरीत्याऽयमसाधुरेव किं न स्यादित्यतस्तदाक्षिपती पुनर्महत्त्वमुपपादयति ॥ किं वेति । अत्र ब्रह्मादय इत्यस्याबाधितमर्थं दर्शयति ॥ ब्रह्मादय इति । ब्रह्मपुत्राः सनकादयः । पुत्रा इत्यन्यपदार्थदर्शनम् । विग्रहस्तु ब्रह्माऽऽदिः कारणं पिता येषामिति द्रष्टव्यः । ननु ब्रह्मपुत्राणां सनकादीनां तच्चरणावसृष्टनिर्माल्यधारणं न पुरुषार्थभाक्त्वेन किन्तु लोकसङ्ग्रहायेति किं न स्यादित्यतोऽत्र प्रमाणं पठति । सुपर्णेति । प्राणेशो मुख्यप्राणो गिरं सरस्वतीं भारतीं चेत्येतानेव ऋते कः पुरुषार्थभाक् च नो नमति । सर्वोऽप्युमादिचेतनः पुरुषार्थभाक् नमतीत्युक्त्या न सनकादीनां नमनं लोकसङ्ग्रहायेत्युक्तं भवति ॥ ततश्चायं श्लोकार्थः ॥ ये त्वदन्ये ब्रह्मादयो ब्रह्माऽऽदिर्येषामिति विग्रहेण ब्रह्मपुत्राः सनकादयः । जटा अवकीर्य स्मशाने पिशाचैः सहावस-द्वसति स्म । कथंभूतः । तन्माल्यभस्मनृकपाली तस्मिन् स्मशाने विद्यमानप्रेतालंकारमाला-भस्मानि नृकपालानि च भूषणत्वेनास्य संतीति स तथोक्तः । तमशिवं शिवापदेशं न विदुः किम् । ओमिति चेत्तत्राह । ये मूर्धभिस्तच्चरणारविंदविसृष्टं विगलितमाल्यं दधति धारयन्तीति । अनेन तथात्वे भक्तिपूर्वकतद्वन्दनं तेषां न स्यादिति तर्कः सूचित इति ज्ञातव्यम् । श्मशानभस्म-धारणादिकं च हर्याज्ञया क्रियमाणं तस्य शुद्धिसंपादकमित्याशयः ॥ १६ ॥

**कर्णौ पिधाय निरयाद् यदकल्प ईशे**
**धर्मावितर्यघृणिभिर्नृभिरस्यमाने ।**
**छिन्द्यात् प्रसह्य रुशतीमसतां प्रभुश्चेत्**
**जिह्वामसूनपि ततो विसृजेत् स धर्मः ॥ १७ ॥**

**प्रकाशिका** – महद्भिर्निन्दनप्राप्ते तच्छ्रोतृभिः सज्जनैरनुष्ठेयं धर्मं दर्शयति ॥ कर्णाविति । धर्मावितरि धर्मरक्षके ईशे स्वामिनि । अघृणिभिः कृपाशून्यैर्नृभिरस्यमानेऽधिक्षिप्यमाणे सति श्रोता यद्यकल्पस्तच्छिक्षणाय न समर्थस्तर्हि स्वकर्णौ पिधायाच्छाद्य तस्माद्देशान्निरयान्निर्गच्छेत् । प्रभुश्चेच्छक्तश्चेत् । असतां निन्दकानामुशतीं परुषभाषिणीं जिह्वां प्रसह्य छिन्द्यात् । उभयाभावे तत्रासून्प्राणान्विसृजेदिति यत् स धर्मः । अपिशब्दो दुस्त्यजानपीत्यर्थकः ॥ १७ ॥

**अतस्तवोत्पन्नमिदं कलेवरं**
**न धारयिष्ये शितिकण्ठगर्हिणः ।**

**जग्धस्य मोहाद्धि विशुद्धिमन्धसो**
**जुगुप्सितस्योद्धरणं प्रचक्षते ॥ १८ ॥**

**प्रकाशिका** – अतः शिवनिन्दाश्रवणवत्याः स्त्रियश्च ममान्यत्र गमनजिह्वाच्छेदनयोरसंभवाच्छितिकण्ठगर्हिणो नीलकण्ठनिन्दकस्य । तव वीर्यादुत्पन्नम् । अपवित्रशरीरमिति यावत् । प्रमादात्प्राप्तस्यापवित्रस्य त्यागं विना न स्वात्मनः शुद्धिरित्येतद्दृष्टान्तमुखेनोपपादयति ॥ जग्धस्येति । मोहादज्ञानाज्जग्धस्य भक्षितस्य जुगुप्सितस्यांधसोऽन्नस्योद्धरणं वमनमेव भक्षितुर्विशुद्धिं शुद्धिकरं प्रचक्षते विद्वांसः ॥ १८ ॥

**न वेदवादाननुवर्तते मतिः**
**स्व एव लोके रमतो महामुनेः ।**
**यथा गतिर्देवमनुष्ययोः पृथक्**
**स्व एव धर्मे न परं क्षिपेत् स्थितः ॥ १९ ॥**

**प्रकाशिका** – यदुक्तं लुप्तक्रियायेति तत्प्रत्याह ॥ नेति । स्वे स्वीये स्वबिंबभूते लोके प्रकाशमाने हरावेव रमतो रममाणस्य महामुनेर्महामननशीलस्य शिवस्य मतिर्बुद्धिर्वेदवादान्विधिनिषेधरूपान्नानुवर्तते । तस्य लोकविलक्षणधर्माधिकारित्वात् । अत्र दृष्टान्तमाह ॥ यथेति । यथा देवमनुष्ययोर्गतिर्गमनप्रकारः पृथग्भिन्नः । उपसंहरति ॥ स्व एवेति । अतः स्वीय एव स्वधर्मे स्थितः पुमान् परं स्वयोग्यधर्मानुष्ठातारं न क्षिपेन्न दूषयेत् । त्वं प्रकृते वेदवादनिरतः कथं जीवन्मुक्तधर्मपरं हरं लुप्तविक्रियायेति निन्दितवानिति भावः ॥ १९ ॥

**कर्म प्रवृत्तं च निवृत्तमप्युत वेदे**
**विविच्योभयलिङ्गमाश्रितम् ।**
**विरोधि तद् यौगपदेककर्तरि**
**द्वयं यथाऽऽब्रह्मणि कर्म नर्च्छति ॥ २० ॥**

**तात्पर्यम्** – आब्रह्मणि ब्रह्मज्ञानिनि । 'आब्रह्मस्थितधीर्जीवन्मुक्तश्चेत्यभिधीयते । यस्तस्य न निवृत्तं च प्रवृत्तं कर्म चेष्यते । यत्तु देवाः प्रकुर्वन्ति स महानियमः स्मृतः । स्वर्गाद्यर्थं प्रवृत्तं स्यान्निवृत्तं मुक्तये तु यत् । स महानियमो नाम कर्मयत्त्वाधिकारिकम् । महतो नियमाद्विष्णोः प्रीत्या मुक्तौ सुखोन्नतिः । केचिन्निवृत्तमित्याहुर्महानियममप्युते'ति भविष्यत्पुराणे ॥ २० ॥

**प्रकाशिका** – एतदेव सम्यग्विशदयति ॥ कर्मेति । अत्र ब्रह्मणि कर्म न गच्छतीत्यसङ्गतः प्रतीयतेऽतोऽत्र विवक्षितं पदच्छेदमर्थं च दर्शयति ॥ आब्रह्मणीति । ब्रह्मज्ञानिनीत्यनेन आ सम्यग्विज्ञातं ब्रह्म येनेति मध्यमपदलोपी बहुव्रीहिरिति सूचयति । देव इति शेषः । अप्रतिपत्ति-विप्रतिपत्तिनिरासाय समग्रश्लोकतात्पर्यं प्रमाणेनैव दर्शयति ॥ आब्रह्मेति । अभिधीयते मुख्यया वृत्त्योच्यते । यो देव इति शेषः । तथा च देवेतरज्ञानिष्वाब्रह्मशब्दो न मुख्य इत्याशयः । ननु देवानामपि यज्ञेन यज्ञमयजन्त देवा इति वेदे कर्मोच्यत इत्यतस्तदुभयभिन्नं तृतीयमित्याह ॥ यत्त्विति । देवास्तु यत्कर्म कुर्वन्ति स महानियमो महानियमसंज्ञस्तृतीय इत्यर्थः । त्रयाणां कर्मणां लक्षणान्याह ॥ स्वर्गाद्यर्थमिति । स्वर्गादिकामनया क्रियमाणमित्यर्थः । कर्मेति शेषः । मुक्तये मुक्त्युद्देशेन क्रियमाणमित्यर्थः । तुशब्दोऽवधारणे । यत्त्वाधिकारिकमाधिकारिकदेवैः क्रियमाणम् । तत्र महानियमशब्दनिर्वचनं सूचयंस्तत्साध्यं फलं दर्शयति ॥ महत इति । महत इतरैः कर्तुमशक्यत्वान्नियमाद्विहिताचरणात् । तथा च महान् इतरैः कर्तुमशक्यो नियमो यस्मिन्निति निर्वचनं सूचयति । सुखोन्नतिः मुक्तौ तारतम्योपेतसुखाभिव्यक्तिर्भवतीति शेषः । नन्वेवं देवानां निवृत्तकर्मकर्तृत्वप्रसिद्धिविरोधः कथमित्यत उक्तम् ॥ केचिदिति । उतशब्दोऽ-वधारणे । निवृत्तमित्येवाहुरित्यन्वयः । अस्मिन्पक्षे निष्कामं ज्ञानपूर्वं तु निवृत्तमिति स्मृत्युक्तं निवृत्तलक्षणं बोध्यम् । न तु मोक्षोद्देशेन क्रियमाणमिति ॥ ततश्चायं श्लोकार्थः ॥ अपि यद्यपि वेदे प्रवृत्तं निवृत्तमित्युभयलिङ्गमुभयविधलक्षणं कर्म । विविच्याश्रितं प्रतिपादितमिति ऋतं सत्यम्। ऋतं सत्यं यथा स्यात्तथाऽऽश्रितं प्रतिपादितमिति वा । स्वर्गादिमोक्षेतरकामनया क्रियमाणं कर्म प्रवृत्तं मुक्तीच्छया क्रियमाणं तु निवृत्तमिति । तथाऽपि यथा तद्वयं प्रवृत्तनिवृत्तरूपं द्वयं कर्म युगपद्भावो यौगपद्यं यौगपद्येनेकस्मिन्कर्तरि विरोध्यसंभावितम् । किन्तु भिन्नाधिकारिकम् । एकाधिकारिणि नास्तीति यावत् । तथाऽऽब्रह्मणि आ सम्यग्विज्ञातं ब्रह्मा येन स आब्रह्मा ब्रह्मज्ञानी देवस्तस्मिन्द्वयमुक्तलक्षणं प्रवृत्तं निवृत्तं च कर्म नर्च्छति न गच्छति । तस्य तदुभयभिन्नमहानियमाख्यैककर्माधिकारित्वात् । हरश्च देवोत्तमस्तत्रैवाधिकृतोऽतो लुप्तक्रियायेत्यादिकं त्वदीयनिन्दनादिकमज्ञानमूलकमित्याशयः ॥ २० ॥

**मा वः पदव्यः पितरस्मदास्थिता**
**या यज्ञशालासनधूमवर्त्मनाम् ।**
**कदन्नतृप्तैरसुभृद्भिरीडिता**
**अव्यक्तलिङ्गा अवधूतसेविताः ॥ २१ ॥**

**प्रकाशिका –** एवं वेदोक्तोभयकर्माधिकारो देवानामस्माकं नास्तीत्युक्त्वेदानीं भवतोऽस्मदधिकृतकर्माधिकारो नास्तीत्याह ॥ माव इति । हे पितः । अस्मदास्थिता अस्मदधिकृता अवधूतैरेकान्तभक्तैः सेविता अव्यक्तलिङ्गा अन्यैरज्ञातलक्षणा याः पदव्यः कर्ममार्गास्ता वो युष्माकं मा नैव योग्याः । तर्हि कीदृश्यो योग्या इत्यत आह ॥ यज्ञशालेति । यज्ञशालायामासनेन दीक्षालक्षणेन धूमवर्त्मनां धूमादिमार्गो येषां ते तथोक्तास्तेषां वो युष्माकं कदन्नेन पशुमांसभक्षणेन तृप्तैरसुभृद्भिः प्राणिभिरीडिता यास्ता एव पदव्यो वो युष्माकं योग्याः । यद्यपि दक्षो देवस्तथाऽपि प्रारब्धकर्मवशात्प्रवृत्तकर्मनिष्ठ इत्यभिप्रायेणेदमिति ज्ञातव्यम् ॥ २१ ॥

**एतेन देहेन हरे कृतागसो**
**देहोद्भवेनालमलं कुजन्मना ।**
**व्रीडा ममाभूत् कुजनप्रसङ्गतः**
**तज्जन्मधिग् यन्महतामवद्यकृत् ॥ २२ ॥**

**प्रकाशिका –** किं बहुनोक्तेनेमं देहं सर्वथा त्याज्यमेवेत्याह ॥ एतेनेति द्वाभ्याम् । हरे रुद्रे कृतागसः कृतापराधस्य तव देहोद्भवेन दैत्याज्जातेन कुजन्मना कुत्सितोत्पत्तिना । एतेन देहेनालमलमिति द्विरुक्तिर्वैराग्योत्कर्षात् । कुत एवं तव वैराग्यमित्यत आह ॥ व्रीडेति । कुजनप्रसंगात् कुत्सितश्चासौ जनश्च कुजनो भवादृशस्तस्य प्रसङ्गतो जन्यजनकसंबन्धकथालक्षणस्तस्मात् । निमित्तान्तरं चाह ॥ तज्जन्मेति । यन्महतामवद्यकृद्दुःखकारि तज्जन्म धिगित्यर्थः ॥ २२ ॥

**गोत्रं त्वदीयं भगवान् वृषध्वजो**
**दाक्षायणीत्याह यदा सुदुर्मनाः ।**
**व्यपेतनर्मस्मितमाशु ताव-**
**दुत्स्रक्ष्य एतत्कुणपं त्वदङ्गजम् ॥ २३ ॥**

**तात्पर्यम् – 'यदि देवाश्च ऋष्याद्या निन्द्यन्ते यत्र कुत्रचित् । न तावता गुणैर्हीनाः स्थितप्रज्ञा हि ते मताः । यथायोग्यं तु तात्पर्यं निन्दाया अन्यदेव त्वि'ति गारुडे ॥ २३ ॥**

**प्रकाशिका –** स्वजन्मनो महद्दुःखकारित्वं दर्शयंत्याह ॥ गोत्रमिति । भगवान्वृषध्वजो यदाह हे दाक्षायणीति त्वदीयं गोत्रं त्वत्संबन्धवाचकं नामाह गृह्णाति । तदा व्यपेतनर्मस्थितमपगतनर्मवचनयुक्तमन्दहासो यथा भवति सुदुर्मना अतिदुःखितचित्तो भवति । तत्तस्मादहं त्वदंगजं तव शरीरादुत्पन्नमेतत्कुणपं कुत्सितशरीरमुत्स्रक्ष्ये ॥

अस्मिन्प्रकरणे दक्षेण रुद्रनिन्दा कृता तथा सत्या दक्षनिन्दा नन्दीश्वरेण च भृग्वादिनिन्दाकृता ते चामोघवचनाः । अतो निंद्यानां रुद्रादीनां गुणहानिः प्राप्तेत्यतोऽत्राभिप्रायं प्रमाणेनैव दर्शयति ॥ यदीति । आदिपदेन रुद्रपार्षदानां ग्रहणम् । यत्रकुत्रचिद्ग्रन्थे । हि यस्मात्स्थितप्रज्ञाः क्लृप्तज्ञानादिमन्तः । तर्हि निन्दायाः क्व तात्पर्यमित्यत उक्तम् ॥ यथायोग्य-मिति । तात्पर्यं कल्प्यमिति शेषः । निन्दाया दोषवचनस्यान्यदेव तु । आपाततः प्रतीतार्थादिति शेषः । यत्रोत्तमेनाधमनिन्दा क्रियते तत्राधमशिक्षायामेव तात्पर्यम् । न प्रतीतार्थे । यत्र वाऽधमेन देवाद्युत्तमनिन्दा क्रियते तत्र निन्दारूपवचनस्य तदाविष्टासुरकर्तृत्वेनामोघत्वम् । अतो न तेन निन्द्यानां गुणहानिरित्यादिरूपतात्पर्यं यथायोग्यं कल्प्यमित्यर्थः ॥ २३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पञ्चमोऽध्यायः ।

**मैत्रेय उवाच —**

**इत्यध्वरे दक्षमनूद्य शत्रुहन्**
**क्षितावुदीचीं निषसाद शान्तवाक्**
**स्पृष्ट्वा जलं पीतदुकूलसंवृता**
**निमील्य दृग् योगपथं समाविशत् ॥ १ ॥**

**प्रकाशिका –** ॥ हरिः ॐ ॥ अध्वरे यज्ञसदसि दक्षं प्रत्यनूद्य । तदीयदोषानिति शेषः । उदीचीं दिशमुद्दिश्य । उदङ्मुखीति यावत् । क्षितौ निषसादेत्यन्वयः । हे शत्रुहन् बाह्यान्तर-शत्रुघातिन् । शान्तवाग्गृहीतमौना । जलं स्पृष्ट्वाऽऽचम्य पीतदुकूलेन संवृता छन्ना सती । दृक् दृशौ निमील्य निमीलनयुक्तदृग्वा योगपथं देहोत्क्रमणमार्गम् ॥ १ ॥

**कृत्वा समानावनिलौ जितासना**
**सोदानमुत्थाप्य च नाभिचक्रतः ।**
**शनैर्हृदि स्थाप्य धियोरसि स्थितं**
**कण्ठाद् भ्रुवोर्मध्यमनिन्दिताऽनयत् ॥ २ ॥**

**प्रकाशिका –** तमेव विशदयति ॥ कृत्वेति । जितासना देहचलनरहिता सती । अनिलौ प्राणापानावूर्ध्वाधोवृत्तिकरौ । समानौ तद्रहितावेकरूपौ नाभिचक्रे कृत्वा ततः उदानं सुषुम्ना-संचारिणमुत्थाप्य शनैः उद्वेगं विना धिया योगमार्गज्ञानेन हरिबुद्ध्या वा उरसि स्थाप्य हृदिस्थितं कण्ठात् कण्ठमार्गेण भ्रुवोर्मध्यमनयत् ॥ २ ॥

**एवं स्वदेहं महतां महीयसा**
**मुहुः समारोपितमङ्कमादरात् ।**
**जिहासती दक्षरुषा मनस्विनी**
**दधार गात्रेष्वनिलाग्निधारणम् ॥ ३ ॥**

**प्रकाशिका –** महतामिन्द्रादीनां महीयसा महत्तमेन रुद्रेणादरान्मुहुः शश्वदंकमारोपितं स्वदेहम्। अनेन तद्देहस्य त्यागायोग्यत्वं दर्शयति । जिहासती त्यक्तुमिच्छती सा सती दक्षरुषा दक्षविषयककोपेन मदीयदेहसंस्कारायापि तदीययत्नो मास्त्विति बुद्ध्या गात्रेषु करचरणाद्यवयवेषु स्वदेहभस्मीकरणायानिलाग्निधारणं वाय्वग्निस्थतन्नामहरिध्यानं दधार चकार ॥ ३ ॥

**ततः स्वभर्तुश्चरणाम्बुजासवं**
**जगद्गुरोश्चिन्तयती न चापरम् ।**
**ददर्श देहे हतकल्मषा सती सद्यः**
**प्रजज्वाल समाधिजाग्निना ॥ ४ ॥**

**तात्पर्यम् – न चापरं तस्मादवरं न चिन्तयती । परन्तु विष्ण्वादिकं चिन्तयती चशब्दात् । 'रुद्रं च ब्रह्मवायू च विष्णुं चैव श्रियं गिरम् । उमा चिन्तयती देहं तत्याजान्यं न चास्मरदि'ति तत्त्वनिर्णये ॥ ४ ॥**

**प्रकाशिका –** ततो वाय्वग्निधारणानन्तरं सती ज्ञानोपदेष्टृत्वेन जगत इन्द्रादेर्गुरोराचार्यस्य स्वभर्तुः शिवस्य चरणांबुजासवं तद्ध्यानजनितानन्दरूपं मकरन्दं चिन्तयत्यास्वादयती देहे स्वमनस्यपरमवरं न ददर्श । ततो हतकल्मषा ध्यानपूर्वकदेहत्यागलक्षणप्रायश्चित्तेनापगत-गुरुनिन्दाश्रवणजनितदोषा । जातेति शेषः । देहं तत्याजेति वाक्यशेषः । देहश्च सद्यस्त्यागा-नन्तरमेव वाय्वग्निध्यानरूपसमाधिना जातो योऽग्निस्तेन प्रजज्वाल प्रज्वलितोऽभूत् । शिवादपरं न चिन्तयतीत्युक्त्या विष्ण्वादिचिन्तनमपि तस्या निषिद्ध्यत इति भाति । अतोऽत्र विवक्षितमर्थं दर्शयति ॥ न चेति । तथा चापरशब्दोऽवरपरोऽत्र विवक्षितो न त्वन्यपर्याय इत्यर्थः । कुत इत्यतोऽत्र चशब्दसूचितमर्थं दर्शयति ॥ परं त्विति । उत्तममित्यर्थः । चशब्दादुत्तमं चिन्तयतीति अवगम्यत इति शेषः । अन्यथा चशब्दो व्यर्थः स्यादिति बाधकमनेनोक्तमिति ज्ञातव्यम् । अत्र प्रमाणसंवादमपि दर्शयति ॥ रुद्रं चेति । अत्र रुद्रशब्देन शेषगरुडावप्युपलक्षणीयौ । गिरं सरस्वतीं चेत्येतानेव चिन्तयती । अन्यं नीचं न चास्मरत् । स्वामित्वेन नैव ध्यातवतीत्यर्थः । ततश्च मूले चशब्दोऽनुक्तसमुच्चायकः । तेन विष्ण्वादिचरणांबुजमपि चिन्तयती । अपरं नीचमिन्द्रादिकं स्वस्वामित्वेन न चिन्तितवती । विष्ण्वादीन्देहे मनसि ददर्शेति व्याख्यानं सूचयति ॥ ४ ॥

**तत् पश्यतां खे भुवि चाद्भुतं महत्**
**हाहेति वादः सुमहानजायत ।**
**हन्त प्रिया दैवतमस्य देवी**
**जहावसून् केन सती प्रकोपिता ॥ ५ ॥**

**प्रकाशिका –** तद्देहत्यागमद्भुतं पश्यतामभवत् । खे भुवि च विद्यमानानां पश्यतां जनानाम् । तमेवाह ॥ हन्तेति । हन्तेति विषादे । देवतमस्य पूज्यतमस्य प्रिया । केन दक्षेण ॥ ५ ॥

अहो त्वनार्यं महदस्य पश्यत
प्रजापतेर्यस्य चराचराः प्रजाः ।
जहावसून् यद्विमताऽऽत्मजा सती
मनस्विनी मानमभीक्ष्णमर्हती ॥ ६ ॥

**प्रकाशिका –** अनार्यं मूर्खकर्म । अनात्म्यमिति पाठे जाड्यमित्यर्थः । प्रजापतेर्दक्षस्य । चराचराः प्रजा यस्य वशे यस्य सन्ततिप्रसूता इति वा । यद्विमता येनावज्ञाता ॥ ६ ॥

सोऽयं दुर्मर्षहृदयो ब्रह्मबन्धु-
र्लोकेऽपकीर्तिं महतीमवाप्स्यति ।
यदङ्गजां स्वां पुरुषद्विडुद्यतां
न प्रत्यषेधन्मृतयेऽपराधतः ॥ ७ ॥

**प्रकाशिका –** य एतादृशमनार्यमकार्षीत्सोऽयं दुर्मर्षहृदयो दुःसहचित्तोऽत एव ब्रह्मबन्धु-र्द्विजाधमः पुरुषं शिवं द्वेष्टीति पुरुषद्विट् स्वां स्वीयामङ्गजां सुतामपराधतः स्वकर्तृकावज्ञान-रूपान्मृतये मरणायोद्यतां प्रयतमानां न प्रत्यषेधन्न निवारितवान् ॥ ७ ॥

दक्षस्तु दृष्ट्वा दुहितुः स्वनिमित्तं विनाशनम् ।
बह्वतप्यत घोरेण मयाऽसाधु कृतं बत ॥ ८ ॥

**प्रकाशिका –** घोरेण क्रोधाविष्टेन ॥ ८ ॥

धिङ् मामविजितात्मानं निर्गुणं निरपत्रपम् ।
योऽहं स्वीकृत्य मृतकं व्यर्थमेनो महीयसि ॥ ९ ॥

**प्रकाशिका –** निर्गुणं शमादिगुणरहितम् । मृतकं मरणस्वभावं देहम् । महीयसि रुद्रे एनोऽपराधमकार्षम् ॥ ९ ॥

वदत्येवमजे सत्या दृष्ट्वाऽसुत्यागमद्भुतम् ।
दक्षं सुपार्षदा हन्तुमुदतिष्ठन्नुदायुधाः ॥ १० ॥
तेषामापततां वेगं निशाम्य भगवान् भृगुः ।
यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ॥ ११ ॥

**प्रकाशिका** – यज्ञघ्ना यज्ञविनाशकास्तान्हन्तीति यज्ञघ्नस्तेन यजुषा अपहता रक्षांसि इत्यादिना ॥ ११ ॥

**अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा ।**
**ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः ॥ १२ ॥**

**तैरलातायुधैः सर्वे प्रमथाः सहगुह्यकाः ।**
**हन्यमाना दिशो भेजुरुशद्भिर्ब्रह्मतेजसा ॥ १३ ॥**

**प्रकाशिका** – ये तपसा सोमं प्राप्ता ऋभवो नाम देवास्तेंऽजसा सामर्थ्येन । ब्रह्मतेजसा ब्राह्मणसामर्थ्येनोशद्भिर्भृगोरिष्टं कर्तुमिच्छद्भिर्देदीप्यमानैरिति ॥ १३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः ।

**मैत्रेय उवाच —**

**भवो भवान्या निधनं प्रजापतेरसत्कृताया ह्यवगम्य नारदात् ।**
**स्वपार्षदसैन्यं च तदध्वरेशैर्विद्रावितं क्रोधमपारमादधे ॥ १ ॥**

**प्रकाशिका –** ॥ हरिः ॐ ॥ प्रजापतेः प्रजापतिना दक्षेणासत्कृताया अवमानितायास्तस्य दक्षस्याध्वरस्येशत इति तदध्वरेशा भृग्वादयैस्तैः ॥ १ ॥

**क्रुद्धः सुदष्टोष्ठपुटः स धूर्जटिर्जटां तटिद्वह्निसटोग्ररोचिषम् ।**
**उत्कृत्य रौद्रः सहसोत्थितो हसन् गम्भीरनादो विससर्ज तां भुवि ॥ २ ॥**

**प्रकाशिका –** सुदष्टे ओष्ठपुटे यस्य स तथा । स धूता जटा अस्य सन्तीति धूर्जटी रुद्रो रौद्रः क्रूरः सन् मध्यान्हातप इव तीक्ष्णः । आतपः कथ्यते रौद्र इति हलायुधः । जटामुत्कृत्योत्पाट्योत्थितः सन् तां भुवि विससर्ज । हसन् अपहासं कुर्वन् । कथंभूतां जटाम् । तटिद्वह्निसटां वैद्युताग्निज्वाला तद्वदुग्रं रुचिर्यस्याः सा तथोक्ता ताम् ॥ २ ॥

**ततोऽतिकायस्तनुवा स्पृशन् दिवं सहस्रबाहुर्घनरक्तसूर्यदृक् ।**
**करालदंष्ट्रोज्वलदग्निमूर्धजः कपालमाली विविधोद्यतायुधः ॥ ३ ॥**

**प्रकाशिका –** ततो जटायाः सकाशादतिकायः । वीरभद्रो जात इति शेषः । तनुवा तन्वा शरीरेण घनरक्तः सांद्रारुणः स चासौ सूर्यश्च घनरक्तसूर्यस्तद्वद्दृशो यस्य स तथा । ज्वलदग्निरिव मूर्धजाः केशा यस्य । कपालसमूहनिर्मितमालायुक्तः । विविधान्युद्यतान्यायुधानि यस्य ॥ ३ ॥

**तं किं करोमीति गृणन्तमाह बद्धाञ्जलिं भगवान् भूतनाथः ।**
**दक्षं सयज्ञं जहि मद्भटानां त्वमग्रणी रुद्र जटांशको मे ॥ ४ ॥**

**प्रकाशिका –** हे रुद्र । जटा जनिका यस्य रुद्रजटासंभूतमद्भटाग्रणीत्वे हेतुर्यतो मे जटांशको मदंशावतारः ॥ ४ ॥

**आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे विभुम् ।**
**मेने तदाऽऽत्मानमसङ्गरंहसं सहीयसां तात सहः सहिष्णुम् ॥ ५ ॥**

**प्रकाशिका** – मन्युना रुद्रेण नमस्ते रुद्रमन्यव इति श्रुतेः । परिचक्रमे प्रदक्षिणं चकार । असंगरंहसं क्वाप्यसक्तवेगम् । हे तात विदुर । सहीयसां सहनशक्तिमतां सहः सहनशक्तिं सहिष्णुं सोढुमात्मानं मेने । भृग्वादिऋत्विक्सामर्थ्यमप्यकिञ्चित्करमिति ज्ञातवानित्याशयः ॥ ५ ॥

**अन्वीयमानः स तु रुद्रपार्षदैर्भृशं नदद्भिर्व्यनदत् सुभैरवम् ।**
**उद्यम्य शूलं जगदन्तकान्तकं सम्प्राद्रवद् घोषणभूषणाङ्घ्रिः ॥ ६ ॥**

**प्रकाशिका** – सुभैरवं भयङ्करं यथा भवति तथा व्यनदत् । जगदन्तको यमस्तस्याप्यन्तकम् । घोषणं शब्दनशीलं भूषणं नूपुरलक्षणमंघ्र्योर्यस्य ॥ ६ ॥

**अथर्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुम् ।**
**तमः किमेतत् कुत एतद् रजोऽभूदिति द्विजा द्विजपत्न्यश्च दध्युः ॥ ७ ॥**

**प्रकाशिका** – उदीच्यां ककुभि दिशि । किमूशब्द आक्षेपार्थः एतत्तमः किं नैव किन्तु रज एवेति निश्चित्यैतद्रजः कुतोऽभूदिति दध्युश्चिन्तयामासुः ॥ ७ ॥

**वाता न वान्ति न हि सन्ति दस्यवः प्राचीनबर्हिर्जीवति होग्रदण्डः ।**
**गावो न काल्यन्त इदं कुतो रजो लोकोऽधुना किं प्रलयाय कल्पते ॥ ८ ॥**

**प्रकाशिका** – चिन्ताप्रकारमेवाह ॥ वाता इति । दस्यूनामभावे निमित्तमाह ॥ प्राचीन-बर्हिरिति । उग्रो दण्डो यस्य स प्राचीनबर्हिर्नाम तदानीन्तनो राजा जिवति सप्राणो वर्तते। हेति खेदे । न काल्यन्ते न शीघ्रं नीयन्ते ॥ ८ ॥

**प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचुर्विपाको वृजिनस्यैव तस्य ।**
**यत्पश्यतीनां दुहितॄणां प्रजेशः सुतां सतीमवदध्यावनागसाम् ॥ ९ ॥**

**प्रकाशिका** – मिश्रशब्दो मुख्यार्थे वर्तते । प्रसूतिर्दक्षभार्या मिश्रा या मुख्या यासां ताः । विपाकः फलम् । पश्यतीनामिति तस्या दुःखाधिक्योपपादनायोक्तम् । अवदध्यावज्ञातवानिति यद्वृजिनं तस्येत्यन्वयः ॥ ९ ॥

**यस्त्वन्तकाले व्युप्तजटाकलापः स्वशूलसूच्यर्पितदिग्गजेन्द्रः ।**
**वितत्य नृत्यत्युदितास्त्रदोर्ध्वजो रूक्षाट्टहासः स्तनयित्नुभिन्नदिक् ॥ १० ॥**

**प्रकाशिका** – न केवलं रुद्रसैन्यागमनं सत्यवज्ञाजनितवृजिनफलं किन्तु रुद्रावज्ञानिमित्त-मपीत्याशयेन रुद्रमाहात्म्यं वर्णयन्त्य आहुः ॥ यस्त्विति द्वाभ्यां श्लोकाभ्याम् । व्युप्तजटाकलापः प्रसारितजटासमूहः स्वशूलसूचि स्वशूलाग्रं तत्रार्पिताः प्रोता दिग्गजेन्द्रा यस्य । उदितान्युद्युक्तान्यस्त्राण्यायुधानि येषु ते उदितास्त्रास्ते च ते दोषो भुजास्त एव ध्वजो दोर्ध्वजो यस्य स तथोक्तः । बाहून्वितत्य विस्तृत्य नृत्यति । रूक्षाट्टहासः कठोरसिंहनादः स एव स्तनयित्नु प्रलयकालीनमेघनादस्तेन भिन्ना विदारिता दिशो येन स तथोक्तः । भिन्नदृगिति पाठे भिन्ना व्यक्ता विलक्षणा दृग्यस्येति व्याख्येयम् ॥ १० ॥

**अमर्षयित्वा तमसह्यतेजसं मन्युप्लुतं दुर्विषहं भ्रुकुट्या ।**
**करालदंष्ट्राभिरुदस्तभागणं स्यात् स्वस्ति किं कोपयतो विधातुः ॥ ११ ॥**

**प्रकाशिका** – अमर्षयित्वाऽसहनयुक्तं कृत्वा मन्युप्लुतं क्रोधव्याप्तं दंष्ट्राभिरुदस्तं निरस्तो भागणः सूर्यादिप्रभासमूहो यस्य । एतादृशं कोपयतो विधातुः प्रजापतेर्दक्षस्य स्वस्ति स्यात्किं न स्यादेव ॥ ११ ॥

**बह्वेवमुद्विग्नदृशोच्यमाने जनेन दक्षस्य मखे महात्मनः ।**
**उत्पेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्यक् ॥ १२ ॥**

**प्रकाशिका** – बहु यथा भवति तथोद्विग्नदृशा प्रचलितनेत्रेण जनेनोच्यमाने सति महात्मनोऽपि दक्षस्य मखे उत्पाततमा महोत्पाताः पर्यक् सर्वतो दिक्षु ॥ १२ ॥

**तावत् स रुद्रानुचरैर्मखो महान् नानाविधैर्वामनकैरुदायुधैः ।**
**पिङ्गैः पिशङ्गैर्मकरोदराननैः पर्याद्रवद्भिर्विदुरान्वरुध्यत ॥ १३ ॥**

**प्रकाशिका** – तावत्तदेव । अविलंबेनेति यावत् । वामनकैर्ह्रस्वशिरोभिरिति वा । पिंगैः कपिलैः पिशंगैः पीतैर्मकरस्यैवोदरमाननं च येषां तैः पर्याद्रवद्भिः परितो धावद्भिरन्वरुद्धय-तावरुद्धः ॥ १३ ॥

**केचिद् बभञ्जुः प्राग्वंशं पत्नीशालां तथाऽपरे ।**
**सद आग्नीध्रशालां च तद्विहारं महानसम् ॥ १४ ॥**

**प्रकाशिका** – यज्ञशालायाः पूर्वपश्चिमस्तंभयोरुपर्यवांतरवंशावलंबनं पूर्वपश्चिमायतं दारु पाग्वंशस्तं यज्ञशालयाः पश्चिमतः पत्नीशाला यज्ञशालायाः पुरतः स्थितं मण्टपं सदः सदसः

पुरतो हविर्धानी तस्योत्तरतोऽग्नीध्रशाला पशुविशसनस्थानम् । तद्विहारं यजमानस्य गृहं महानसं पाकस्थानम् ॥ १४ ॥

**रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् ।**
**कुण्डेष्वमूत्रयन् केचिद् बिभिदुर्वेदिमेखलाः ॥ १५ ॥**
**अबाधन्त मुनीनन्य एके पत्नीरतर्जयन् ।**
**अपरे जगृहुर्देवान् प्रत्यासन्नान् पलायितान् ॥ १६ ॥**

**प्रकाशिका** – रुरुजुर्बभंजुः । रुज भंग इति धातुः । उत्तरवेद्याया मेखलाः सीमासूत्राणि ॥ १५,१६ ॥

**भृगुं बबन्ध मणिमान् वीरभद्रः प्रजापतिम् ।**
**चण्डीशः पूषणं देवं भगं नन्दीश्वरोऽग्रहीत् ॥ १७ ॥**

**प्रकाशिका** – मणिमान्कश्चिद्गणनाथः प्रजापतिं दक्षं चण्डीशश्चण्डेश्वरः ॥ १७ ॥

**सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः ।**
**तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाऽद्रवन् ॥ १८ ॥**

**प्रकाशिका** – ऋत्विजो दृष्ट्वा सर्वे एव सदस्या ग्रावभिरर्द्यमाना नैकधाऽद्रवन् दुद्रुवुः ॥ १८ ॥

**जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान् भवः ।**
**भृगोर्लुलुञ्चे सदसि योऽहसत् श्मश्रु दर्शयन् ॥ १९ ॥**

**प्रकाशिका** – स्रुवो हस्ते यस्य । भवो वरिभद्रो लुलुण्ठे उत्पाटयामास । लुञ् छेदन इति धातुः । विश्वसृजां सदसि ॥ १९ ॥

**भगस्य नेत्रे भगवान्पतितस्य रुषा भुवि ।**
**उज्जहार सदस्थोऽक्ष्णा यः शपन्तमसूचयत् ॥ २० ॥**

**प्रकाशिका** – उज्जहारोद्धृतवान् । सदस्थः सभायां स्थितः सन् । शपंतं शिवनिन्दां कुर्वन्तं दक्षमक्ष्णाऽक्षिव्यापारविशेषेणासूचयत्प्रेरितवान् ॥ २० ॥

**पूष्णश्चापातयद् दन्तान् कलिङ्गस्य यथा बलः ।**
**शप्यमाने गरिमणि योऽहसद् दर्शयन् दतः ॥ २१ ॥**

**प्रकाशिका** – कलिङ्गस्य दंतवक्रस्य बलो बलभद्रो भृगुणा गरिमणि गुरुतमे रुद्रे शप्यमाने निंद्यमाने सति यः पूषा दतो दन्तान्दर्शयन् अहसत्तस्य ॥ २१ ॥

**आक्रम्योरसि दक्षस्य शितधारेण हेतिना ।**
**छिन्दन्नपि तदुद्धर्तुं नाशक्नोत् त्र्यम्बकस्तदा ॥ २२ ॥**

**प्रकाशिका** – आकम्य पादं संस्थाप्य सितधारेण तीक्ष्णाग्रेण हेतिना खड्गरूपेण । शिर इति शेषः । छिन्दन्नपि तच्छिर उद्धर्तुं छेत्तुम् । त्रीण्यंबकानि नेत्राणि यस्य स तथा । स वीरभद्रः ॥ २२ ॥

**शस्त्रैरस्त्रान्वितैरेनमनिर्भिण्णत्वचं हरः ।**
**विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ॥ २३ ॥**

**प्रकाशिका** – अस्त्रान्वितैर्मन्त्रसहितैर्न निर्भिन्नत्वक् यस्य तं तथाभूतम् । दृष्ट्वेति शेषः । पशुपतिर्वीरभद्रो दध्यौ स्वमूलरूपं स्मृतवान् । अनन्तरं स मूलरूपी पशुपतिस्तत्रागत्य दध्यौ युद्धं यज्ञं यथा स्यात्तथा मनसा चिन्तितवान् ॥ २३ ॥

**दृष्ट्वा सञ्ज्ञपने योगं पशूनां स पतिर्मखे ।**
**यजमानपशोः कस्य कायात् तेनाहरच्छिरः ॥ २४ ॥**

**प्रकाशिका** – तत्र दक्षं पशुतया संकल्प्य तत्संज्ञपने हिंसने योगं मन्त्रपूर्वककण्ठ-निष्पीडनादिरूपमुपायं दृष्ट्वा मखे यज्ञे यजमानपशोः पशुत्वेन कल्पितस्य यजमानस्य कस्य दक्षस्य तेन योगेन ॥ २४ ॥

**साधुवादस्तदा तेषां कर्म तत् तस्य शंसताम् ।**
**भूतप्रेतपिशाचानामन्येषां तद्विपर्ययः ॥ २५ ॥**

**प्रकाशिका** – अन्येषां दक्षपक्षिणां तद्विपर्ययोऽसाधुवादः । अभूदिति शेषः ॥ २५ ॥

**जुहावैतच्छिरस्तस्य दक्षिणाग्नावमर्षितः ।**
**तद् देवयजनं दग्ध्वा प्रातिष्ठद् गुह्यकालयम् ॥ २६ ॥**

**तात्पर्यम्** – **'वीरभद्राख्यरूपेण स्वेन पूर्वं ययौ हरः । मूलरूपेण पश्चात्तु गत्वा दक्षमथावधीत् । तत्रोपेन्द्रेण हरिणा जितो धर्मात्मजेन च । अन्याङ्गिगाय प्रययौ कैलासं स्वं निकेतनमि'ति ब्राह्मे ॥ २६ ॥**

**प्रकाशिका –** मन्त्रादिबंधात्पुनरेवं तच्छिरःसन्धानं करिष्यतीत्याशयेनैतच्छिरो दग्धमित्याह ॥ जुहावेति । देवयजनं यज्ञं विनाश्य दग्ध्वा तत्रत्यान्सर्वान् । जित्वेति यावत् । गुह्यकालयं कैलासम् । अत्र दृष्ट्वा संज्ञपने योगं पशूनां पतिरित्येतदुक्तरीत्या रुद्रमूलरूपपरतयैव योज्यम् । न वीरभद्रपरतयेत्याशयेनात्र प्रमाणसंवादमाह ॥ वीरभद्रेति । ययौ दक्षाध्वरदेशमिति शेषः । तु शब्दोऽवधारणे । मूलरूपेणैव । तद्देवयजनं दग्ध्वेत्यनेन तत्रत्यसर्वजयः प्रतीयते । तत्रोपेन्द्रस्य धर्मपुत्रस्य नारायणस्य च सत्त्वात्तदुभयजयो बाधितोऽतस्तदतिरिक्तसर्वजय एव व्याख्येय इत्याशयेन प्रमाणशेषं पठति ॥ तत्रेति । धर्मात्मजेन नरसखेन नारायणेन जितः पराजितः । गुह्यकालयमित्यस्य तात्पर्यम् ॥ कैलासमिति । तत्रापि प्रदेशविशेषसूचनाय ॥ स्वं निकेतनमिति ॥ २६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे षष्ठोऽध्यायः ॥ ३ ॥

## अथ सप्तमोऽध्यायः ।

**मैत्रेय उवाच —**

**अथ देवगणाः सर्वे रुद्रानीकैः पराजिताः ।**
**शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः ॥ १ ॥**

**प्रकाशिका** – ॥ हरिः ॐ ॥ अथ देवगणाः स्वयंभुवे न्यवेदयन्नित्यन्वयः । रुद्रस्यानीकैः सैन्यैः पार्षदैरित्यर्थः ॥१॥

**संच्छिन्नभिन्नसर्वाङ्गाः सर्त्विक्सभ्याः समाकुलाः ।**
**स्वयंभुवे नमस्कृत्य कार्त्स्न्येनैतन्न्यवेदयन् ॥ २ ॥**

**प्रकाशिका** – शूलादिभिः सञ्छिन्नानि द्विधाकृतानि भिन्नानि विदारितानि भङ्गानि येषामृत्विग्भिः सभ्यैश्च सह वर्तमाना सर्त्विक्सभ्या एतद्वृत्तम् ॥ २ ॥

**उपलभ्य पुरैवैतद् भगवानब्जसम्भवः ।**
**नारायणश्च विश्वात्मा न कस्याध्वरमीयतुः ॥ ३ ॥**

**तात्पर्यम् – त्रिमूर्तिगेन रूपेण नारायणो नाययौ ॥**

**प्रकाशिका** – एतद्भाविकार्यं पुरैवोपलभ्य ज्ञात्वाऽब्जसंभवो ब्रह्मा नारायणश्च कस्य दक्षस्याध्वरं नेयतुर्न जग्मतुः । अत्र नारायणस्य दक्षाध्वरं प्रत्यगमनमुदाहृतब्राह्मवचनविरुद्धम् । तत्र धर्मसूनोर्नारायणस्य दक्षाध्वरगतत्वस्योक्तत्वाद्यज्ञनाशो न संभवतीत्यतोऽत्र विवक्षिततात्पर्यं दर्शयति ॥ त्रिमूर्तिगेनेति । त्रिमूर्तिगेन रूपेण विष्णुनाम्ना । नारायणो मूलरूपी विश्वात्मा विश्वव्यापी विष्णुरूपी सन्निति व्याख्येयमिति भावः ॥ ३ ॥

**तदाकर्ण्य विभुः प्राह तेजीयसि कृतागसाम् ।**
**क्षेमाय भूयसे भूयान्न प्रायेण बुभूषताम् ॥ ४ ॥**

**प्रकाशिका** – विभुर्ब्रह्मा तेजीयसि वरिष्ठे पुरुषे कृतागसां कृतापराधानां प्राणिनां तदागो भूयसे क्षेमाय मोक्षाय च न भूयात्प्रायेण । दुर्योधनादिव्यावृत्त्यर्थं प्रायेणेति । बुभूषतां मुमुक्षूणां तु नैव भूयादित्यर्थः ॥ ४ ॥

**अथापि यूयं कृतकिल्बिषा भवे ये बर्हिषो भागभाजं परादुः ।**
**प्रसादयध्वं परिशुद्धचेतसा क्षिप्रप्रसादं प्रगृहीताङ्घ्रिपद्माः ॥ ५ ॥**

**प्रकाशिका** – यूयं भवे यद्यपि कृतकिल्बिषाः । अथाऽपि प्रसादयध्वं क्षमापयत । कथं कृत-किल्बिषा इत्यत उक्तं ये बर्हिषो यज्ञस्य भागभाजं स्वविहितांशं भजन्तं परादुर्दूरादेव खण्डित-वन्तः । प्रगृहीतांघ्रिपद्मास्तदीये पादपद्मे प्रगृह्येत्यर्थः ॥ ५ ॥

**आशासाना जीवितमध्वरस्य लोकः सपालः कुपिते न यस्मिन् ।**
**तमाशु देवं प्रियया विहीनं क्षमापयध्वं हृदि विद्धं दुरुक्तैः ॥ ६ ॥**

**प्रकाशिका** – न केवलं यज्ञभागप्रदानं तदीयकोपकारणं किन्तु निमित्तान्तरमप्यस्तीति वदन्प्रस्तुतयज्ञोज्जीवनाय तत्क्षमापनमावश्यकमित्याशयेन पुनस्तत्क्षमापनं विधत्ते ॥ आशासाना इति । अध्वरस्य जीवितं पुनःसंधानलक्षणजीवनमाशासाना यूयम् । किं तदीयकोपेनेत्यत उक्तम् ॥ लोक इति । यस्मिन् रुद्रे कुपिते सपाललोको न भवेन्नश्येद्भवतां तु का कथेत्याशयः । प्रियया विहीनमित्येकं कोपकारणम् । दुरुक्तैर्दक्षप्रोक्तैर्हृदिविद्धमित्यपरम् ॥ ६ ॥

**नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम् ।**
**विदुः प्रमाणं बलवीर्ययोर्वा तस्यात्मतन्त्रस्य क उद्बिधित्सेत् ॥ ७ ॥**

**तात्पर्यम् – यज्ञ इन्द्रः । 'यज्ञो यज्ञपतिस्त्विन्द्रः पुरुहूतः पुरुष्टत' इत्यभिधानम् । तस्यात्म-तन्त्रस्य । तस्य विष्णोर्मनोवशस्य । 'नाहं चेन्द्रो न चैवान्ये यत्तत्त्वं न विदुः परम् । तस्य विष्णोर्वशे रुद्रो मम वायोरथापि वा । नान्यस्य कस्यचित्पुंसस्तस्येत्थं वः कुतः कृतमि'ति ब्रह्मवैवर्ते ॥ ७ ॥**

**प्रकाशिका** – इतोऽपि शिवो मुमुक्षुभिर्नाराध्य इत्याह ॥ नाहमिति । अत्र यज्ञशब्दो विष्णुपर इति प्रतीतिवारणाय विवक्षितमर्थं दर्शयति ॥ यज्ञ इति । तत्राभिधानं पठति ॥ यज्ञ इति । इन्द्रो यज्ञादिशब्दैरुच्यत इत्यर्थः । ननु तथाऽप्यहं तस्य तत्त्वं वेद्मीति ब्रह्मणा कथमुच्यत इत्यत आह ॥ तस्येति । तच्छब्दो न रुद्रपरः किन्तु विष्णुपर इत्यभिप्रेत्यात्मतन्त्रस्येत्यस्य प्रकृतोपयुक्तमर्थमाह ॥ तस्येति । रुद्रस्येत्यनेन तस्येति पदमावृत्त्य रुद्रपरत्वेनापि व्याख्येयमिति सूचयति । कुत इत्थं व्याख्येयमित्यतोऽत्र प्रमाणं पठति ॥ नाहमिति । तस्य विष्णोर्वशे रुद्र इत्यनेन तस्यात्मतन्त्रस्येत्येतदुक्ततात्पर्यम् । मम वायोरित्यनेनात्मशब्दो ब्रह्मवायुपरत्वेनापि व्याख्यात इति ज्ञातव्यम् । नान्यस्य कस्यचिदित्यनेनात्मतन्त्रस्येत्येतदनन्याधीनस्येत्यपि व्याख्येयमिति सूचयति । तस्येत्यनेन मूले तस्येत्येतदावर्तनीयमिति सूचयति । वो युष्माभिरित्थं यज्ञभागाप्रदानादिकम् ॥ ततश्चायं श्लोकार्थः ॥ तथा च यस्य विष्णोस्तत्त्वं यथास्थितस्वरूपं

बलवीर्ययोः शरीरबलपराक्रमयोः । वाशब्दश्चशब्दार्थः । प्रमाणं मर्यादां चाहं न वेद्मि । यन्न इन्द्रोऽपि न वेद । युष्मदादयो न विदुः । तस्य विष्णोरात्मतन्त्रस्य मनोवशस्यात्मा ब्रह्मा वायुश्च तन्त्रस्येति वा । आत्मतन्त्रस्य स्वतन्त्रस्योक्तान्विनाऽन्यानधीनस्य रुद्रस्य क उद्विधित्सेत् उत् उच्चमपराधं कर्तुमिच्छेत् । न कोऽपि । अतो युष्माभिः । कुत इत्थं कृतमिति शेषः ॥ ७ ॥

**स इत्थमादिश्य सुरानजस्तु तैः समन्वितः पितृभिः सप्रजेशैः ।**
**ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः ॥ ८ ॥**

**प्रकाशिका** – अजो ब्रह्मा । पुरद्विषो रुद्रस्य ॥ ८ ॥

**जन्मौषधतपोमन्त्रयोगसिद्धैर्नरेतरैः ।**
**जुष्टं किन्नरगन्धर्वैरप्सरोभिर्वृतं सदा ॥ ९ ॥**

**प्रकाशिका** – कैलासं वर्णयति ॥ जन्मौषधिरित्यादिचतुर्दशभिः । जन्मना विशिष्टकुलोत्पत्त्या कृष्णचित्रकाद्यौषधेन कृच्छ्रचान्द्रायणादितपसाऽष्टाङ्गयोगेन मृत्युंजयादिमन्त्रेण सिद्धैः सिद्धिं गतैः । नरेतरैर्मनुष्यजातिरहितैः ॥ ९ ॥

**नानामणिमयैः शृङ्गैर्नानाधातुविचित्रितैः ।**
**नानाद्रुमलतागुल्मैर्नानामृगगणावृतैः ॥ १० ॥**

**प्रकाशिका** – शृङ्गैः रमणं रतिप्रदमित्युत्तरेणान्वयः । कथंभूतैः । नानाविधगैरिकादि-धातुभिर्विचित्रितैः । नानाद्रुमलतागुल्मा येषु ॥ १० ॥

**नानाऽमलप्रस्रवणैर्नानाकन्दरसानुभिः ।**
**रमणं विहरन्तीनां रमणैः सिद्धयोषिताम् ॥ ११ ॥**

**प्रकाशिका** – नानाऽमलानि प्रस्रवणानि येषु नानाकन्दराः सानवश्चोपशृङ्गा येषु रमणैः सह विहरन्तीनां सिद्धयोषितां रमणम् ॥ ११ ॥

**मयूरकेकाभिरुतं मदान्धालिविमूर्च्छितम् ।**
**प्लावितै रक्तकण्ठानां कूजितैश्च पतत्रिणाम् ॥ १२ ॥**

**प्रकाशिका** – मयूराणां केकाभिः स्वनैः रुतं शब्दितम् । मदांधैरलिभिर्विमूर्छितं विविधरागव्याप्तं कृतम् । रक्तकण्ठानां कोकिलानां प्लावितैः प्लुतत्वनीतैः स्वरैरन्यैश्च पतत्रिणां कूजितैः शब्दितम् ॥ १२ ॥

**आह्वयन्तमिवोद्धस्तैर्द्विजैः कामदुघैर्द्रुमैः ।**
**व्रजन्तमिव मातङ्गैर्गृणन्तमिव निर्झरैः ॥ १३ ॥**

**मन्दारैः पारिजातैश्च सरलैश्चोपशोभितम् ।**
**तमालैः सालतालैश्च कोविदारांसनार्जुनैः ॥ १४ ॥**

**प्रकाशिका** – उद्धस्तैरुन्नतशाखैर्द्रुमैर्द्विजैः पक्षिभिराव्हयंतमिव स्थितम् । लोके हस्त-मुत्क्षिप्योच्चैः स्वरेणाव्हानमर्थिनः कुर्वन्ति । अद्रिश्चोपक्षिप्तहस्तस्थानीयैर्द्रुमैः पक्षिस्वनैश्च तथा लक्ष्यत इति भावः । व्रजद्भिर्मातंगैर्व्रजन्तमिव निर्झरैर्निर्झरध्वनिभिर्गृणन्तमिव भाष्यमाणमिव ॥ १३,१४ ॥

**चूतैः कदम्बनीपैश्च नागपुन्नागचम्पकैः ।**
**पाटलाशोकबकुलैः कुन्दैः कुरबकैरपि ॥ १५ ॥**

**प्रकाशिका** – चूताम्रयोरवान्तरभेदमाश्रित्य पृथगुक्तिः । यथा वेणुकीचकयोर्निरंध्रत्वसरं-ध्रत्वभेदेन पृथगुक्तिः । नागैर्नागकेसरैः पुन्नागैर्देववल्लभैः । कुरबकैस्तिलकैः ॥ १५ ॥

**सुवर्णशतपत्रैश्च वीररेणुकजातिभिः ।**
**कुब्जकैर्मल्लिकाभिश्च माधवीभिश्च मण्डितम् ॥ १६ ॥**

**प्रकाशिका** – सुवर्णः कृतमालो वीरः करवीरं रेणुकं केतकीजातपुष्पं मल्लिकाविशेषः । ककुब्जैः कुंकुमपुष्पैः । माधवीभिर्वासन्तीभिः ॥ १६ ॥

**पनसोदुम्बराश्वत्थप्लक्षन्यग्रोधहिङ्गुभिः ।**
**भूर्जैरोषधिभिः पूगैः राजपूगैश्च जम्बुभिः ॥ १७ ॥**

**प्रकाशिका** – हिंगु रामठः । भुजैर्भूजपत्रैरोषधीभिर्जनवृक्षैः ॥ १७ ॥

**खर्जूराम्रातकाम्राद्यैः प्रियालमधुकेङ्गुदैः ।**
**द्रुमजातिभिरन्यैश्च राजितं वेणुकीचकैः ॥ १८ ॥**

**प्रकाशिका** – आम्रातको विडुलः प्रियालो लवंग इंगुदस्तापसतरुः ॥ १८ ॥

**कुमुदोत्पलकह्लारशतपत्रवनर्द्धिभिः ।**
**नलिनीषु कलं कूजत्खगवृन्दोपशोभितम् ॥ १९ ॥**

**प्रकाशिका** – कुमुदादिसमृद्धिभिर्हेतुभूताभिर्नलिनीषु सरःसु कलं मधुरं यथा भवति कूजन्ति यानि खगवृन्दानि पक्षिसमूहस्तैरुपशोभितम् ॥ १९ ॥

**मृगैः शाखामृगैः क्रोडैर्मृगेन्द्रैर्ऋक्षशल्यकैः ।**
**गवयैः शरभैर्व्याघ्रै रुरुभिर्महिषादिभिः ॥ २० ॥**

**प्रकाशिका** – शाखामृगैर्वानरैः । ऋक्षैःभल्लूकैः शल्यकः कण्टकवराहः । गवया वनगावः शरभोऽष्टपादो रुरुर्हरिणः ॥ २० ॥

**कर्णौर्णैकपदाश्वास्यैर्निर्जुष्टं मृगनाभिभिः ।**
**कदलीखण्डसंरुद्धनलिनीपुलिनश्रियम् ॥ २१ ॥**

**प्रकाशिका** – कर्णः कर्णविहीनः कर्णं कर्णविहीनः स्यादित्यभिधानात् । और्णादयोऽपि मृगविशेषाः । कर्णाश्चौर्णाश्चैकपादाश्चाश्वास्याश्च कर्णौर्णैकपदाश्वास्यास्तैः । मृगनाभिभिः कस्तूरिकामृगैः । कदलीषण्डैः संरुद्धान्यावृतानि नलिनपुलिनानि पद्माकरसिकतामयोच्चस्थलानि तेषां श्रीः यस्मिन्स तथा तम् ॥ २१ ॥

**पर्यस्तं नन्दया सत्याः स्नानपुण्यतमोदया ।**
**विलोक्य भूतेशगिरिं विबुधा विस्मयं ययुः ॥ २२ ॥**

**प्रकाशिका** – नन्दया तन्नाम्या गङ्गाशाखया । पर्यस्तं परिवेष्टितम् । कथंभूतया । सत्या भवान्याः स्नानेन पुण्यतममुदकं यस्यां सा तथा तया । भूतेशगिरिं कैलासम् ॥ २२ ॥

**ददृशुस्तत्र ते रम्यामलकां नाम वै पुरीम् ।**
**वनं सौगन्धिकं चापि तत्र तन्नाम पङ्कजम् ॥ २३ ॥**

**प्रकाशिका** – तन्नाम सौगन्धिकनाम ॥ २३ ॥

**नन्दा चालकनन्दा च सरितौ बाह्यतः पुरः ।**
**तीर्थपादपदाम्भोजरजसाऽतीवपावने ॥ २४ ॥**

**प्रकाशिका** – पुरीं वर्णयन्ति ॥ नन्दा चेति चतुर्भिःश्लोकैः । सरितौ पुरः पुरादलकाया बाह्यतो भवतः । तीर्थपादो हरिः । तत्पादरजसा मिश्रितत्वादतीवपावने शुद्धे ॥ २४ ॥

**ययोः सुरस्त्रियः क्षत्तरवरुह्य स्वधिष्ण्यतः ।**
**क्रीडन्ति पुंसः सिञ्चन्त्यो विगाह्य रतिकर्शिताः ॥ २५ ॥**

**प्रकाशिका** – ययोर्विगाह्य प्रविश्य क्रीडन्ति । स्वधिष्ण्यतः स्वविमानात् ॥ २५ ॥

**ययोस्तत्स्नानविभ्रष्टकुचकुङ्कुमपिञ्जरम् ।**
**वितृषोऽपि पिबन्त्यम्भः पाययन्तो गजा गजीः ॥ २६ ॥**

**प्रकाशिका** – पयोऽभसो वितृषो विगततृषोऽपि गजाः पिबन्ति तत्र हेतुः ॥ तत्स्नानेति । तासां सुरस्त्रीणां स्नानेन विभ्रष्टं गलितं मलिनयुक्तकुचकुंकुमं तेन पिञ्जरं पीतवर्णं गजीः करिणीः ॥ २६ ॥

**तारहेममहारत्नविमानशतसङ्कुलाम् ।**
**जुष्टां पुण्यजनस्त्रीभिर्यथा खं सतडिद्घनम् ॥ २७ ॥**

**प्रकाशिका** – तारं रूप्यं मौक्तिकैर्वा हेमभिः सुवर्णैर्महारत्नैर्माणिक्यादिभिरलंकृतानां विमानानां शतेन संकुलां निबिडाम् । तडिता घनेन च सह वर्तमानं खमाकाशं यथा ॥ २७ ॥

**हित्वा यक्षेश्वरपुरीं वनं सौगन्धिकं च तत् ।**
**द्रुमैः कामदुघैर्हृद्यं चित्रमाल्यफलच्छदैः ॥ २८ ॥**

**प्रकाशिका** – यक्षेश्वरपुरीमलकां हित्वाऽतिक्रम्य तद्वनं च दृष्ट्वा तदेवाराद्दूराद्वटं ददृशुरिति वक्ष्यमाणेनान्वयः । तद्वनं विशिनष्टि ॥ द्रुमैरित्यादिना । विचित्राणि माल्यानि पुष्पाणि फलानि छदाः पत्राणि येषु तैर्द्रुमैर्हृद्यं मनोहरम् ॥ २८ ॥

**रक्तकण्ठखगानीकस्वरमण्डितषट्पदम् ।**
**कलहंसकुलप्रेष्ठखरदण्डजलाशयम् ॥ २९ ॥**

**प्रकाशिका** – रक्तकण्ठखगानामनीकस्य स्वरैर्मण्डिताः षट्पदो यस्मिंस्तत्तथा । कलहंस-कुलस्य राजहंससमूहस्य प्रेष्ठानि प्रियतमानि खरदण्डानि पद्मानि येषु ते तथोक्तास्ते च ते जलाशया जलाधारा ह्रदो यस्मिन् ॥ २९ ॥

**वनकुञ्जरसङ्घृष्टहरिचन्दनवायुना ।**
**अधिपुण्यजनस्त्रीणां मुहुरुन्मथयन्मनः ॥ ३० ॥**

**प्रकाशिका** – वनकुंजरैर्वनस्थकुंजरैः कण्डूतिनिरासार्थं संघृष्टा ये हरिचन्दनद्रुमास्तत्संबन्धिना वायुना पुण्यजनस्त्रीणां मनोऽधि अधिकमुन्मथयद्विलोलयत् ॥ ३० ॥

**वैदूर्यकृतसोपाना वाप्य उत्पलमालिनीः ।**
**व्याप्तं किं पुरुषैर्दृष्ट्वा त आराद् ददृशुर्वटम् ॥ ३१ ॥**

**प्रकाशिका** – उत्पलानां माला आसु सन्तीत्युत्पलमालिनीरुत्पलमालिन्यो वैडूर्यैः कृतानि सोपानानि यासु तास्तथा । एवंविधा वाप्यो यत्र सन्तीति शेषः । तत्किंपुरुषैर्विलासार्थं व्याप्तम् ॥ ३१ ॥

**स योजनशतोत्सेधः पादोनविटपायतः ।**
**पर्यग्गतामलच्छायो निर्नीडस्तापवर्जितः ॥ ३२ ॥**

**प्रकाशिका** – वटं वर्णयति ॥ स इति । स वटो योजनानां शतमुच्छेद उन्नतिर्यस्य । पादोनैः पञ्चसप्ततियोजनप्रमाणैर्विटपैः शाखाभिरायतो विस्तृतः पर्यक् सर्वतो गता कृता पूर्णाऽमला छाया येन । निर्गतानि नीडानि पक्षिमन्दिराणि यस्मात् । तापवर्जितः शीतोष्णरहितः ॥ ३२ ॥

**तस्मिन् महायोगमये मुमुक्षुशरणे सुराः ।**
**ददृशुः शिवमासीनं त्यक्तामर्षमिवान्तकम् ॥ ३३ ॥**

**तात्पर्यम् – 'मुमुक्षवो ब्रह्मणश्च शिवादिन्द्रादिभिस्तथा । श्रुत्वा ज्ञानं परं गुह्यं मुच्यन्ते ब्रह्मणा सहे'ति कौर्मे ॥ ३३ ॥**

**प्रकाशिका** – महान्योगो येषां तन्मये तत्प्रचुरे । एतदेव विशदयति ॥ मुमुक्ष्विति । मुमुक्षूणां शिवान्मोक्षमिच्छतां शरणे आश्रय इति । त्यक्तामर्षोयोऽन्तकस्तद्वत्स्थितम् । अत्र शिवस्य मोक्षप्रदत्वे किं मानमित्यतस्तत्र प्रमाणं पठति ॥ मुमुक्षव इति । तथा चापरोक्षज्ञानार्थं ब्रह्मोपदेशवच्छिवाद्युपदेशोऽपि मुमुक्षूणामावश्यकः । अतः शिवोऽपि मोक्षप्रद इत्याया-तमित्याशयः ॥ ३३ ॥

**सनन्दनादिभिः सिद्धैः शान्तैः संशान्तविग्रहम् ।**
**उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम् ॥ ३४ ॥**

**प्रकाशिका** – सख्या वैश्रवणेन ॥ ३४ ॥

**विद्यातपोयोगपथमास्थितं तदधीश्वरम् ।**
**ध्यायन्तं विश्वसुहृदं वात्सल्याल्लोकमङ्गलम् ॥ ३५ ॥**

**प्रकाशिका** – विद्यातपोयोगानां पंथा मार्गस्तमास्थितमनुतिष्ठन्तम् । तदधीश्वरं तेषामुपदेष्टारं स्वामिनं च लोकानां मङ्गलं यस्मादत एव विश्वसुहृदं विश्वस्य सुहृदमनिमित्तबन्धुं हरिं वात्सल्याद्भक्त्युद्रेकाद्ध्यायन्तम् ॥ ३५ ॥

**लिङ्गं च तापसाभीष्टं भस्मदण्डजटाजिनम् ।**
**अङ्गेन सन्ध्याभ्ररुचा चन्द्रलेखां च बिभ्रतम् ॥ ३६ ॥**

**प्रकाशिका** – संध्याभ्ररुचेषद्रक्तपाण्डुरवर्णेनांगेन भस्म च दण्डश्च जटा चाजिनं च यस्मिंस्तत्तथा भस्मादिरूपं तापसाभीष्टं लिङ्गं वेषं चन्द्रलेखां च चन्द्रकलां च बिभ्रतम् ॥ ३६ ॥

**उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम् ।**
**नारदाय प्रवोचन्तं पृच्छते शृण्वतां सताम् ॥ ३७ ॥**
**कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानुनि ।**
**बाहुं प्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया ॥ ३८ ॥**

**प्रकाशिका** – बृस्यां यतीनामासने । यतीनामासनं बृसीति हलः । सव्यं पादपद्मं प्रदक्षिणे ऊरौ कृत्वा विन्यस्य सव्ये जानुनि बाहुं कृत्वा दक्षिणप्रकोष्ठे मणिबन्धनस्थानेऽक्षमालां कृत्वा दक्षिणहस्तकृतया तर्कमुद्रया ज्ञानमुद्रया युक्तमासीनमित्यर्थः ॥ ३८ ॥

**तं ब्रह्मनिर्वाणसमाधिमास्थितं व्यपाश्रितं गिरिशं योगकक्ष्याम् ।**
**सलोकपाला मुनयो मनूनामाद्यं मनुं प्राञ्जलयः प्रणेमुः ॥ ३९ ॥**

**प्रकाशिका** – ब्रह्मविषये निर्वाणं शरीराभिमानशून्यो यः समाधिश्चित्तैकाग्रयतारूपस्तेन स्थितं युतं योगकक्ष्यां योगपट्टिकां वामजानुदृढीकरणाय व्यपाश्रितं विशेषेणाश्रितवन्तं मनूनां मननशीलानामाद्यं मुख्यं मनुं मननशीलम् ॥ ३९ ॥

**स तूपलभ्यागतमात्मयोनिं सुरासुरेशैरभिवन्दिताङ्घ्रिः ।**
**उत्थाय चक्रे शिरसाऽभिवन्दनं महत्तमोऽर्कस्य यथैव विष्णोः ॥ ४० ॥**

**तात्पर्यम् – महत्तमस्तेजस्वितमोऽर्कस्य सकाशादपि । 'तेजोऽर्थ उत्तमार्थे च पूज्यार्थे च प्रयुज्यते । महच्छब्दो महःशब्दो मान्यशब्दस्तथैव चे'ति शब्दनिर्णये ॥ ४० ॥**

**प्रकाशिका** – आत्मयोनिं स्वकारणमात्मा परमात्मा योनिः कारणं यस्येति वा । शिवमाहात्म्यं वक्तुमर्कस्य महत्तम इत्युक्तम् । तत्र महच्छब्दो यदि श्रैष्ठ्यवाची तर्ह्यर्कोत्तमत्वस्य बृहस्पत्यादिसाधारणत्वान्नैतच्छिवमाहात्म्यवाचकं स्यात् । अतोऽत्र विवक्षितं महच्छब्दार्थं दर्शयन् अपेक्षितमध्याहृत्य योजयति ।। महत्तम इति । तथा च महच्छब्दो नात्र श्रैष्ठ्यपरः किन्तु तेजस्विपरः । एवं चार्कादप्यतिशयेन तेजस्वीत्यर्थलाभाच्छिवमाहात्म्यमनेनोक्तं भवतीति ज्ञातव्यम् । महच्छब्दस्य तेजस्विवाचकत्वे प्रमाणं पठति ।। तेजोऽर्थ इति । अत्र तेजः शब्दस्तेजस्विपरः । अग्रे उत्तमपूज्यरूपार्थयोर्धर्मिरूपयोरेवोपपादनात् । अतः प्रकृतसङ्गतिरिति ज्ञातव्यम् । ततश्चार्कस्य सकाशादपि महत्तमोऽतिशयेन तेजस्वी रुद्रो यथा शिरसा विष्णोरभि-वन्दनं भक्तिपूर्वकं साष्टाङ्गप्रणामं करोत्येवमेव चक्रे । इति मूलार्थ इति भावः । अनेनैवंविधेनापि शिवेन ब्रह्मा प्रणत इति तन्माहात्म्यातिशय उक्त इति ज्ञातव्यम् ।। ४० ।।

**तथाऽपरे सिद्धगणा महर्षिभिर्ये वै समन्तादनु नीललोहितम् ।**
**नमस्कृतः प्राह शशाङ्कशेखरं कृतप्रणामं प्रहसन्निवात्मभूः ।। ४१ ।।**

**प्रकाशिका** – महर्षिभिः सहिताः ये वै नीललोहितमनुवर्तन्ते समन्तात्स्थिता अपरे सिद्ध-गणास्तेऽपि तथाऽभिवन्दनं चक्रुः । एवं सर्वैः नमस्कृत आत्मभूर्ब्रह्मा शशाङ्कं शेखरे शिरोऽग्रभागे यस्य तं रुद्रं प्रत्याह ।। ४१ ।।

**ब्रह्मोवाच —**

**जाने त्वामीश विश्वस्य जगतो योनिबीजयोः ।**
**शक्तेः शिवस्य च परं यत् तद् ब्रह्म निरन्तरम् ।। ४२ ।।**

**तात्पर्यम् – अन्तर्याम्यपेक्षया शक्तेः शिवस्य च परमिति । 'क्रियन्ते स्तुतयोऽन्यत्र तदन्तर्याम्यपेक्षया । न जीवेषु गुणाः पूर्णा यथायोग्या हि तद्गता' इति ब्राह्मे ।। ४२ ।।**

**प्रकाशिका** – ब्रह्मा दक्षाध्वरध्वंसिनं शिवांतर्यामिणं महेश्वरनामानं हरिमपरोक्षीकृत्य स्तौति ।। जाने त्वामिति । अत्रास्य शिवस्य स्तुतित्वे शिवं प्रति शिवस्य च परमिति वचनमनु-पपन्नमतोऽत्र विवक्षितं तात्पर्यं दर्शयति ।। अन्तर्याम्यपेक्षयेति । अन्तर्यामिहर्यपेक्षयेत्यर्थः । परमिति वचनमिति शेषः । अत्र शक्तेः परमित्यनुवादे शिवशक्त्योः स्वरूपयोरिति वक्ष्यमाणाभेदरूपप्रतीतार्थग्रहणे बाधकप्रदर्शनायेति ज्ञातव्यम् । अन्तर्यामिपरत्वं कुत इत्यत्रोत्र प्रमाणं पठति ।। क्रियन्त इति । अन्यत्र रुद्रादौ विषये स्तुतय उत्कृष्टगुणवाचकाः । कुत इत्यत

उक्तम् । न जीवेष्विति । गुणाः स्तुतिप्रतिपाद्याः पूर्णाः सम्यगुत्कृष्टाः । न सन्तीति शेषः । किं सर्वथा न जीवेषु तात्पर्यमित्यत उक्तम् ॥ यथायोग्या इति । तद्गता जीवगताः । स्तुतय इति वर्तते। हीति प्रमाणप्रसिद्धिं द्योतयति । तथा च ये गुणा जीवेष्वसंभाव्यमानाः सर्वोत्कृष्टाः स्तुतीषूच्यन्ते । तत्र तदंतर्यामिमात्रपरत्वम् । यत्र जीवेषु संभाविता गुणा उच्यन्ते तत्रोभय-परत्वमिति भावः ॥ तथा चायमर्थः ॥ हे ईश । रुद्रान्तर्गत शक्तेरुमायाः शिवस्य चेत्यनयोर्विश्वस्य सर्वस्य जगतो योनिबीजयोर्मातापितृभूतयोः सकाशात्परमुत्तमं यद्ब्रह्म गुणपूर्णं निरन्तरं स्थानभेदेन भेदशून्यं तं त्वां जाने । प्रमाणैरपरोक्षतश्चेति शेषः ॥ ४२ ॥

**त्वमेव भगवन्नेतच्छिवशक्त्योः स्वरूपयोः ।**
**विश्वं सृजसि पास्यत्सि क्रीडयोर्णपदो यथा ॥ ४३ ॥**

**तात्पर्यम् – 'तद्वशत्वात्स्वरूपं तु विष्णोः सर्वमुदीर्यते । स्वरूपं स च सर्वत्र बिम्बत्वादेव तूच्यते । साक्षात्स्वरूपं मत्स्याद्या विष्णोर्नान्यत्कथश्चन । तस्मादन्यगता दोषा न तस्मिन्पुरुषोत्तम' इति तत्त्वनिर्णये ॥ ४३ ॥**

**प्रकाशिका –** कुतो मम परब्रह्मत्वमित्यतस्तल्लक्षणत्वादित्याह ॥ त्वमेवेति । त्वमेवैतत्सर्वं ब्रह्मादिचेतनस्वरूपं स्वरूपयोः शिवशक्त्योर्द्वारभूतयोः सकाशाद्विश्वं सृजसि पासि रक्षस्यत्सि संहरसीत्यन्वयः । ऊर्णपद ऊर्णनाभिर्यथोर्णां सृजति तन्मध्ये क्रीडति तामत्ति च तथेत्यर्थः । अत्र शिवशक्त्योः स्वरूपयोरित्यनेन हरिस्वरूपत्वं तयोरुच्यत इति भाति । तथा त्वमेवेतदिति तत्तच्छब्दवाच्यसर्वस्वरूपत्वं तच्च शक्तेः शिवस्य च परमित्यनेन प्रमाणान्तरेण च विरुद्धं सर्वभिन्ने हरौ सर्वगतदोषप्रसक्तिश्चेत्यतोऽत्र विवक्षिततात्पर्यं प्रमाणेनैव दर्शयति ॥ तद्वशत्वादिति । सर्वं ब्रह्मशिवादिकं विष्णोः स्वरूपमित्युदीर्यते श्रुत्यादौ । कुतः । तुशब्दोऽवधारणे । तद्वशत्वादेव । यदधीना यस्य सत्ता तत्तदित्येव भण्यत इति वचनादिति भावः । स च विष्णुरपि सर्वस्य ब्रह्मरुद्रादेः स्वरूपमिति चोच्यते । तत्र हेतुः ॥ बिंबत्वादेवेति । बिंबे च प्रतिबिंबैक्यव्यवहार आदित्यं वारिस्थं नैक्षतेत्यादिस्मृतिषु प्रसिद्धः । तर्हि साक्षात्स्वरूपं कुत्र ज्ञेयमित्यपेक्षायामाह ॥ साक्षात्स्वरूपमिति । अन्ये ब्रह्मरुद्राद्यास्तस्मात्साक्षात्स्वरूपत्वस्याभावात् । न तस्मिन्प्रसज्यंत इति शेषः । तथा च त्वमेतद्ब्रह्मादिचेतनबिंबभूतः स्वरूपयोः स्वाधीनयोः शिवशक्त्योर्द्वार-भूतयोरिति मूलार्थ इति भावः ॥ ४३ ॥

**त्वमेव धर्मार्थदुघाऽभिपत्तये दक्षेण सूत्रेण विसर्जिताध्वरः ।**
**त्वयैव लोकेऽवसिताश्च सेतवो यान् ब्राह्मणाः श्रद्धधते धृतव्रताः ॥ ४४ ॥**

**तात्पर्यम् – अभिपत्तये प्रतीकाराय । सूत्रेण दोषसूचकेन ॥ ४४ ॥**

**प्रकाशिका** – दक्षयज्ञनाशनं दक्षानुग्रहायैव त्वया कृतमित्याशयेनाह ॥ त्वमेवेति । अत्राभिपत्तये सूत्रेणेति पदद्वयस्य प्रकृतोपयुक्तमर्थं क्रमेणाह ॥ अभिपत्तय इत्यादिना । प्रतीकाराय तदीयगर्वपरिहाराय । तदनुग्रहायेति यावत् । सूत्रशब्दस्य सूचकाद्यर्थत्वेऽपि दोषेत्यस्य योग्यतया लाभः । ततश्चायं श्लोकार्थः ॥ धर्ममर्थं च दोग्धीति धर्मार्थधुक् तेन धर्मार्थदुघा । मोक्षेतरपुरुषार्थासक्तेनेति यावत् । सूत्रेण स्वयज्ञभागाप्रदानादिरूपदोषसूचकेन । तत्कर्त्रेति यावत्। हेतुगर्भविशेषणमिदम् । दक्षेण विसर्जिताध्वरस्त्याजिताध्वरो भवसि । दक्षेण स्वापराधरूपदोषस्य कृतत्वात्तदीययज्ञनाशनं त्वया कृतमित्यर्थः । किमर्थमित्यत उक्तम् ॥ अभिपत्तय इति । दक्षो हि स्वभक्तः । तस्य स्वापराधे प्राप्ते तदीययज्ञनाशादिकं तद्गर्वपरिहाराय पुनः स्वस्मिन् भक्त्युत्पादनाय च त्वया कृतमिति भावः । कुत एवं भक्तशिक्षा मया कार्येत्यत उक्तम् । त्वय्यैवेति । भक्तैः स्वोत्तमद्रोहादिकं नकार्यमित्येवंरूपा धर्मसेतवस्ते त्वय्यैवावसिता निश्चित्य निर्णिताः । चशब्दो यस्मादित्यर्थे । कथंभूताः सेतवः । यान् ब्राह्मणा ब्रह्मज्ञानिनः श्रद्धधते श्रद्धयाऽनुतिष्ठन्ति ॥ ४४ ॥

**त्वं कर्मणां मङ्गल मङ्गलानां कर्तासि लोके तनुषे स्वयं फलम् ।**
**अमङ्गलानां च तमिस्रमुल्बणं विपर्ययः केनचिदेव कस्यचित् ॥ ४५ ॥**

**प्रकाशिका** – न केवलं त्वमपराधकारिणां शिक्षकः किन्तु सर्वप्राणिषु स्थित्वा त्वमेव योग्यतानुसारेण कर्मकारयिता फलदाता चेत्याह ॥ त्वं कर्मणामिति । हे मङ्गल विष्णो । लोके प्राणिनां देहे स्थित्वा मङ्गलानां पुण्यानाममङ्गलानां च पापानां कर्मणां कर्ता कारयिताऽसि । तेषां फलं स्वर्गादिरूपमुल्बणं नरकादिरूपं तमिस्रं तमोरूपं च स्वयमेवान्यानपेक्षया तनुषे तत्तद्योग्यतानुसारेण विस्तृत्य ददासीत्यर्थः । ननु नायं नियमो विपर्ययस्यापि दर्शनादित्यत उक्तम् ॥ विपर्यय इति । व्यत्यास इत्यर्थः । केनचिदेव स्वोत्तमापराधादिना हेतुना कस्यचिद्धर्मादेः फलविपर्ययो न तु सर्वस्येत्यज्ञानां धर्मसूक्ष्मज्ञानं दुर्लभमिति भावः ॥ ४५ ॥

**न वै सतां त्वच्चरणार्पितात्मनां भूतेषु सर्वेष्वभिपश्यतां तव ।**
**भूतानि चात्मन्यपृथग् दिदृक्षतां प्रायेण रोषोऽभिभवेद् यथा पशोः ॥४६॥**

**तात्पर्यम् – तव त्वाम् । 'चतुर्थे षष्ठी'ति सूत्रात् ॥ 'विष्णवधीना जगत्सत्ता प्रतीतिश्चेष्टितं गतिः । इति यन्नियतं ज्ञानमपृथग्दर्शनं स्मृतम् । मिथ्याज्ञानं पृथग्ज्ञानमिति वेदविदो विदुः । यथैवार्थस्तथाज्ञानमपृथग्दृष्टिरुच्यत' इति गारुडे ॥ ४६ ॥**

**प्रकाशिका** – नन्वभिपत्तय इत्यनेन दक्षाध्वरध्वंसनं दक्षानुग्रहहेतुरिति सूचितम् । तदयुक्तम् । तद्विषयकरोषस्यैव तत्र हेतुत्वसंभवादित्याशङ्कायां रोषो हरौ न संभावित इति कैमुत्येनाह ॥ न वा इति । अत्र तवेति षष्ठ्या अन्वयाभावमालोच्य द्वितीयार्थतया व्याख्याति ॥ तवेति । एवं च तं त्वामभिपश्यतामित्यन्वयोपपत्तिरिति भावः । षष्ठ्या द्वितीयार्थत्वे नियामकं महाव्याकरणसूत्रं पठति ॥ चतुर्ष्विति । द्वितीयादिचतुर्षु विभक्त्यर्थेषु षष्ठी भवतीति सूत्रार्थः । अपृथग्दिदृक्षतामित्येतदभिन्नतया द्रष्टुमिच्छतामित्यन्यथाप्रतीतिवारणाय प्रमाणेनैव व्याख्याति ॥ विष्णवधीनेति । चेष्टितं प्रयत्नो गतिर्गमनादिरूपम् । तथा च जगतः सत्ताप्रतीत्यादिकं पृथग्घरिं विना स्वत एव न भवतीति दर्शनं अपृथग्दर्शनं हरिणैव भवति । न पृथगिति दर्शनमपृथग्दर्शनमित्यर्थः। एवमुत्तरश्लोकेषु पृथग्धिय इत्येतद्भिन्नज्ञानिन इत्यन्यथाप्रतीतिवारणायोदाहृतप्रमाणशेषेणैव व्याख्याति ॥ मिथ्याज्ञानमिति । ननु पृथग्ज्ञानशब्देन कथं मिथ्याज्ञानलाभ इत्यतस्तदुपपादयति ॥ यथैवेति । यत इति शेषः । अर्थो यथा येन प्रकारेणोपेतस्तथैव तेन प्रकारेण ज्ञानं नान्येन प्रकारेणेत्यर्थः । तथा च पृथगर्थे विद्यमानप्रकारं विहाय यदन्येन प्रकारेण ज्ञानं तन्मिथ्याज्ञानमेवेति लभ्यत इति भावः ॥ ततश्चायं श्लोकार्थः ॥ त्वच्चरणार्पितात्मनां सर्वेषु भूतेषु स्थितं तव त्वामभिपश्यतां भूतानि चात्मनि परमात्मनि परमात्मविषयेऽपृथग्दिदृक्षतां परमात्मनैव प्राप्तसत्तादिकानि न पृथगित्येवं द्रष्टुमिच्छतामित्यर्थः । सतां प्रायेण तथा रोषो नाभिभवेद्यथा पशोरज्ञानिनोऽभिभवेत् । तदा त्वां नाभिभवेदिति किं वाच्यमिति भावः ॥ ४६ ॥

**पृथग्धियः कर्मदृशो दुराशयाः परोदयेनार्पित हृद्रुजोऽनिशम् ।**
**परान् दुरुक्तैर्वितुदन्त्यरुंतुदास्तान् मा वधीर्देव भवान् पृथग्विधान् ॥ ४७ ॥**

**प्रकाशिका** – ननु ये मिथ्याज्ञानिनो हननयोग्यापराधास्तेषु रोषादिकं युक्तमेवेत्याशङ्क्य सत्यं स्वदोषेणैव हतेषु तेषु रोषो न कार्यो हननं च व्यर्थमेवेत्याशयेनाह ॥ पृथग्धिय इति । मिथ्याज्ञानिन इत्यर्थः । कर्मदृशः कर्मैव महापुरुषार्थप्रदमिति जानतः परोदयेन परेषां संपादिताऽर्पिता रुग्येषाम् । अरुंतुदा मर्मभेत्तारो ये दुरुक्तैः परान्वितुदन्ति उपद्रवन्ति । हे देव । भवान् तान्मा वधीरित्यन्वयः । स्वदोषेणैव तेषां हतत्वादिति भावः । पृथग्विधान्ज्ञानविलक्षणान् ॥ ४७ ॥

**येऽस्मिन् यदा पुष्करनाभमायया दुर्लङ्घ्यया स्पृष्टधियः पृथग्दृशः ।**
**कुर्वन्ति तत्र ह्यनुकम्पया कृपां न साधवो दैवबलात्कृताः कथम् ॥ ४८ ॥**

**तात्पर्यम्** – यदा यस्मात् । 'हृदयस्य द्रवीभावस्त्वनुकम्पेति कथ्यते । उपकारं कर्तुमिच्छा कृपेत्याहुर्मनीषिण' इति शब्दनिर्णये ॥ ४८ ॥

**प्रकाशिका** – इदानीं रुद्रं प्रत्येव दक्षेऽनुग्रहः कार्य इति वक्ति ॥ येऽस्मिन्निति द्वाभ्याम् । अत्र यदाशब्दस्य कालवाचित्वेऽन्वयाभावमालोच्य हेत्वर्थमाह ॥ यदेति । यदाशब्दस्य कालार्थत्वे हेत्वर्थे चापि भण्यत इति वचनादिति भावः । अनुकंपाकृपाशब्दयोरपौनरुक्त्यायार्थभेदं प्रमाणेनैवाह ॥ हृदयस्येति । अनेनास्मिन् लोके ये दक्षादयः सन्तो यदा यस्मात्पुष्करनाभस्य पद्मनाभस्य मायया बन्धकशक्त्या स्पृष्टधियोऽत एव पृथग्दृशः साधवोऽनुकंपया हृदयस्य द्रवीभावेन कृपां क्षमालक्षणोपकारं कर्तुमिच्छां कथं न कुर्वन्ति कुर्वन्त्येवेत्यर्थः ॥ ४८ ॥

**भवान् हि पुंसः परमस्य मायया दुरन्तयाऽस्पृष्टमतिः समस्तदृक् ।**
**तया हतात्मस्वनुकर्मचेतस्स्वनुग्रहं कर्तुमिहार्हति प्रभो ॥ ४९ ॥**

तात्पर्यम् – **मायया विष्ण्वधीनया बन्धकशक्त्या । 'विष्णुमाया हरेरिच्छा बन्धशक्तिश्च तद्वशा । सर्वत्रगा हरेरिच्छा बन्धशक्तिर्ह्रीवर्जिते'ति शब्दनिर्णये ॥ ४९ ॥**

**प्रकाशिका** – अहमपि हरेर्बंधकशक्त्या स्पृष्टमतिश्चेत्कथं तेष्वनुग्रहं कुर्यामित्यतस्त्वं न तादृशः सर्वज्ञत्वादित्याह ॥ भवान्हीति । अत्र माययेच्छयाऽस्पृष्टमतिरिति भगवदिच्छासंबन्धोऽपि शिवे नास्तीति भाति । अतोऽत्र विवक्षितं मायाशब्दार्थमाह ॥ माययेति । ननु तर्हि बन्धकशक्तेः कथं परमस्य पुंस इति षष्ठ्या भगवत्संबन्ध उच्यत इत्यत उक्तम् ॥ विष्ण्वधीनयेति । तथा च स्वस्वामिभावरूप एव संबन्धः षष्ठ्यर्थो न विषयविषयिभाव इत्यर्थः । बन्धकशक्तिर्मायाशब्दवाच्या विष्ण्वधीना इत्यत्र विष्ण्विच्छारूपया विष्णुमायया हि स्पृष्टो न तदीयबन्धकशक्त्येत्यत्र हिशब्दसूचितं प्रमाणं दर्शयति ॥ विष्णुमायेति । तद्वशा विष्ण्वधीना सर्वत्रगा सर्वविषयवर्जिता सर्वज्ञान्विहायान्यविषयेत्यर्थः । ॥ ततश्चायं श्लोकार्थः ॥ परमस्य पुंसो हरेरधीनतया दुरन्तया दुःसाध्यया मायया बन्धकशक्त्या हतात्मसु स्पृष्टबुद्धिष्वत एवानुकर्मचेतःसु कर्मानुसारिचेतःसु दक्षादिष्विहाधिकार्यनधिकारिवर्गे ॥ ४९ ॥

**कुर्वध्वरस्योद्धरणं हतस्य भो त्वयाऽसमाप्तस्य मनोः प्रजापतेः ।**
**न यत्र भागं तव भागिनो ददुः कुस्पर्धिनो येन मखो निनीयते ॥ ५० ॥**

**जीवताद् यजमानोऽयं प्रपद्येताक्षिणी भगः ।**
**भृगोः श्मश्रूणि रोहन्तु पूष्णो दन्ताश्च पूर्ववत् ॥ ५१ ॥**

**प्रकाशिका** – एवं सामान्यत उक्त्वेदानीं प्रकृतमाह ॥ कुर्वध्वरस्येति त्रिभिः । उद्धरणमुज्जीवनम् । समापनमिति यावत् । त्वया तस्य विघ्नितस्यात एवासमाप्तस्य मनोर्ज्ञानिनः

प्रजापतेर्दक्षस्य । यत्राध्वरे भागिनो भागार्हस्यापि तव भागं न ददुः । यतः कुत्सिता स्पर्धैषामस्तीति कुस्पर्धिनो देवादयः । भागार्हत्वमाह ॥ येनेति । येन त्वया मखो निनीयते नितरां नीयते । फलं प्राप्यत इति यावत् ॥ ५०,५१ ॥

**देवानां भग्नगात्राणामृत्विजां चायुधाश्मभिः ।**
**भवताऽनुगृहीतानामाशु मन्ये त्वनातुरम् ॥ ५२ ॥**

**प्रकाशिका –** हे मन्यो । अनातुरमारोग्यमाश्वस्तु ॥ ५२ ॥

**एष ते रुद्र भागोऽस्तु यदुच्छिष्टोऽध्वरस्य वै ।**
**यज्ञस्ते रुद्र भागेन कल्पतामद्य यज्ञहन् ॥ ५३ ॥**

**प्रकाशिका –** भागश्च तवास्त्वित्याह ॥ एष इति । हे रुद्र । यद्योऽध्वरस्योच्छिष्टः । यज्ञे कृतावशिष्टः वा इति श्रौतप्रसिद्धिं दर्शयति । हे रुद्र । ते भागेनाद्य यज्ञः कल्प्यतां संपद्यताम् ॥ ५३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

## अथ अष्टमोऽध्यायः ।

**मैत्रेय उवाच–**

**इत्यजेनानुनीतेन भवेन परितुष्यता ।**
**अभ्यधायि महाबाहो प्रहस्य श्रूयतामिति ॥ १ ॥**

**प्रकाशिका –** ॥ हरिः ॐ ॥ अनुनीतेन सांत्वितेन । महाबाहो विदुर ॥१॥

**रुद्र उवाच–**

**नाघं प्रजेश बालानां वर्णये नानुचिन्तये ।**
**देवमायाभिभूतानां दण्डस्तत्र धृतो मया ॥ २ ॥**

**प्रकाशिका –** हे प्रजेश अस्मदाद्युत्तमेश । अघमराधम् । वर्णनानुचिन्तनयोरभावे हेतुः ॥ दण्ड इति । यतस्तत्राघकारिषु मया दण्डः शिक्षा धृतः । अपराधानुसारिदण्डकरणे वर्णनादिकं कार्यं स च मया कृतः । अतो न वर्णयामीति भावः ॥ २ ॥

**प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः ।**
**मित्रस्य चक्षुषेक्षेत भागं स्वं बर्हिषो भगः ॥ ३ ॥**

**प्रकाशिका –** एवं स्वापराधं परिहृत्यानुगृह्णाति ॥ प्रजापतेरिति । दग्धशीर्षं यस्य तस्य प्रजापतेर्दक्षस्याजस्य मुखं यस्मिंस्तत् । बर्हिषो यज्ञस्य संबन्धि स्वं स्वीयं भागं भगो मित्रस्य चक्षुषेक्षत ॥ ३ ॥

**पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक् ।**
**देवाः प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः ॥ ४ ॥**

**प्रकाशिका –** पूषा कठिणं यजमानस्य दक्षस्य दद्भिर्दं तैर्जक्षतु पिष्टभुग्भवतु । तस्मै दीयमानं हविः प्रायः पिष्टरूपमेव भवत्वित्यर्थः । प्रकर्षेण कृतानि भग्नानि सर्वाण्यंगानि येषां ते पूर्वावस्थाप्राप्तसर्वावयवा भवन्तु । उच्छेषणो भागो वै रुद्र इति श्रुतेः । उच्छेषणं यज्ञावशिष्टम् । ददुरिति विशेषानुग्रहे हेतुः ॥ ४ ॥

**बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः ।**
**भवन्त्वध्वर्यवश्चान्ये बस्तश्मश्रुर्भृगुर्भवेत् ॥ ५ ॥**

**प्रकाशिका** – ऋत्विजां नैवमित्याह ॥ बाहुभ्यामिति । अध्वर्यवो ऋत्विजस्तेषां मध्ये छिन्नबाहवः केचन छिन्नहस्तास्तेषु ये छिन्नबाहवोऽश्विनोर्बाहुभ्यां कृतबाहुप्रयोजना भवन्तु । ये छिन्नहस्तास्ते पूष्णो हस्ताभ्यां कृतहस्तप्रयोजना भवन्तु । बस्तस्य श्मश्रूणि यस्य स बस्तश्मश्रुः ॥ ५ ॥

**मैत्रेय उवाच–**

**तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितम् ।**
**परितुष्टात्मभिस्तत्र साधु साध्वित्यथाब्रुवन् ॥ ६ ॥**

**प्रकाशिका** – मिह सेचन इति धातोः । भक्ताभीष्टसेचको मीढ्वांसस्तेष्वतिशयेन भक्ताभीष्टसेचको मीढ्वान्मीढुष्टमो रुद्रस्तेन कथितम् । हे तात विदुर ॥ ६ ॥

**ततो मीढ्वांसमामन्त्र्य शुनासीराः सहर्षिभिः ।**
**भूयस्तद् देवयजनं समीढ्वद्वेधसो ययुः ॥ ७ ॥**

**प्रकाशिका** – मीढ्वांसं रुद्रमामन्त्र्य त्वयाऽऽगत्य सर्वं कार्यमिति संप्रार्थ्य शुनासीरा देवाः । मीळ्हुषा रुद्रेण वेधसा ब्रह्मणा सहवर्तमानाः समीढ्वद्वेधसः ॥ ७ ॥

**विधाय कार्त्स्न्येन च तद् यदाह भगवान् भवः ।**
**सन्दधुः कस्य कायेन सवनीयपशोः शिरः ॥ ८ ॥**

**प्रकाशिका** – कस्य दक्षस्य सवनीयपशोर्याज्ञीयपशोरजस्य ॥ ८ ॥

**सन्धीयमाने शीर्षणि दक्षो रुद्राभिवीक्षितः ।**
**सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडम् ॥ ९ ॥**

**प्रकाशिका** – शीर्षणि शिरसि ॥ ९ ॥

**तदा वृषध्वजद्वेषकलिलात्मा प्रजापतिः ।**
**शिवावलोकादभवच्छरदभ्र इवामलः ॥ १० ॥**

**प्रकाशिका** – पूर्वं वृषध्वजद्वेषेण कलिलः कलुषीकृत आत्मा मनो यस्य सः शिवावलोकाच्छरदभ्रवच्छरत्कालीनमेघ इवाभवत् ॥ १० ॥

भवस्तवाय कृतधीर्नाशक्नोदनुरागतः ।
औत्कण्ठ्यबाष्पकलया सम्परेतां सुतां स्मरन् ॥ ११ ॥
कृच्छ्रान् संस्तभ्य च मनः प्रेमविह्वलितः सुधीः ।
शशंस निर्व्यलीकेन भावेनेशं प्रजापतिः ॥ १२ ॥

**प्रकाशिका –** औत्कण्ठ्यादुत्पन्नबाष्पकलया ॥ ११ ॥ १२ ॥

**दक्ष उवाच–**

भूयाननुग्रह अहो भवता कृतो मे
दण्डस्त्वया मयि धृतो यदपि प्रसह्य ।
न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा
तुभ्यं हरेश्च कुत एव धृतव्रतेषु ॥ १३ ॥

**प्रकाशिका –** त्वया प्रसह्यापि मयि दण्डो धृतः कृत इति यद्यस्मात्तस्माद्भूयाननुग्रहः कृतः । न तूपेक्षितोऽस्मि । अन्यथैतादृशदण्डाभावे भवद्द्वेषिणो मम तमः प्राप्तिः स्यादिति भावः । मादृशेषु तव हरेश्चोपेक्षाभावः कैमुत्यसिद्ध इत्याह ॥ न ब्रह्मेति । ब्रह्मबन्धुषु ब्राह्मणाभासेष्वपि तुभ्यं तव हरेश्च वां युवयोरवज्ञोपेक्षा नास्ति । धृतव्रतेषु दीक्षितेषु कुत एवावज्ञा ॥ १३ ॥

विद्यातपोव्रतधरान् मुखतः स्म विप्रान्
ब्रह्मात्मतां प्रथयितुं प्रथमं त्वमस्राः ।
तद् ब्राह्मणान् परम सर्वविपत्सु पासि
पालः पशूनिव विभो प्रगृहीतदण्डः ॥ १४ ॥

**प्रकाशिका –** निमित्तप्रदर्शनपूर्वकमेव पूर्वोक्तमेवोपपादयति ॥ विद्येति । ब्रह्मात्मतां परब्रह्मणः स्वामित्वं प्रथयितुं संप्रदायप्रवर्तकत्वेन विस्तारयितुमस्राः अस्राक्षीद्यस्मात् तत्तस्मात् । हे परम ब्राह्मणान् परब्रह्मस्वामित्वविषये संप्रदायप्रवर्तकान् सर्वासु विपत्सु प्राप्तासु । शर्वेति पाठे संबुद्धिः । पासि तेषूपेक्षां न करोषि ॥ १४ ॥

योऽसौ मयाऽविदिततत्त्वदृशा सभायां
क्षिप्तो दुरुक्तिविशिखैरगणय्य तन्माम् ।

अर्वाक् पतन्तमर्हत्तमनिन्दयैक्षद्
दृष्ट्याऽऽर्द्रया स भगवान् स्वकृतेन तुष्येत् ॥ १५ ॥

**प्रकाशिका** – अत्र प्रत्युपकारो नास्तीत्याह ॥ सोऽसाविति । अविदिततत्त्वदृशाऽप्राप्ततत्त्वज्ञानेन तदगणय्य विस्मृत्यार्हत्तमस्यातिशयेन पूज्यतमस्य तव निन्दयाऽर्वागधः पतंतमार्द्रया कृपायुक्तया दृष्ट्यैक्षदद्राक्षीत् । स्वकृतेन स्वकृतास्मदनुग्रहेण तुष्येत्स्वयमेव तुष्टो भवेत् । न मया प्रतिकर्तुं शक्यमित्यर्थः ॥ १५ ॥

**मैत्रेय उवाच–**

क्षमाप्यैवं समीढ्वांसं ब्रह्मणा चानुमन्त्रितः ।
कर्म सन्तानयामास सोपाध्यायर्त्विगग्निभिः ॥ १६ ॥

**प्रकाशिका** – अनुमन्त्रितोऽनुज्ञातः । सन्तानयामासानुवर्तयामास । उपाध्यायसहितै ऋत्विगग्निभिः ॥ १६ ॥

वैष्णवं यज्ञसंतत्यै त्रिकपालं द्विजोत्तमाः ।
पुरोडाशं निरवपन् वीरसंसर्गशुद्धये ॥ १७ ॥

**प्रकाशिका** – भग्नस्य यज्ञस्य प्रायश्चित्तमन्तरेण कथं प्रवृत्तिरित्यत आह ॥ वैष्णवमिति । विष्णुदेवताकं यज्ञसन्तत्यै यज्ञप्रवृत्तये त्रीणि कपालान्यासनानि यस्य स त्रिकपालपुरोडाशस्तम् । वीराणां रुद्रभृत्यानां प्रमथादीनां यः संसर्गस्तत्कृतयज्ञभङ्गदोषस्तस्य शुद्धये परिहाराय । प्रायश्चित्तार्थमिति यावत् । निरवपन् समन्त्रपचनं कृतवन्तः ॥ १७ ॥

अध्वर्युणाऽऽत्तहविषा हूयमाने यजुष्पतौ ।
यथा विशुद्धया दध्यौ तथा प्रादुरभूद्धरिः ॥ १८ ॥

**प्रकाशिका** – आत्तहविषाऽध्वर्युणा सह यजुष्पतिं मन्त्रदेवताम् ॥ १८ ॥

तदा स्वप्रभया तेषां द्योतयन्त्या दिशो दश ।
मुष्णंस्तेज उपानीतस्तार्क्ष्येण स्तोत्रनिर्जितः ॥ १९ ॥

**प्रकाशिका** – दशदिशो द्योतयन्त्या स्वप्रभया तेषां तेजो मुष्णंस्तिरस्कुर्वंस्तार्क्ष्येण गरुडेनोपानीतः समीपं प्रापितः । स्तोत्रेण सामरूपेण निर्जितो वशीकृतः ॥ १९ ॥

**श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो**
**नीलालकभ्रमरकुण्डलमण्डितास्यः ।**
**कम्ब्वब्जचक्रशरचापगदासिचर्म-**
**व्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः ॥ २० ॥**

**प्रकाशिका –** हिरण्मयरशना काञ्ची यस्य स तथा । अथवा । रशनाशब्दो वस्त्रलक्षकः । तथा च हिरण्यवत्पीतं वस्त्रं यस्येत्यर्थः । अर्कवज्ज्वलता किरीटेन जुष्टः । नीलालका एव भ्रमराः ते च तेकुण्डले च तैर्मण्डितमास्यं यस्य । कंब्वादिभिरायुधैर्विशिष्टानि विलक्षणानि वाऽग्राणि येषां तैर्हिरण्मयांगदादिभूषणयुतभुजैः पुष्पितं कर्णिकारवृक्ष इव शोभमानः ॥ २० ॥

**वक्षस्यधिश्रितवधूर्वनमाल्युदार-**
**हासावलोककलया रमयंश्च विश्वम् ।**
**पार्श्वभ्रमद्व्यजनचामरराजहंसः**
**श्वेतातपत्रशशिनोपरि लक्ष्यमाणः ॥ २१ ॥**

**प्रकाशिका –** वक्षस्यधिश्रिता वधूर्भार्या लक्ष्मीर्यस्य । उदार उत्कृष्टो हासावलोकश्च तयोः कलया लेशेन विश्वं रमयन्पार्श्वयोर्भ्रमती व्यजनचामरे तल्लक्षणाभ्यां राजहंसाभ्यां श्वेतातपत्र-लक्षणशशिना चोपरि लक्ष्यमाणो दृश्यमानः । एवंविधस्तार्क्ष्येणोपनीत इति पूर्वेणान्वयः॥ २१ ॥

**तमुपागतमालक्ष्य सर्वे सुरगणादयः ।**
**प्रणेमुः सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकाः ॥ २२ ॥**

**प्रकाशिका –** ब्रह्मा चतुर्मुख इन्द्रो वायुस्त्र्यक्षो रुद्र एते नायका येषां ते तथोक्ताः ॥ २२ ॥

**तत्तेजसा हतरुचः सन्नजिह्वाः ससाध्वसाः ।**
**मूर्ध्नि कृताञ्जलिपुटा उपतस्थुरधोक्षजम् ॥ २३ ॥**

**प्रकाशिका –** सन्नजिह्वा गद्गदवाचः ससाध्वसाः सभयाः । उपतस्थुस्तुष्टुवुः ॥ २३ ॥

**अप्यर्वाग्वृत्तयो यस्य महित्वे स्वभुवादयः ।**
**यथामति गृणन्ति स्म कृतानुग्रहविग्रहम् ॥ २४ ॥**

**तात्पर्यम् – 'उत्पत्तिर्हरिरूपाणां व्यक्तिरेव न संशयः । उत्पत्तिरेव जीवानां देहोत्पत्ति-रितीर्यत' इति तत्त्वनिर्णये ॥ २४ ॥**

**प्रकाशिका –** किं साकल्येनोपतस्थुर्नेत्याह ॥ अप्यर्वाग्वृत्तय इति । यद्यपि स्वायंभुवादयो ब्रह्मादयो यस्य महित्वे विषयेऽर्वाग्वृत्तयः साकल्याविषयकमनोव्यापारास्तथाऽपि तं यथामति गृणन्ति । कथंभूतम् । कृतानुग्रहविग्रहम् । अत्र भगवद्विग्रहस्य जीवशरीरवदुत्पन्नत्वं नेति प्रमाणेनैवाह ॥ उत्पत्तिरिति । हरिरूपाणां यत्रोत्पत्तिरुदीर्यते । स्तुतिप्रबन्धकथने ग्रन्थाधिकं स्यादिति मत्वा यदर्थं हरेराविर्भावस्तस्य भगवत्प्रतिपत्तिं वक्ति । उत्पत्तिशब्देन तत्र व्यक्तिरेव व्याख्येया । न मुख्योत्पत्तिः । जीवानामुत्पत्तिर्यत्रोदीर्यते तत्र देहोत्पत्तिर्व्याख्येया । न व्यक्तिरित्यर्थः । तथा च मूले कृतः प्रकटीकृतोऽनुग्रहाय विग्रहो यस्येति व्याख्येयमिति भावः । अनन्तत्वादर्वाग्वृत्तयोऽपि अप्राप्तवाङ्मनसो व्यापारा इति ॥ २४ ॥

**दक्षो गृहीतार्हणसाधनोत्तमं यज्ञेश्वरं विश्वसृजं परं गुरुम् ।**
**सुनन्दनन्दाद्यनुगैर्वृतं मुदा गृणन् प्रपेदे प्रयतः कृताञ्जलिः ॥ २५ ॥**

**प्रकाशिका –** गृहीतं स्वीकृतमर्हणसाधनोत्तमं येन सः तम् । गृणन् स्तुवन् । प्रपेदे शरणम् प्राप्तवान् ॥ २५ ॥

**दक्ष उवाच–**

**शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं**
**चिन्मात्रमेकमभयं प्रतिषिध्य मायाम् ।**
**तिष्ठंस्तयैव पुरुषत्वमुपेत्य तस्या-**
**मास्ते भवानपरिशुद्धमिवामनन्ति ॥ २६ ॥**

**तात्पर्यम् – 'जडमाया न तस्यास्ति शरीरत्वेन कुत्रचित् । सृष्ट्वा तया शरीराणि तत्स्थितेः पुरुषः स्मृतः । मायामयशरीरायामपि विष्णुः स्वयं स्थितः । तस्मात्प्राकृत इत्येव जीववत्तं वदन्ति हि । अस्पृष्टत्वेऽपि तद्धर्मैस्तद्गत्वादेव कारणादि'ति तत्त्वविवेके ॥ २६ ॥**

**प्रकाशिका –** गृणन्नित्युक्तां स्तुतिं दर्शयति ॥ शुद्धमिति । अत्र मायामनिर्वाच्याविद्यां प्रतिषिध्य कालत्रयेऽपि परिहृत्य तिष्ठन् भगवानेव तयैव पुरुषत्वं जीवत्वमुपेत्य तस्यामास्त इत्य-न्यथाप्रतीतिवारणायात्र प्रमाणैः श्लोकतात्पर्यमाह ॥ जडमायेति । तथा च मायाशब्दो जडप्रकृतिपर इति भावः । शरीरत्वेन शरीररूपेण परिणाम्य । नास्तीत्यनेन मायां

प्रतिषिद्ध्येतदुक्ततात्पर्यम् । तयैव पुरुषत्वमुपेत्य तस्यामित्यस्य तात्पर्यम् ॥ सृष्ट्वेति । तस्यामास्ते भगवानित्यस्य तात्पर्यम् ॥ मायायामिति । वस्तुतो भगवच्छरीररूपत्वाभावादशरीरेयमित्युक्तम् । अपरिशुद्धमिवामनन्तीत्यस्य हेतुत्वेनोपयोग इत्यभिप्रेत्य तदर्थमाह ॥ तस्मादिति । अपरिशुद्ध इत्यस्यार्थः ॥ प्राकृत इति । प्रकृतिकार्यधर्मयुताः । तं विष्णुम् । जीववदित्यनेनापरिशुद्धशब्दो जीवपर इत्यपि दर्शयति । इवशब्दार्थमुपपादयति ॥ अस्पृष्टत्वेऽपीति । तद्धर्मैः प्रकृति-कार्यदुःखादिधर्मैः ॥ ततश्चायं श्लोकार्थः ॥ शुद्धं निर्दुष्टं च स्वधाम्नि स्वस्वरूपे उपरता नित्य-निवृत्ता अखिला बुद्धेरवस्था जाग्रदादिजीवावस्था यस्य तत्तथा । चिन्मात्रं जडामिश्रमेकं सर्वोत्तममत एवाभयम् । अन्यस्य तादृशस्य भयप्रदस्याभावात् । जीवस्वरूपवैलक्षण्योपपाद-नायैतानि विशेषणानि । एतादृशं यस्य तव रूपमामनन्ति श्रुतयः । भगवान्मायां जडप्रकृतिं तत्कार्यं शरीरं प्रतिषिद्ध्य दूरीकृत्य सर्वदा तिष्ठन् सृष्टिकाले तयैव मायोपादानरूपया महदादि-सृष्टिद्वारा पुराणि शरीराणि सृष्ट्वा तेषु स्थितमत्तया पुरुषत्वं पुरुषशब्दवाच्यत्वमुपेत्य तदंतर्यामि-रूपेण व्यक्तोभूत्वा तस्यां मायायां तत्कार्यशरीरे नियामकतयाऽऽस्ते । तस्माद्भवन्तं दुरागमा अपरिशुद्धमिव प्रकृतिबद्धं जीवमिवामनन्ति । वस्तुतो न त्वं जीववत्प्राकृत इति भावः ॥ २६ ॥

**ऋत्विज ऊचुः–**

> **तत्त्वं न ते वयमनञ्जन रुद्रशापात्**
> **कर्मण्यवग्रहधियो भगवन् विदामः ।**
> **धर्मोपलक्षणमिदं त्रिवृदध्वराख्यं**
> **ज्ञातं यदर्थमधिदैवमदस्त्वमास्थाः ॥ २७ ॥**

**तात्पर्यम् – अधिदैवं उत्तमदैवम् । यद्यज्ञभागार्थं यज्ञभुग्देवताशरीरे आस्थाः । 'भुङ्क्ते यज्ञभुजो देवानाविश्य पुरुषोत्तम' इति च ॥ २७ ॥**

**प्रकाशिका** – ऋत्विजोऽपि स्वापराधं परिहरन्तः स्तुवन्ति ॥ तत्त्वमिति । हे अनंजन पुण्यपापलेपरहित । ते तव तत्त्वं यथावत्स्थितं रूपं न विदामो यतः कर्मणि कर्ममार्ग एव रुद्र-शापाद्रुद्रभक्तनन्दीश्वरशापादवग्रहधियो दुराग्रहबुद्धयः । प्रसिद्धेन्द्रादिदेवा एव यज्ञभागभोक्तार इति बुद्धय इति यावत् । तथा चात्राधिशब्द उत्तमार्थे विवक्षित इति भावः । देवानधिकृत्येत्यर्थको नेति सूचनाय देवमित्यनुवादः । तथात्वे अधिदेवमित्येव स्यादिति भावः । एवं चोत्तमदेवानां ब्रह्मादीनामिन्द्रशरीरमधिदैवमित्युक्तं भवति । एतदेव विवृण्वन्यदर्थमित्यादिमूलवाक्ययोजनां दर्शयति ॥ यद्यज्ञेति । यदर्थमित्यस्यार्थः ॥ यद्यज्ञभागार्थमिति । भागार्थं भोगार्थमित्यर्थः ।

अधिदैवमित्यस्यार्थः ।। यज्ञभागभुग्देवताशरीर इति । तथा च देवशब्दो यज्ञभुग्देवतापर इति भावः । अधि शीङ्स्थासां कर्मेत्यादिना द्वितीयेति सूचनाय भगवतो यज्ञभुग्देवताशरीरप्रवेशेन यज्ञभोक्तृत्वे प्रमाणमाह ।। भुंक्त इति । देवान्देवशरीराणि ।। ततश्चायमर्थः ।। यदर्थं यस्य यज्ञस्य भागार्थं भोगार्थमदो वेदप्रसिद्धमधिदेवमुत्तमयज्ञभुग्देवतासंबन्धिशरीरं त्वमास्थास्तदिदं यज्ञरूपं कर्माध्वराख्यमध्वनि शुद्धमार्गे रमत इत्यध्वराख्यं, त्रीन्वेदान् प्रतिपादकतया वृणोतीति त्रिवृत् त्रयीतात्पर्यविषयभूतमिति धर्मस्य हरिप्रीतिजनकादृष्टस्योपलक्षणं ज्ञापकमिति सूरिभिर्ज्ञातमन्यथा न । इतीदं तत्त्वं न विदाम इत्यन्वयः ।। २७ ।।

**सदस्या ऊचुः–**

**उत्पत्त्यध्वन्यशरण उरुक्लेशदुर्गान्तकोग्र-**
**व्यालाकृष्टे विषयमृगतृष्णात्मगेहोरुभारः ।**
**द्वन्द्वश्वभ्रे खलमृगभये शोकदावेऽज्ञसार्थः**
**पादौ शस्तौ शरणद कदा याति कामोपसृष्टः ।। २८ ।।**

**प्रकाशिका** – हे शरणद मोक्षलक्षणगृहप्रद । उत्पत्त्यध्वनि संसारमार्गे वर्तमानोऽज्ञसार्थोऽज्ञानिनां सार्थः समूहस्ते शस्तौ प्रशस्तौ पादौ कदा याति न कदाऽपि यास्यतीत्यन्वयः । कथं भूते । अशरणे रक्षितपुरुषशून्ये उरवो बहवो क्लेशा अविद्यास्मितरागद्वेषाभिनिवेशास्तैर्दुर्गमे गन्तुमशक्येऽन्तकाख्येनोग्रेण व्यालेनाजगरेणाकृष्टे द्वन्द्वानि सुखदुःखान्येव श्वभ्राणि गर्तानि यस्मिन् । खलाः पिशुना एव मृगव्याघ्रादयस्तेभ्यो भयं यस्मिन् । शोको मनः पीडा स एव दावो वनवह्निर्यस्मिन् । कथंभूतोऽज्ञसार्थः । विषया एव मृगतृष्णा मरीचिकाजलं तामुद्दिश्यात्माऽहङ्कारस्पदो देहो गेहं गृहं ममत्वास्पदं स एवोरुभारो यस्य । अत एव कामेनोपसृष्टः पीडितः ।। २८ ।।

**रुद्र उवाच–**

**तव वरद वराङ्घ्रावाशिषा चानभिध्ये**
**ह्यपि मुनिभिरसक्तैरादरेणार्हणीये ।**
**यदि रचितधियं मां विद्धि लोकापविद्धं**
**जगति न गणयेयं त्वत्परानुग्रहेण ।। २९ ।।**

**तात्पर्यम् – आशिषोऽपि तत एव भवन्तीत्यतश्चशब्दः ॥ २९ ॥**

**प्रकाशिका** – हे वरद । असक्तैर्विरक्तैर्मुनिभिराशिषा निमित्तभूतयाऽनभिध्ये ध्यानाविषये आशीरर्थम् । ध्यातुमयोग्य इति यावत् । ब्रह्मादिज्ञानिभिरप्यादरेणार्हणीये पूज्ये तव वरांघ्रौ वरणीयगुणे श्रीपादे यदि रचितं धियं कृतबुद्धिं मां विद्धि जानासि । लडर्थे लोट् । कथं भूतं माम्। लोकापविद्धं लोकबाह्यम् । अनेन स्वस्य ज्ञान्युत्तमत्वं सूचयति । तर्हि जगति त्वत्परानुग्रहेणान्यं पुरुषं न गणये न प्रार्थये । लोकैर्दक्षादिभिरपविद्धं निन्दन्तं मामिति वा । अत्र चशब्देन विषयासक्तैराशिषाभिध्ये चेत्यर्थस्य प्राप्तत्वादपिशब्दो व्यर्थ इत्यतस्तात्पर्यमाह ॥ आशिषोऽपीति। आसक्तानामप्याशिषस्तेनैव निष्कामध्यानेनैव भवतीति सूचयितुमपिशब्द इत्यर्थः ॥२९॥

**भृगुरुवाच–**

> **यन्मायया गहनयाऽपहृतात्मबोधा**
> **ब्रह्मादयस्तनुभृतस्तमसि स्वपन्तः ।**
> **नात्माश्रितं तव विदन्त्यधुनाऽपि तत्त्वं**
> **सोयं प्रसीदतु भवान् प्रणतात्मबन्धुः ॥ ३० ॥**

**प्रकाशिका** – स्वप्रभृतिजीवानामस्वातन्त्र्यं प्रकटयन् भृगुः स्तौति ॥ यन्माययेति श्लोकद्वयेन । गहनया गंभीरया यस्य तव माययाऽपहृत आच्छादित आत्मनः परमात्मन आत्मनां स्वेषां बोधो येषाम् । ब्रह्मा आदिः कारणं येषाम् । तमसि अज्ञाने स्वपन्तोमग्नाः । अनेनावरकान्तरमुक्तम् इति ज्ञातव्यम् । आत्माश्रितं स्वात्मविषयकं तत्वं कर्मानुसारेण प्रेरणादिरूपम् ॥ ३० ॥

> **नैतत् स्वरूपं भवतोऽसौ पदार्थ-**
> **भेदग्रहः पुरुषो यावदीक्षेत् ।**
> **ज्ञानस्य चार्थस्य गुणस्य चाश्रया-**
> **न्मायामयाद् व्यतिरिक्तो यतस्त्वम् ॥ ३१ ॥**

**तात्पर्यम् – 'अव्यक्तादिपदार्थानां विशेषज्ञानिनाऽपि तु । न देहो वैष्णवो ज्ञेय आनन्दः प्राकृतो न ही'ति तन्त्रसारे । पदार्थभेदग्रहः पदार्थविशेषज्ञः । 'भेदोऽन्तरं विशेषश्च सूक्ष्मेक्षा चाभिधीयत' इति तत्त्वनिर्णये ॥ ३१ ॥**

**प्रकाशिका** – चिदानन्दात्मकदेहस्त्वम् । त्वदनुग्रहमन्तरेण पदार्थविशेषज्ञानिनामपि तत्ज्ञातुमशक्यमित्याशयेनाह ॥ नैतदिति । अप्रतिपत्त्या श्लोकतात्पर्यं प्रमाणेनैव दर्शयति ॥

अव्यक्तादीति । अनेन पदार्थभेदग्रह इत्येतदुक्ततात्पर्यम् । तुशब्दोऽवधारणे । त्वदनुग्रहमन्तरेण नैव ज्ञेयः । आनन्द इत्युपलक्षणम् । आनन्दादिरूपो वैष्णवो देह इत्यन्वयः । अनेन पूर्वार्धतात्पर्यमुक्तमिति ज्ञातव्यम् । न ज्ञेय इत्यनेनातस्त्वं न ज्ञेय इति तत्र पूरणीयमिति सूचयति। ननु यो दृश्यते प्राकृतार्थः स एव तद्देहः किं न स्यादित्यत उक्तम् ॥ प्राकृतो न हीति। प्राकृतपदार्थवद्वैष्णवो देहो न किन्तु तदतिरिक्त एवेति प्रमाणसिद्धमित्यर्थः । अनेन द्वितीयार्धतात्पर्यमुक्तमिति ध्येयम् । एवं श्लोकतात्पर्यं प्रमाणेनोक्त्वेदानीं पदार्थभेदग्रह इत्यस्य प्रकृतसंगतमर्थं दर्शयति ॥ पदार्थेति । तथा च भेदशब्दो विशेषपरः । गृह्णातीति ग्रहो ज्ञ इत्युक्तं भवति । भेदशब्दस्य विशेषवाचित्वे प्रमाणं पठति ॥ भेदोन्तरमिति ॥ ततश्चायं श्लोकार्थः ॥ पदार्थानामव्यक्तादीनां भेदं विशेषं गृह्णातीति पदार्थभेदग्रहोऽव्यक्तादिपदार्थविशेषज्ञानी असौ पुरुषो यावत्प्राकृतं पदार्थजातमीक्षेत्पश्यति । एतद्भवतः स्वरूपं स्वरूपभूतो देहो न भवति किन्तु तदतिरिक्त एवानन्दाद्यात्मको यो देहो वर्तत स पदार्थविशेषज्ञानिनामपि न ज्ञातुम् शक्यमिति शेषः । ननु दृश्यः प्राकृत एव देहः किं न स्यादित्यत आह ॥ ज्ञानस्येति । ज्ञानस्यार्थस्य विषयस्य शब्दादिगुणस्य सत्वादेश्च ज्ञानादीन्द्रियादेश्चाश्रयान्मायामयात् प्राकृताद्देहात् व्यतिरिक्तः आनन्दादिदेहो प्रमाणप्रसिद्धो यत इत्यर्थः । असत इति पाठेऽमङ्गलान्मायामयादिति व्याख्येयम् ॥ ३१ ॥

**इन्द्र उवाच –**

**इदमच्युत विश्वभावनं वपुरानन्दकरं मनोदृशम् ।**
**सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डैरुपपन्नमष्टभिः ॥ ३२ ॥**

**प्रकाशिका** – भगवद्देहस्य भगवदात्मकत्वाच्च न प्राकृतत्वमित्याशयेन तद्देहस्य भगवदात्मकत्वमिन्द्रस्तुतिव्याजेनानुमानेन साधयति ॥ इदमिति । हे अच्युत हेयोपादेयरहित । इदं प्रत्यक्षसिद्धं वपुर्विश्वभावनं जगदुत्पादकं ब्रह्मैवेत्यन्वयः । अनेन जगज्जन्मादिकारणत्वरूपभगवल्लक्षणयुक्तत्वात् तद्वपुस्तदात्मकमित्यनुमानमुक्तमिति ज्ञातव्यम् । सुरद्विषोऽसुरास्तान्क्षपयन्तीति सुरद्विट्क्षपणास्तैः । अनेन भुजानां चोपकारित्वस्तुतिप्रयोजनत्वमुक्तमिति ज्ञातव्यम् ॥ ३२ ॥

**यज्ञपत्न्य ऊचुः –**

**यज्ञोऽयं तव यजनाय केन सृष्टो**
**विध्वस्तः पशुपतिनाऽद्य दक्षकोपात् ।**

तन्नस्त्वं कुशेशयनाभ शान्तमेधं

यज्ञात्मन्नलिनरुचा दृशा पुनीहि ॥ ३३ ॥

**प्रकाशिका** – केन दक्षेण । नोऽस्माकं यज्ञम् । हे कुशेशयनाभ पद्मनाभ । शान्तमेधशब्देन यज्ञोत्सवो लक्ष्यते । हे यज्ञात्मन्यज्ञस्वामिन् । नलिनरुचा पद्मकांत्या दृशा नेत्रेण पुनीहि शुद्धं कृत्वा पूर्णफलं कुरु ॥ ३३ ॥

**ऋषय ऊचुः –**

अनन्वितं ते भगवन् विचेष्टितं

यदात्मना चरसि हि कर्म नाज्यसे ।

विभूतयो यत उपसेदुरीश्वरं-

न मन्यते स्वयमनुवर्तिनीं भवान् ॥ ३४ ॥

**तात्पर्यम्** – ईश्वरान् ॥ ३४ ॥

**प्रकाशिका** – ते विचेष्टितमनन्वितमसंबद्धम् । लोकविलक्षणमिति यावत् । हि यस्मादात्मना स्वयमेव यत्कर्म चरसि तेन नाज्यसे न लिप्यसे । याश्च विभूतय मन्यते स्त्रीकामनया नाद्रियते । किन्तु भक्तिमत्तयैव तस्मादनन्वितमित्यन्वयः । अत्रेश्वरादिति छेदभ्रान्तिवारणाय प्रकृतसङ्गतं छेदं दर्शयति ॥ ईश्वरानिति । योजना तूक्तैव ॥ ३४ ॥

**सिद्धा ऊचुः –**

अयं ते कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः ।

तृषार्तोऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसंपन्न एव ॥ ३५ ॥

**प्रकाशिका** – सिद्धास्तत्कथासुखमभिनन्दन्तः स्तुवन्ति ॥ अयमिति । योऽस्माकं मनोलक्षणो वारणो गजस्ते तव कथैव मृष्टं शुद्धं पीयूषं तन्मय्यां नद्यामवगाढः प्रविष्टः कुतो यतः क्लेशलक्षणदावाग्निना दग्धः । यतश्च तृषार्तो विषयतृष्णया दुःखितः । दावं दावाग्नितुल्यं संसारक्लेशं न सस्मार न स्मरति । स्मरणाभावे निमित्तमाह ॥ ब्रह्मेति । ब्रह्मसंपन्नवन्मुक्तवन्न निष्क्रामति न पुनरावर्तते ॥ ३५ ॥

**यजमान उवाच –**

स्वागतं ते प्रसीदेश तुभ्यं नमः श्रीनिवास श्रिया कान्तया त्राहि नः ।

त्वामृतेऽधीश नाङ्गैर्मखः शोभते शीर्षहीनः कबन्धो यथा पूरुषः ॥ ३६ ॥

**प्रकाशिका –** पुनर्यजमानः स्तौति ॥ स्वागतमिति । यजमान्युवाचेति क्वचित्पाठः । तत्र यजमानी दक्षपत्नीति व्याख्येयम् । श्रिया कान्तया सह नोऽस्मान् । हे अधीश । यथा शीर्षेण हीनकबन्धः कबन्धस्थः पुरुषोंऽगैः करचरणाद्यैर्न शोभते तथा त्वां विना प्रयाजाद्यङ्गैर्मखो न शोभते । अतो नस्त्राहीत्यन्वयः ॥ ३६ ॥

**लोकपाला ऊचुः–**

> **दृष्टः किं नो दृग्भिरसद्ग्रहैस्त्वं प्रत्यग्दृष्ट्या दृश्यते येन विश्वम् ।**
> **माया ह्येषा भवदीया हि भूमन् यस्त्वं षष्ठः पञ्चभिर्भासि भूतैः ॥ ३७ ॥**

**तात्पर्यम् – माया ह्येषा भवदीया । भगवत्सामर्थ्यमेव । 'भगवन्महिमैवासौ यद्दृश्यो भगवान्स्वयमि'ति च ॥ ३७ ॥**

**प्रकाशिका –** लोकपाला अपि हरिमाहात्म्यं व्यञ्जयन्तः स्तुवन्ति ॥ दृष्ट इति । अत्र माया शब्दस्यानिर्वाच्याविद्यापरत्वप्रतीतिवारणाय प्रकृतोपयुक्तमर्थमाह ॥ माया हीति । तथा च मूलमायाशब्दः सामर्थ्यार्थः । हिशब्दोऽवधारणार्थ इति भावः । समग्रश्लोकतात्पर्यं प्रमाणेन दर्शयति ॥ भगवदिति । भगवान्स्वयमदृश्यस्वभावोऽपि दृश्यो दृग्विषय इति यत् । असौ भगवन्महिमैवाघटितघटकसमर्थभगवत्सामर्थ्यमेव । कथमन्यथा दिव्यदृष्टिगोचरस्वभावस्य अज्ञ-दृष्टिगोचरता । न हि साधनशतेनापि नरो वानरी भवितुमर्हतीत्याशयः ॥ ततश्चायं श्लोकार्थः ॥ येन त्वया विश्वं दृश्यते यज्ञ त्वं पृथग्दृष्ट्याऽऽन्तरदृष्ट्या । दिव्यदृष्ट्येति यावत् । दृष्टः । ज्ञानिभिरिति शेषः । स त्वमसद्ग्रहैरसतोऽभद्रान्विषयान्गृह्णातीत्यसद्ग्रहा वयं तैः कर्तृ-भिर्नोऽस्माकं दृग्भिर्मांसदृष्टिभिः किं प्रयोजनमुद्दिश्य दृष्टो न दृष्टः । अनुग्रहमन्तरेण न किमपीति शेषः । किन्तु । हे भूमन्परिपूर्ण । पञ्चभिर्भूतैस्तदुपचितमांसमयैरिन्द्रियैः षष्ठोऽभौतिकशरीरस्त्वं भासीति यदेषा भवदीया माया ह्यघटितघटकभगवन्महिमैव तत्साध्यमेव । न ह्यमांसदृष्टि-गोचरत्वस्वभावस्य मांसदृष्टिगोचरस्वभावत्वं सामर्थ्यं विना साधनशतेनापि युज्यते । हि प्रमाण-प्रसिद्धमेतत् ॥ ३७ ॥

**योगेश्वरा ऊचुः–**

> **प्रेयान्न तेऽन्योऽस्त्यमृतप्रिय प्रभो**
> **विश्वात्मनीक्षेन्न पृथग्ग् य आत्मनः ।**
> **अथापि भृत्येश तयोपधावता-**
> **मनन्यवृत्त्याऽनुगृहाण वत्सल ॥ ३८ ॥**

तात्पर्यम् – न पृथग्य आत्मनः । अन्यथा यो न पश्यति । 'पृथग्ज्ञानं तदित्याहुर्यत्किञ्चिद्वीक्ष्यतेऽन्यथा । ज्ञानज्ञेयाविरोधेन त्वपृथग्वस्तुनो दृशिः । केचिद्भेदं विनिन्दन्ति ह्यासुरज्ञानवृत्तयः । निराकुर्वन्त्यथो मन्दा भेदस्य परमार्थताम् । ये तु तत्त्वविदो मुख्या भेदं ब्रह्मान्यवस्तुनोः । परमार्थमिति ज्ञात्वा नित्यं विष्णुमुपासत' इति गारुडे । हे भृत्येश । तयाऽनन्यवृत्त्योपधावतामस्माकमनुग्रहोऽस्त्येव । तथापि पुनरनुगृहाण । 'यथार्थज्ञानिनो नान्यः प्रियो विष्णोस्तु कश्चन । तथाप्यधिकसन्तुष्टयै प्रसीदेत्यर्थनं पुनरि'ति च ॥ ३८ ॥

**प्रकाशिका** – योगेश्वरास्तु यद्यपि त्वं यथार्थज्ञानिनां प्रियस्तथाऽप्यधिकसौख्याय पुनः प्रार्थयाम इत्याशयेन स्तुवन्ति ॥ प्रेयानिति द्वाभ्याम् । अत्रात्मनो जीवान्पृथक् भेदेन नेक्षेन्न पश्येत् । तस्मादभेदज्ञानिनोऽन्यस्ते प्रेयान्नास्तीत्यन्यथाप्रतीतिवारणाय पृथगित्यस्यान्यार्थं नेक्षेदित्यनेनान्वयं लिङः लङर्थत्वं च दर्शयति ॥ न पृथगिति । अन्यथा ज्ञेयवस्तुविरुद्धप्रकारेण । अत्रात्मन इत्यनुवादः । आत्मन इति बहुवचनेन य आत्मन इति कर्तृकर्मभावेन च भेदस्यैव प्राप्त्याऽभेदज्ञानिविवक्षायां ज्ञानज्ञेयविरोधप्रसङ्ग इति बाधकप्रदर्शनाय ज्ञेयविरुद्धप्रकारेण ज्ञानमन्यथाज्ञानमित्यत्र प्रमाणं पठति ॥ पृथगिति । अन्यथा ज्ञेयविरुद्धप्रकारेण वस्तुनो दृशिर्यथार्थज्ञानमित्यर्थः । अनेनापृथक् नान्यथा किन्तु वस्तुतत्त्वानुसारेण यः पश्यतीत्थमपि मूलं व्याख्येयमिति सूचयति । अभेदज्ञानरूपप्रतीतार्थस्य निन्दितत्वान्नासावत्राभिप्रेत इत्याशयेन तं निन्दन्ति ॥ केचिदिति । विनिन्दन्ति नास्तीति वदन्ति । ते आसुरज्ञानवृत्तयोऽसुरसंबन्धिज्ञानस्वभावाः । हीति तत्र प्रमाणप्रसिद्धिं दर्शयति । अथो मन्दास्तेभ्योऽपि नीचा इत्यर्थः । पारमार्थिकभेदज्ञानपरत्वमेवास्येत्याशयेन स्तौति ॥ ये त्विति । ये तत्त्वज्ञानिनो ब्रह्मान्यवस्तुनोः परमार्थभेदं ज्ञात्वा विष्णुं सर्वभिन्नत्वेनोपासते । ते मुख्या इत्यन्वयः । मूले द्वितीयार्धेऽथाऽपि भेदाभावेऽपि भृत्येशतया स्वामिभृत्यभावेनोपधावतामिति प्रतीतिवारणाय स्वाभिमतं छेदं दर्शयति ॥ भृत्येशेति । त्वय्यन्यथात्वान्नेक्षेन्न पश्येत् । सुरनरतिर्यगादिषु जीवराशिषु प्रेरकत्वेन स्थितानां तव रूपाणां गुणानां चाणुमात्रं भेदं न पश्यतीत्यर्थः । तस्मादात्मनो जीवादन्यः प्रेयांस्तव नास्ति । नन्वेवमथाऽपीत्यस्य कोऽर्थ इत्यतस्तदर्थं वदन् अनुगृहाणेत्यस्य तात्पर्यमाह ॥ तयेति । तया पूर्वोक्तयाऽनुवृत्त्याऽनन्यथाज्ञानेन । यथार्थज्ञानेनेति यावत् । उपधावतां सेवमानानाम् । पुनरनुग्रहणं व्यर्थमित्याशङ्कापरिहाराय समग्रश्लोकतात्पर्यं प्रमाणेनैव दर्शयति ॥ यथार्थज्ञानमिति । अनेन प्रथमार्धतात्पर्यमुक्तमिति ज्ञातव्यम् । तथाऽपीत्यनेन द्वितीयार्धस्येति ज्ञातव्यम् ॥ ततश्चायमर्थः ॥ हे श्रयाश्रितभावादिना त्वत्तः परस्परं च । भिन्नानिति यावत् । योऽधिकारी पृथगन्यथाऽभिन्नत्वेन । स्वरूपापेक्षयेति शेषः । नेक्षेन्नपश्यति । किन्तु न

पृथगन्यथा भेदेनैवेक्षेत्पश्यति । तस्मादन्यस्ते तव प्रेयान् अतिशयेन प्रियो नास्ति । अथाऽप्येवं ज्ञानिनामस्माकं त्वत्प्रियत्वेऽपि हे भृत्येश भृत्यानां स्वामिन् । तया पूर्वोक्तयाऽनन्यवृत्त्या यथार्थ-ज्ञानेनोपधावतां सेवमानानामस्माकमधिकसौख्याय पुनरनुग्रहाण । हे वत्सल भक्तप्रिय ॥ ३८ ॥

**जगदुद्भवस्थितिलयेषु लीलया**
**प्रविभज्यमानगुणयाऽऽत्ममायया ।**
**रचितात्मभेदमतये स्वसंस्थया**
**ह्यतिवर्तितभ्रमगुणात्मने नमः ॥ ३९ ॥**

**तात्पर्यम् – 'प्रकृत्या जडया मिथ्याज्ञानं जनयतीश्वरः । तस्य भ्रमश्च सत्वाद्या न सन्ति परमेशितुरि'ति च ॥ ३९ ॥**

**प्रकाशिका –** पूर्वोक्तं विश्वस्वामित्वं प्रकटयत आहुः ॥ जगदिति । सृष्टौ रजः स्थितौ सत्त्वं लये तम इत्येवं प्रविभज्यमानागुणाः सत्त्वादयो यस्याः सा प्रविभज्यमाना गुणा तयाऽऽत्मा-धीनया मायया जडप्रकृतिरूपया रचितोत्पादिताऽऽत्मनां जीवानां भेदमतिः पृथग्दृष्टिः । उक्तरीत्या मिथ्याज्ञानमिति यावत् । येन स तथोक्तस्तस्मै स्वसंस्थयैव स्वमहिम्नैवातिवर्तिता दूरीकृता भ्रमो मिथ्याज्ञानं गुणाः सत्त्वाद्याश्च यस्मात्स तथोक्तः । स चासावात्मा स्वामी च तस्मै। अस्य श्लोकस्यैवमेव व्याख्यानं कार्यमित्याशयेन समाख्याप्रमाणं पठति ॥ प्रकृत्येति । माययेत्य-स्यार्थः॥ प्रकृत्येति । प्रविभज्यमानगुणयेत्यस्य तात्पर्यम् ॥ जडयेति । मिथ्याज्ञानं जनयतीत्यनेन रचितात्मभेदमतये इत्येतदुक्ततात्पर्यम् । तस्य भ्रमश्च सत्त्वाद्या न सन्तीत्यनेनाति-वर्तितगुणे भ्रम इत्येतदुक्ततात्पर्यम् । आत्मपदतात्पर्यम् ॥ परमेशितुरिति ॥ ३९ ॥

**ब्रह्मोवाच–**

**नमस्तेऽमिततत्त्वाय धर्मादीनां च सूतये ।**
**निर्गुणाय च यत्काष्ठां नाहं वेदापरे कुतः ॥ ४० ॥**

**प्रकाशिका –** अमिततत्त्वायापरिमितस्वरूपाय । हे अमित अनन्त । तुभ्यं नमः । तत्त्वायानारोपितरूपाय । धर्मादीनामस्माकं च सूतये उत्पादकाय । चशब्देनास्मत्कारणत्वं निवारयति । कारणस्य रज आदि संसर्गो नास्तीत्याह ॥ निर्गुणायेति । सत्त्वादिगुणाबद्धाय । चशब्दो विशेषणसमुच्चयार्थः । यत्काष्ठां यस्योत्कर्षम् । काष्ठोत्कर्षे साम्नि दिशीत्यभिधानात् । अपरे मदर्वाचीनाः कुतो विदुर्न कुतोऽपीत्यर्थः । अनेनामितरूपत्वमुपपादितमिति ज्ञातव्यम् ॥ ४० ॥

अग्निरुवाच–

यत्तेजसाऽहं सुसमिद्धतेजा हव्यं वहाम्यध्वर आज्यसिक्तम् ।
तं यज्ञियं पञ्चविधं च पञ्चभिः स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम् ॥ ४१ ॥

तात्पर्यम् – 'यज्ञो यज्ञपुमांश्चैव यज्ञेशो यज्ञभावनः । यज्ञभुक्चेति पञ्चात्मा यज्ञेष्विज्यो हरिः स्वयम् । आश्रावयास्तुश्रौषड्यजाथो येयजामहे । वषट्कारान्तकैर्नित्यं यजुर्भिः पञ्चभिर्विभुरि'ति तन्त्रसारे ॥ ४१ ॥

प्रकाशिका – अग्निरहं त्वदधीनव्यापार इति विज्ञापयन्स्तौति ॥ यत्तेजसेति । अत्र पञ्चविधमित्युक्तम् । भगवतः पञ्चविधत्वं प्रमाणेनैव दर्शयति ॥ यज्ञ इति । एवकारस्येत्येवान्वयः । स्विष्टमित्यस्य तात्पर्यम् ॥ यज्ञेष्विज्य इति । स्वयं स्वातन्त्र्येण । पञ्चभिर्यजुभिरुक्तानि पञ्चयजूंषि दर्शयति ॥ आश्रावयेति । पञ्चभिर्यजुभिरिज्यत इत्यन्वयः । आश्रावय इत्येकोऽस्तुश्रौषडिति द्वितीयो यजेति तृतीयो येयजामह इति चतुर्थो वषडिति पञ्चमः । तथा च वषट्कारो वषडिति मन्त्रोऽन्ते येषां ते यजुभिर्यजुर्वेदगतपञ्चमन्त्रैरिति । तथा च श्रुतिः । आश्रावयेति चतुरक्षरमस्तुश्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं येयजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः । स्मृतिश्च । चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्याम् । इत्येवंरूपा ॥ ततश्चायं श्लोकार्थः ॥ यस्य हरेस्ते तव तेजसा कांत्या सामर्थ्येन वा सुसमिद्धं सुपूज्यत्वेन सु सम्यक् प्रवृद्धं तेजो बलं यस्य स तथाऽहं जातवेदा अध्वरे यज्ञे दीयमानमाज्यसिक्तमाज्येन सिक्तं युतं हव्यं हविर्वहामि देवान्प्राप्य विभज्यार्पयामीत्यर्थः । यजुर्वेदगतैर्यजुभिः पञ्चमन्त्रैः स्विष्टं सुष्टु पूजितं तं पञ्चविधं पञ्चधा विभक्त विग्रहं यज्ञेशं यज्ञप्रवर्तकं भगवन्तं प्रणतोऽस्मीत्यन्वयः ॥४१॥

देवा ऊचुः–

पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं
त्वमेवाद्यस्तस्मिन् सलिल उरगेन्द्राधिशयने ।
पुमाञ्छेषे सिद्धैर्हृदि विमृशिताध्यात्मपदविः
स एवाद्याक्ष्णोर्नः पथि चरसि भृत्यानवसि च ॥ ४२ ॥

प्रकाशिका – कल्पापाये प्रलये स्वेन कृतं विकृतं कार्यम् । विमृशिता विचारिताऽध्यात्मनः परमात्मनः पदवी यस्य सः विमृशिताध्यात्मपदविः ॥ ४२ ॥

**गन्धर्वा ऊचुः–**

**आशासाना देव मरीच्यादयः एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः ।**
**क्रीडाभाण्डं विश्वमिदं यस्य विभूम्नस्तस्मै नित्यं नाथ नमस्ते करवामः ॥**

**प्रकाशिका** – हे देव । आशासानाः फलमाकांक्षमाणा य एते मरीच्यादयो य एते ब्रह्मेन्द्राद्या देवा रुद्रपुरोगा भूतगणा इतीदं विश्वं भूम्नो यस्य तव क्रीडाभाण्डं क्रीडोपकरणम् ॥ ४३ ॥

**विद्याधरा ऊचुः–**

**त्वन्माययाऽर्थमभिपद्य कलेवरेऽस्मिन्**
**कृत्वा ममाहमिति दुर्मतिरुत्पथैः स्वैः ।**
**क्षिप्तोऽप्यसद्विषयलालस आत्ममोहं**
**युष्मत्कथामृतनिषेवक उद्व्युदस्येत् ॥ ४४ ॥**

**प्रकाशिका** – त्वन्मायया त्वदिच्छया त्वदधीनया प्रकृत्या चार्थं देहकलत्रादिलक्षणम् । अभिपद्य प्राप्य दुर्मतिर्दुःखितमतिरस्मिन्कलेवरे ममाहमिति मतिं कृत्वाऽत एवोत्पथैर्दुर्मार्गवर्तिभिः स्वैरिन्द्रियैः क्षिप्तोऽपि भग्नमानविषयलोभदुःखितोऽपि । असत्स्वमङ्गलेषु विषयेषु लालसा तृष्णा यस्य सः पुमान्युष्मत्कथारसं निषेवक आत्माऽऽत्ममोहमहंकारममकारादिरूपं मिथ्याज्ञान-मुद्व्युदस्येदुच्चैः परित्यजेत् । अतो युष्मत्कथानिषेवणमेवास्माकं सदा देहीत्याशयः ॥ ४४ ॥

**ब्राह्मणा ऊचुः–**

**त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयं**
**त्वं हि मन्त्राः समिद् दर्भपात्राणि च ।**
**त्वं सदस्यर्त्विजो दम्पती देवता**
**अग्निहोत्रं स्वधा सोम आज्यं पशुः ॥ ४५ ॥**

**तात्पर्यम् – 'सर्वशब्दाभिधेयत्वं सर्वान्तर्यामिकत्वतः । न तु सर्वस्वरूपत्वात्सर्वभिन्नो यतो हरिरि'ति मात्स्ये ॥ ४५ ॥**

**प्रकाशिका** – पूर्वोक्तयज्ञेशत्वमुपपादयन्तो ब्राह्मणाः स्तुवन्ति ॥ त्वं क्रतुरिति श्लोकत्रयेण । अत्र हरेः क्रत्त्वादिशब्दवाच्यत्वं क्रत्त्वाद्यभेदेनेति प्रतीतिवारणाय श्लोकतात्पर्यं प्रमाणेनैव दर्शयति ॥ सर्वेति । क्रतुत्वादिसर्वशब्दाभिधेयत्वमन्तर्यामिकत्वतः । सर्वभिन्नः सर्वक्रत्त्वादिसर्वभिन्नत्वेन

प्रमितः । अनेन प्रतीतार्थे बाधकमुक्तमिति ज्ञातव्यम् । ततश्च त्वं क्रतुः क्रत्वन्तरनियामकतया तच्छब्दवाच्यः । एवं त्वं हविरित्यादौ योजना द्रष्टव्या । सदस्याश्च ऋत्विजश्च ॥ ४५ ॥

**त्वं पुरा गां रसाया महान् सूकरो**
**दंष्ट्रया पद्मिनीं वारणेन्द्रो यथा ।**
**स्तूयमानो नदल्लीलया योगिभि-**
**र्व्युज्जहर्थ त्रयीगात्र यज्ञक्रतुः ॥ ४६ ॥**

**सामगा ऊचुः–**

**संप्रसीद त्वमस्माकमाकाङ्क्षतां दर्शनं ते परिभ्रष्टसत्कर्मणाम् ।**
**कीर्त्यमाना नृभिः सामगीरीश ते यज्ञविघ्नाः क्षयं यान्ति तस्मै नमः ॥**

**प्रकाशिका** – गां भूमिं रसाया रसातलाद्योगिभिः सनकादिभिः स्तूयमानो व्युज्जहर्थ विशेषेणोद्धृतवानसि । हे त्रयीगात्र वेदप्रतिपाद्यदेह । तुशब्दोऽवधारणे । यज्ञं करोतीति यज्ञक्रतुर्यज्ञजनकावयवः । त्रयीगात्रेण यज्ञक्रतुरित्येकं वापदम् । परिभ्रष्टानि विभ्रंशितानि सत्कर्माणि येषां ते । यज्ञविघ्ना राक्षसाः ॥ ४६,४७ ॥

**मैत्रेय उवाच–**

**इति दक्षः कविर्यज्ञं भद्ररुद्रावमर्शितम् ।**
**कीर्त्यमाने हृषीकेशे उन्निन्ये यज्ञभावने ॥ ४८ ॥**

**प्रकाशिका** – रुद्रावमर्शितं रुद्रेण नाशितम् । नाम्नि कीर्त्यमाने । सर्वैरिति शेषः । उन्निन्ये ऊर्ध्वं नीतवान् । समाप्तं कृतवानिति यावत् । हे भद्र विदुर । यज्ञं भावयत्युत्पादयतीति यज्ञभावनः तस्मिन् ॥ ४८ ॥

**भगवान् स्वेन भागेन सर्वात्मा सर्वभागभुक् ।**
**दक्षं बभाष आभाष्य प्रीयमाण इवानघ ॥ ४९ ॥**

**प्रकाशिका** – सर्वात्मेन्द्रादिसर्वान्तर्यामी सन् सर्वभागभुगपि स्वेन भागेन त्रिकपालपुरोडाशेन प्रीयमाण इवेदं बभाषे । पूर्णत्वादिवशब्दः । यथा प्रीयमाणः प्रियं वक्ति तथेति वा । दक्षं बभाषे दक्षं प्रति स्वरूपमुपदिशति ॥ ४९ ॥

**श्रीभगवानुवाच–**

**अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् ।**
**आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः ॥ ५० ॥**

**तात्पर्यम् – 'अन्तर्यामिस्वरूपेण ब्रह्मरुद्राद्यभिन्नता । न तु जीवस्वरूपेण जीवा भिन्ना यतो हरेः । विशेषाभेदवचनं सन्निधानविशेषतः । सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं हरेरि'ति भविष्यत्पर्वणि ॥ ५० ॥**

**प्रकाशिका** – तमेवोपदेशमाह ॥ अहमिति । अत्र हरेर्ब्रह्मरुद्राभेदः प्रतीयते तथा जगत आत्मेति सर्वाभेदोऽतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैवाह ॥ अन्तर्यामीति । तुशब्दोऽवधारणे । ब्रह्माद्यन्तर्यामिहरिस्वरूपेणैव ब्रह्मादिनामकेन ब्रह्मरुद्राद्यभिन्नता हरेरुच्यत इत्यर्थः । अवधारणा-व्यावर्त्यमाह ॥ न तु जीवस्वरूपेणेति । ब्रह्मरुद्रादिजीवस्वरूपेण नेत्यर्थः । इदमुपलक्षणम् । न जडस्वरूपेणेत्यपि ग्राह्यम् । एवमग्रेऽपि जीवपदं जडोपलक्षकम् । कुत इत्यत उक्तम् ॥ जीवा इति। जीवा भिन्नत्वेन प्रमिताः । नन्वेवं ब्रह्मा च रुद्रश्चेति विशिष्य हरेर्ब्रह्मरुद्राभेदवचने किं निमित्तमित्यत आह ॥ विशेषेति । विशेषाभेदवचनमित्यर्थः । हरेस्तत्र सन्निधानविशेषतः संनिधानविशेषमपेक्ष्य । उपपद्यत इति शेषः । नन्वंतर्यामित्वातिरिक्तं कीदृशं संनिधान-मित्यपेक्षायामाह ॥ संनिधानमिति । हरेर्यत्सामर्थ्यव्यञ्जनं तदेव संनिधानं सम्यगवस्थानं प्रोक्तमिति । अन्यत्र तु विधानमात्रमित्यर्थः । तथा च ब्रह्मरुद्राख्यजीवस्थितस्य हरेः सृष्टिसंहार-सामर्थ्यव्यञ्जकत्वादितरजीवस्थितहरिस्वरूपापेक्षया तयोर्विशेषेणाभेदवचनमिति भावः । तथा चाहं विष्णुनामा ब्रह्मा ब्रह्मान्तर्यामी ब्रह्मनामा च शर्वो रुद्रान्तर्यामी हरनामाचेत्येवं त्रिरूपो जगतः सृष्ट्यादौ परं कारणमुत्तमकारणमात्माऽन्तर्यामीश्वरः स्वामी । उपद्रष्टोत्तमद्रष्टा । साक्षीति यावत् । स्वयं दृक् स्वप्रकाशो विशिष्यत इति विशेषणं न विद्यते विशेषणं यस्मात्सोऽविशेषणः । तारतम्यानन्तर्गत इति यावदिति मूलार्थ इति भावः ॥ ५० ॥

**स आत्ममायामाविश्य योऽहं गुणमयीं द्विज ।**
**सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञाः क्रियोचिताः ॥ ५१ ॥**

**प्रकाशिका** – उक्तमेव प्रपञ्चयति ॥ स आत्ममायामाविश्येति । हे द्विज । योऽहं त्रिरूपः सोऽहं सत्त्वादिगुणमयीमात्ममायां स्वाधीनां जडप्रकृतिमाविश्य रजोगुणोपादानत्वेन ब्रह्माणं सृष्ट्वा ब्रह्माख्यमद्रूपेण तं प्रविश्य जगत्सृजन् सत्त्वगुणप्रवर्तकेन विष्णुरूपेण विश्वं रक्षन्

तमोगुणोपादानत्वेन शिवं सृष्ट्वा शिवाख्यमद्रूपेण तं प्रविश्य हरन्संहरन् तत्तत्क्रियोचिता: सर्जनादिक्रियोचिता ब्रम्हाविष्णुहरेति संज्ञा दध्रे धारयामि । बृंहणात्सर्जनाद्ब्रह्मा वेशनाद्रक्षणाद्विष्णुर्हरणात्संहरणाद्रुद्र इति संज्ञानां क्रियावाचित्वं ज्ञातव्यम् । तथा च ब्रह्मरुद्रयोर्मत्संनिधानविशेषाधिष्ठानत्वात्तत्सृष्टिसंहारवचनं नोचितमित्याशय: ॥ ५१ ॥

**तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि ।**
**देहात्मबुद्धिर्भूतानि भेदेनाज्ञोऽनुपश्यति ॥ ५२ ॥**

**तात्पर्यम् – 'हरेर्वशत्वदृष्टिस्तु भूतानामपृथग्दृशिः । प्रियत्वदृष्टिरथवा ब्रह्मादीनां विशेषत' इति गारुडे ॥ ५२ ॥**

**प्रकाशिका** – नन्वेवं ब्रह्मादिभूतानि न विष्णोरधीनानीति केचिज्जानन्तीत्यतस्तान्निन्दति ॥ तस्मिन्निति । अत्र भूतानि भेदेन य: पश्यति सोऽज्ञ इति भेदज्ञानिनिन्दापरत्वप्रतीतिवारणाय तात्पर्यं प्रमाणेनैवाह ॥ हरेरिति । प्रियत्वदृष्टि: स्वकीयत्वदृष्टि: । अथवेति व्यवस्थितो विकल्प: । तथा च भूतानां यत्र हरेरपृथग्दृशिरभेददर्शनमुच्यते । तत्र भूतानां हरेर्वशत्वदृष्टिरेव व्याख्येया । यदधीना यस्य सत्तेति वचनात् । यत्र च यस्माद्भूतानामपृथग्दृशिर्भूतानामुच्यते तत्र स्वप्रियत्वदृष्टिरेव व्याख्येया । ममात्माभद्रसेन इत्यादौ प्रियेऽप्यभेदवाचकशब्दप्रयोगदर्शनात् । ब्रह्मादीनामुत्तमानां भूतानां स्वस्मादपृथग्दृशिश्चोच्यते तर्हि तत्र विशेषत: । इतरापेक्षया विशेषेण प्रियत्वदृष्टिर्व्याख्येयेत्यर्थ: । अनेन यथा पुमानिति श्लोकतात्पर्यमप्युक्तमित्यवगन्तव्यम् । ॥ ततश्चायं श्लोकार्थ: ॥ योऽहमेवं विश्वस्य सृष्ट्यादिकर्ता यस्मिन् ब्रह्मणि गुणपूर्णेऽद्वितीये समाधिकरहिते केवले जडामिश्रे परमात्मनि सकलजीवोत्तमे मयि स्थितानि मदधीनानि यानि भूतानि भेदेन पृथक्त्वेन । मदधीनसत्तेति यावत् । योऽनुपश्यति स्वशास्त्रमनुसृत्य जानाति । जातावेकवचनम् । स देहात्मबुद्धिर्देहादावहमेव कर्तेति ज्ञानवान् । भ्रान्त इति यावत् । कुतो यतोऽज्ञो मम भूतानां च स्वरूपज्ञानशून्य: । तथा च हरेर्जगज्जन्मादिकर्तृत्वाद्गुणपूर्णत्वादद्वितीयत्वादित्युक्तत्वाच्च ब्रह्मादिभूतानि हर्यधीनानीत्येव दृष्टि: कार्येति भाव: ॥ ५२ ॥

**यथा पुमान् न स्वाङ्गेषु शिर:पाण्यादिषु क्वचित् ।**
**पारक्यबुद्धिं कुरुत एवं भूतेषु मत्पर: ॥ ५३ ॥**

**प्रकाशिका** – एवं रुद्रद्रोहस्तव नोचित इत्युक्त्वेदानीं स्वोत्तमेषु रुद्रादिषु प्रत्युताधिकारिणा विशेषाकारेण प्रियत्वदृष्टिरेव कार्येत्याशयेनाधिकारिबुद्धिं सदृष्टान्तमाह ॥ यथेति । क्वचित्

कदाचित् पारक्यबुद्धिं अस्वकीयत्वबुद्धिमिति यावत् । न कुरुते । किन्तु स्वकीयत्वबुद्धिमेव करोति । एवं तथा मत्परः अहमेवपर इति ज्ञानी भूतेषु प्राणिषु पारक्यबुद्धिं न कुरुते । किन्तु स्वकीयत्वबुद्धिमेव करोति । स्वोत्तमेषु विशेषाकारेणेत्यपि पूरणीयम् । तथा च तवापि मत्परत्वाद्रुद्रादिस्वोत्तमेषु स्वकीयबुद्धिरावश्यकीत्याशयः ॥ ५३ ॥

**त्रयाणामेकभावानां यो न पश्यति वैभिदाम् ।**
**सर्वभूतात्मना ब्रह्मन् स शान्तिमधिगच्छति ॥ ५४ ॥**

**तात्पर्यम् – सर्वभूतात्मना सर्वभूतान्तर्यामित्वेन ॥ ५४ ॥**

**प्रकाशिका –** एवं ब्रह्मा च शर्वश्चेत्यादिनोक्तरीत्या त्रिमूर्त्यैक्यमुपपाद्येदानीं जगत आत्मेत्युक्तसर्वान्तर्यामित्वेन हेतुना प्राप्तभेदशङ्कामपाकुर्वन् तत्र तात्पर्यद्योतनाय तद्धेतुः फलमाह ॥ त्रयाणामिति । तत्र सर्वभूतात्मनेत्यस्य प्रकृतं सङ्गतमर्थं दर्शयति ॥ सर्वभूतात्मनेति । तथा च भावप्रधानो निर्देश इति भावः । ततश्चायं श्लोकार्थः । एकभावानामेकधर्माणां सर्वत्र ज्ञाना-नन्दादिगुणपूर्णत्वेन प्रमितानामिति यावत् । अनेन सर्वान्तर्यामित्वेन भेदानुमानेन बाधितमिति सूचयति । त्रयाणां ब्रह्मविष्णुहरसंज्ञानां मद्रूपाणां सर्वात्मना सर्वात्मत्वेन सर्वान्तर्यामित्वेन हेतुना प्राप्तां भिदां न जानाति न पश्यति । ब्रह्मन् दक्ष । स शान्तिं मोक्षं गच्छतीत्यन्वयः ॥ ५४ ॥

**मैत्रेय उवाच–**

**एवं भगवताऽऽदिष्टः प्रजापतिपतिर्हरिम् ।**
**अर्चित्वा क्रतुना स्वेन देवानुभयतोऽयजत् ॥ ५५ ॥**

**तात्पर्यम् – उभयतः सोमतो हविषश्च ॥ ५५ ॥**

**प्रकाशिका –** आदिष्ट उपदिष्टः । देवान् अयजत्पूजयामास । अत्रोभयत इत्यस्याप्रतीत्या प्रकतसङ्गतमर्थं दर्शयति ॥ सोमत इति । हविषः पुरोडाशादिरूपात् ॥ ५५ ॥

**रुद्रं च स्वेन भागेन ह्युपाधावत् समाहितः ।**
**कर्मणोदवसानेन सोमपानितरानपि ॥ ५६ ॥**

**प्रकाशिका –** स्वेन भागेन यज्ञावशिष्टेनोपधावदुपासितवान् । उदवसानमुदवस्यते समाधत्तेऽ-नेनेत्युदवसानं समाप्तीष्टिलक्षणं कर्म तेनाग्नेयं पञ्चकपालमुदवसानीयं निर्वपेदिति श्रुतेः । सोमपानिति प्रयोगश्छान्दस इति ज्ञातव्यम् । इतरान् असोमपान् उपधावदित्यनुवर्तते ॥ ५६ ॥

**उदवस्य सहर्त्विग्भिः सस्नाववभृतं ततः**
**तस्मा अप्यनुभावेन स्वेनैवावाप्तराधसे ।**
**धर्म एव मतिं दत्वा त्रिदशास्ते दिवं ययुः ॥ ५७ ॥**

**प्रकाशिका** – ततोऽनन्तरमुदवस्य समाप्तीष्टिं कृत्वाऽवभृथं यथा भवति तथा सस्नौ स्नातवान् । स्वेनैवानुभावेन भगवन्महिम्नैवावाप्तराधसेऽवाप्तसर्वसिद्धयेऽपि तस्मै पुनर्धर्म एव मतिं दत्वेत्यर्थः ॥ ५७ ॥

**एवं दाक्षायणी हित्वा सती पूर्वकलेवरम् ।**
**जज्ञे हिमवतः क्षेत्रे मेनायामिति शुश्रुमः**
**तमेव दयितं भूयस्त्ववाप पतिमम्बिका ॥ ५८ ॥**

**प्रकाशिका** – एवमिति । क्षेत्रे भार्यायां दयितं प्रियमावृणोत्सम्यक् स्वीकृतवती ॥ ५८ ॥

**अनन्यभावैकगतिः शक्तिः सुप्तेव पूरुषम्**
**एतद् भगवतः शम्भोः कर्म दक्षाध्वरद्रुहः ।**
**श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः ॥ ५९ ॥**

**तात्पर्यम्** – 'शक्तित्वाद्विष्णुशक्तिस्तु शक्तिशब्देन चोच्यते । शक्यत्वात्प्रकृतिश्चापि स्वापः सृष्टिं विना हरौ । रतिस्तस्यास्तु कथितो नह्यन्यः स्वाप उच्यत' इति तन्त्रसारे ॥ ५९ ॥

**प्रकाशिका** – अनन्यभावेनान्यभक्त्यभावेनैकः शंकर एव गतिर्गम्यो यस्याः सा तथोक्ता । अत्र दृष्टान्तमाह ॥ शक्तिरिति । प्रलये सुप्ता हरावेव रता सृष्टिव्यापारं विना स्थिता शक्तिर्भार्या लक्ष्मीः पुरुषं विष्णुमिव यथा भजति तथेत्यर्थः । अत्र का शक्तिः का च तस्याः सुप्तिरित्यतः प्रमाणेनैव संदर्शयति ॥ शक्तित्वादिति । शक्तिरूपत्वादित्यर्थः । तुशब्दः परममुख्यवृत्त्येति विशेषार्थः । चशब्दः पर्यायांतरसङ्ग्रहार्थः । प्रकृतिश्चेतना । अचेतनप्रकृतिसङ्ग्रहायापिशब्दः । स्वापः सुप्तिवाचकशब्दार्थः । रतिरित्युपलक्षणम् । अचेतनायाः स्थितिरित्यपि ग्राह्यम् । तु शब्दोऽवधारणे । हि यस्मादन्यः प्रसिद्धः स्वाप उभयविधायास्तस्या नेष्यते । तस्माद्रतिरेवेत्यन्वयः । दक्षाध्वरद्रुहो दक्षयज्ञनाशकस्येत्यर्थः ॥ ५९ ॥

**इदं रहस्यं परमीशचेष्टितं यशस्यमायुष्यमघौघमर्षणम् ।**
**यो नित्यदाऽऽकर्ण्य तु कीर्तयेद् बुधो धुनोत्यघं कौरव भक्तिभावितः ॥६०॥**

**प्रकाशिका** – बृहस्पतेः शिष्यादवताराच्च मे मया श्रुतम् । हे कौरव विदुर । भक्त्या भावितः शोधितः ॥ ६० ॥

**सतीं मेनात्मजां तात प्राप्य जायां भवः पुनः ।**
**तया मैथुनमारभ्य रेमे देवः समाः शतम् ॥ ६१ ॥**

**स्ववीर्यधारणेऽकल्पां ज्ञात्वा जायां स धूर्जटिः ।**
**उत्ससर्जाम्बरे रेतो गङ्गा जग्राह तन्नदी ॥ ६२ ॥**

**प्रकाशिका** – गङ्गा गङ्गाख्यानदी ॥ ६१,६२ ॥

**पीत्वाऽन्तरजरं वह्निश्चच्छर्द शरकानने ।**
**कुमारोऽभूत् ततस्तस्मै स्तनं षट् कृत्तिका ददुः ॥ ६३ ॥**

वह्निरन्तरजरं तद्रेतः पीत्वा शरकानने चच्छर्द ततो रेतसः । कुमारस्य षण्मुखत्वे निमित्त-माह ॥ तस्मा इति ॥ ६३ ॥

**षड्भिर्मुखैः स्तनं पीत्वा स बालः षण्मुखोऽभवत् ।**
**ततश्चक्रुः सैन्यपालं सर्वासुरभयंकरम् ॥ ६४ ॥**

**तात्पर्यम्** – **'स्वाहाद्वारेण नदीतीरे शरकानने चच्छर्दे'ति भारतोक्तेः ॥ ६४ ॥**

**प्रकाशिका** – सर्वासुरभयंकरं षण्मुखम् । देवा इति शेषः । अत्र पुराणान्तरानुसारेण पार्वत्या रमणसमये देवैर्वह्निः प्रेषितस्तत्समक्षं पार्वती लज्जया वीर्यधारणे न समर्था जाता तां ज्ञात्वांऽबरे रेत उत्ससर्ज । तद्गंगाजलेऽपतत् । तत्पुनर्गृहीत्वा वन्हिमुखे हरः कोपात्स्थापितवान् वह्निस्तद्दुर्जरं धर्तुमशक्यं शरकानने चच्छर्देति कथा ज्ञातव्या । अत्र वह्निरेव साक्षाच्छरकानने चच्छर्देति प्रतीतिवारणायाह ॥ स्वाहाद्वारेणेति । स्वाहा वह्निभार्या तद्वारेणेत्यर्थः । कुत इत्यत आह ॥ भारतोक्तेरिति । भारते तथोक्तत्वादित्यर्थः । तथा च वह्निः स्वभार्यायां तद्रेतः स्थापितवान् साऽपि तद्धारणेऽसमर्था शरकानने चच्छर्देति मूलार्थ इति भावः ॥ ६४ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धेऽष्टमोध्यायः ॥ ८ ॥

# अथ नवमोध्यायः ।

मैत्रेय उवाच–

सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः ।
नैते गृहान् ब्रह्मसुता ह्यवसन्नूर्ध्वरेतसः ॥ १ ॥

प्रकाशिका – ॥ हरिः ॐ ॥ एवं मनुकन्यासन्ताननिरूपणेनैव ब्रह्मपुत्राणां मरीच्यादीनां सन्ततिर्वर्णिता । इदानीमवशिष्टब्रह्मसुतानां स्थितिमाह ॥ सनकाद्या इति । नावसन्नाश्रिताः । ऊर्ध्वरेतसः परमहंसाः । संन्यासिन इति यावत् । आसन्निति शेषः । अतस्तेषां सन्ततिर्न जातेत्याशयः ॥ १ ॥

मृषाऽधर्मस्य भार्याऽऽसीद् दम्भं मायां च शत्रुहन् ।
असूत मिथुनं तत्तु निर्ऋतिर्जगृहेऽप्रजः ॥ २ ॥

प्रकाशिका – अधर्मोऽपि ब्रह्मपुत्रस्तस्य वंशमाह ॥ मृषेति चतुर्भिः । दंभोऽविद्यमानमहत्त्व-प्रदर्शनम् । मायां कापट्यम् । अत्र मृषादिशब्दा अभिमानिचेतनपराः । अप्रजः पुत्ररहितः ॥२॥

तयोः समभवल्लोभो निकृतिश्च महामते ।
ताभ्यां क्रोधश्च हिंसा च दुरुक्तिश्च तयोः कलिः ॥ ३ ॥

प्रकाशिका – निकृतिः शठता ॥ ३ ॥

दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम ।
तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥ ४ ॥

प्रकाशिका – भयमृत्युशब्दवाच्ययोरन्यतरस्य स्त्रीत्वं ज्ञातव्यम् । यातना तीव्रवेदना ॥ ४ ॥

एते ह्यधर्मवृक्षस्य वंशाः संसृतिहेतवः ।
श्रेयस्कामो न सेवेत नितरामाश्रमोत्तमी ॥ ५ ॥

प्रकाशिका – न सेवेताभिमन्यमानान् । मृषादीनिति शेषः । आश्रमोत्तमी संन्यासी ॥ ५ ॥

संग्रहेण मया ख्यातः अनुसर्गस्तवानघ ।
त्रिः श्रुत्वैतत् पुमान् पुण्यं विधुनोत्यात्मनो मलम् ॥ ६ ॥

**प्रकाशिका** – ख्यात अनुसर्ग इत्यत्र संध्यभावश्छान्दसः । पुण्यं पुण्यकरम् । आत्मनो मनसो मलं रागादिकं धुनोति निरस्यति ॥ ६ ॥

**अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह ।**
**स्वायंभुवस्यापि मनोर्हरेरंशांशजन्मनः ॥ ७ ॥**

**तात्पर्यम् – 'आविष्टा हरिणा जीवा ब्रह्मा दक्षो मनुः पृथुः । शक्राद्या ऋषयश्चैव मत्स्यव्यासादयो हरिरि'ति ब्रह्मवैवर्ते ॥ ७ ॥**

**प्रकाशिका** – अतः प्रयोजनसद्भावात् । मनोर्वंशं मनुपुत्रवंशम् । कथंभूतस्य मनोः । हरेरंशांशजन्मनः । अत्र स्वायंभुवस्य मनोर्मत्स्यादिवत्साक्षाद्धरेरंशत्वमुच्यत इति प्रतीतिवारणाय तात्पर्यं प्रमाणेनैव दर्शयति ॥ आविष्टा इति । ब्रह्माद्यादेवा ऋषयश्च ये ते जीवा हरिणाविष्टा एव न तु साक्षादंशाः । मत्स्यव्यासादयो हरिर्हरेः साक्षादंशाः इत्यर्थः । तथा हरेर्ब्रह्माण्डान्तर्गतस्य पुरुषनामकस्य योंऽशः श्वेतद्वीपगतस्तदंशेन राजराजेश्वराख्येन युक्तं जन्म यस्य स तथोक्त-स्तस्येति मूलं व्याख्येयमिति भावः ॥ ७ ॥

**प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ ।**
**वासुदेवस्य कलया रक्षायां जगतः स्थितौ ॥ ८ ॥**

**तात्पर्यम् – 'प्रियव्रतोत्तानपादप्रमुखेषु हरिः स्वयम् । आविष्टः सर्वभूतेषु ऋषभाद्याः स्वयं हरिरि'ति हरिवंशेषु ॥ ८ ॥**

**प्रकाशिका** – वासुदेवस्य कलया स्वरूपांशतया जगतो रक्षायां स्थिताविति प्रतीतिवारणाय विवक्षितं तात्पर्यं प्रमाणेनैवाह ॥ प्रियव्रतेति । सर्वभूतेषु पुण्यश्लोकराजसु स्वयं राजराजाख्य-स्वांशेन । उक्तस्यापवादमाह ॥ ऋषभाद्या इति । तापसमन्वादिसंग्रहायाद्यपदम् । स्वयं हरिः साक्षाद्धरेरंशा इत्यर्थः । तथा च वासुदेवस्य कलया राजराजाख्येनांशेनाविष्टाविति मूलं व्याख्येयमिति भावः ॥ ८ ॥

**जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः ।**
**सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः ॥ ९ ॥**

**प्रकाशिका** – प्रियव्रतवंशस्य बहुत्वात्सूचीकटाहन्यायेनोत्तानपादवंशं निरूपयितुमाह ॥ जायेति । सुनीतिः सुरुचिश्च जाये । तयोर्मध्ये यस्याः सुनीतेः सुतो ध्रुवः ॥ ९ ॥

एकदा सुरुचेः पुत्रमङ्कमारोप्य लालयन् ।
उत्तमं नारुरुक्षन्तं ध्रुवं राजाऽभ्यनन्दत ॥ १० ॥

**प्रकाशिका** – इतः परं पञ्चभिरध्यायैर्ध्रुवचरितमाह ॥ एकदेति । उत्तममुत्तमसंज्ञं सुरुच्याः पुत्रं लालयन् । आरुरुक्षन्तमंकमारोढुमिच्छन्तं नाभ्यनन्दत ॥ १० ॥

तथा चिकीर्षमाणं तं सपत्न्यास्तनयं ध्रुवम् ।
सुरुचिः शृण्वतो राज्ञः सेर्ष्यमाहातिगर्विता ॥ ११ ॥

**प्रकाशिका** – तथा चिकीर्षमाणमंकमारोढुमिच्छन्तं सपत्न्याः सुनीतेः पुत्रम् । सेर्ष्यमिति क्रियाविशेषणम् ॥ ११ ॥

न वत्स नृपतेर्धिष्ण्यं भवानारोढुमर्हति ।
न गृहीतो मया यत् त्वं कुक्षावपि नृपात्मज ॥ १२ ॥

बालोऽसि बत नात्मानमन्यस्त्रीगर्भसंभृतम् ।
नूनं वेद भवान् यस्य दुर्लभेऽर्थे मनोरथः ॥ १३ ॥

**प्रकाशिका** – गर्वोक्तिमेवाह ॥ नेति त्रिभिः । नृपतेर्धिष्ण्यं सिंहासनम् ॥ १२,१३ ॥

तपसाऽऽराध्य पुरुषं तस्यैवानुग्रहेण मे ।
गर्भे त्वं साधयाऽऽत्मानं यदीच्छसि नृपासनम् ॥ १४ ॥

**प्रकाशिका** – पुरुषमीश्वरम् । अस्मिन्सिंहासनयोग्यपुत्रसंपादके मे गर्भे आत्मानं देहं साधय संपादय ॥ १४ ॥

**मैत्रेय उवाच–**

मातुः सपत्न्याः सुदुरुक्तिविद्धः
श्वसन् रुषा दण्डहतो यथाऽहिः ।
हित्वा मिषन्तं पितरं सन्नवाचं
जगाम मातुः स रुदन् सकाशम् ॥ १५ ॥

**प्रकाशिका** – मिषन्तं पश्यन्तम् । सन्नवाचं तूष्णीभूतम् ॥ १५ ॥

तं निःश्वसन्तं स्फुरिताधरोष्ठं
सुनीतिरुत्सङ्गमुदूह्य बालम् ।
निशम्य तत् पौरमुखान्नितान्तं
सा विव्यथे यद् गदितं सपत्न्या ॥ १६ ॥

**प्रकाशिका** – उदूह्यारोप्य । सपत्न्या यद्गदितं तत्पुत्रमुखान्निशम्य ॥ १६ ॥

सोत्सृज्य धैर्यं विललाप शोकदावाग्निना दावलतेव बाला ।
वाक्यं सपत्न्याः स्मरती सरोजश्रिया दृशा बाष्पकलामुवाह ॥ १७ ॥

**प्रकाशिका** – शोक एव दावाग्निस्तेन शोकाख्यवनवह्निना । दह्यमानेति शेषः । दावलतेव वनस्थितलतेव स्थिता सा बाला विललाप विलापं चकार । बाष्पकलां नेत्रजलधाराम् ॥ १७ ॥

दीर्घं श्वसन्ती वृजिनस्य पारम्
अपश्यती बालकमाह बाला ।
माऽमङ्गलं तात परेषु मंस्था
भुङ्क्ते जनो यत् परदुःखदस्तत् ॥ १८ ॥

**प्रकाशिका** – वृजिनस्य दुःखस्य पारमवसानम् । परेषु वैरिष्वभद्रममङ्गलं मा मंस्था न निरूपय । यद्यस्मात्परदुःखदो यः स तु तद्दुःखं भुंक्ते ॥ १८ ॥

सत्यं सुरुच्याऽभिहितं भवान् मे
यद् दुर्भगाया उदरे गृहीतः ।
स्तन्येन वृद्धश्च विलज्जते यां
भार्येति वा वोढुमिडस्पतिर्माम् ॥ १९ ॥

**प्रकाशिका** – दुर्भगत्वमेवाह ॥ विलज्जत इति । इडस्पतिर्भूपतिर्यां मां च भार्येति वोढुं स्वीकर्तुं विलज्जते । वाशब्दश्चत्वर्थे । भवान् तस्या दुर्भगाया दुःखहेत्वदृष्टाया मे मयोदरे गृहीतः स एव स्तन्येनैव वृद्धः । न तु पितृदत्तरसायनेन । यस्मात्तस्माद्बालोऽसि । नात्मानमन्यस्त्रीगर्भसंभवमिति यत्सुरुच्याभिहितं तत्सत्यं ॥ १९ ॥

आतिष्ठ तत् तात विमत्सरस्त्वमुक्तं सुमात्राऽपि यदव्यलीकम् ।
आराधयाधोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा ॥ २० ॥

**प्रकाशिका** – वैरिभिरुक्तमपि हितवदेवावश्यं ग्राह्यमित्याशयेनाह ॥ आतिष्ठेति । पितृभार्यात्वेन मातृसमाना मातुःसपत्नी तयाऽपि यदुक्तं तदातिष्ठ कुरु । कुतः । यत् यस्मात् । अव्यलीकं सत्यं प्रियं वा । किं तयोक्तं यन्मया कर्तव्यमित्यतस्तपसाऽऽराध्यपुरुषमिति तयोक्त-मर्थतोऽनुवदति ॥ आराधयेति । सत्पुत्र उत्तमो यथा तथाऽत्मनोऽध्यासनं यदीच्छसे तर्ह्यधोक्षज-पादपद्ममाराधयेति यदुक्तं तदातिष्ठेत्यन्वयः ॥ २० ॥

**यत्पादपद्मं परिपूज्य विश्वविभावनायात्तगुणाभिपत्तेः ।**
**अजोऽध्यतिष्ठत् खलु पारमेष्ठ्यं पदं जितात्मा श्वसनाभिवन्द्यम् ॥ २१ ॥**

**प्रकाशिका** – ध्रुवस्य रुच्युत्पादनाय पुराकल्परूपमर्थवादमाह ॥ यत्पादपद्ममिति द्वाभ्याम् । यत् यस्य । परिपूज्यविश्वस्य विश्वभावनाय सृष्ट्याद्यर्थमात्तगुणाभिपत्तेः स्वकृतसत्त्वादिगुण-संघस्य। अजो ब्रह्मा जितात्मा वशीकृतमनाः । श्वसनेन मुख्यवायुनाऽभिवन्द्यम् । वायोर्ब्रह्म-समत्वेऽपि पदप्रयुक्तमभिवन्दनमिदमिति ज्ञातव्यम् । जितात्मश्वसनाभिवन्द्यमिति पाठे जित आत्मा मनः प्राणश्च यैस्ते तथा तैरभिवन्द्यमिति व्याख्येयम् ॥ २१ ॥

**तथा मनुर्वो भगवान् पितामहो यमेकभक्त्या पुरुदक्षिणैर्मखैः ।**
**इष्ट्वाऽभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापवर्ग्यम् ॥ २२ ॥**

**प्रकाशिका** – अन्यतोऽन्यैः ॥ २२ ॥

**तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ।**
**अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम् ॥ २३ ॥**

**प्रकाशिका** – मृग्यो पदाब्जयोः पद्धतिर्मार्गो यस्य तम् । अनन्यभावे अन्यभक्तिरहिते निजधर्मा यमादयस्तैर्भाविते शोधिते । निर्मल इति यावत् ॥ २३ ॥

**नान्यं ततः पद्मपलाशलोचनाद् दुःखच्छिदं ते मृगयामि कञ्चन ।**
**यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग विमृग्यमाणया ॥ २४ ॥**

**प्रकाशिका** – कुतोऽयमेव भजनीय इत्यत आह ॥ नान्यमिति । यो युष्माकं कुलदेवता लक्ष्मीकान्तस्तस्मात् । श्रीरेव तादृशी किं न स्यादित्यत उक्तम् ॥ य इति । नवनवविशेषोपलंभे पूजार्थं हस्तगृहीतपद्मयेत्यर्थः । अङ्ग हे ध्रुव । इतरैर्ब्रह्मादिभिर्ज्ञानभक्त्यादिवृद्ध्यर्थं विशेषेण मृग्यमाणया । तथा च सर्वोत्तमश्रीस्वामित्वादयमेव भजनीय इति भावः ॥ २४ ॥

**मैत्रेय उवाच–**

**एवं संजल्पितं मातुराकर्ण्यार्थागमं वचः ।**
**सन्नियम्यात्मनाऽऽत्मानं निश्चक्राम पितुः पुरात् ॥ २५ ॥**

**प्रकाशिका –** संजल्पितं सम्यगुक्तं मातुर्मात्रा । अर्थस्य पुरुषार्थस्यागमः प्राप्तिर्यस्मादात्मना धैर्येणात्मानं मनः सन्नियम्य विषयेभ्यो निवृत्त्य ॥ २५ ॥

**नारदस्तदुपाकर्ण्य ज्ञात्वा चास्य चिकीर्षितम् ।**
**स्पृष्ट्वा मूर्धन्यघघ्नेन पाणिना प्राह विस्मितः ॥ २६ ॥**

**प्रकाशिका –** उपाकर्ण्येत्यनेन नारदस्य योगीन्द्रत्वाद्दूरश्रवणे शक्तिरस्तीति सूचयति । स्पृष्टेत्यनेन समग्रानुग्रहम् ॥ २६ ॥

**अहो तेजः क्षत्रियाणां मानभङ्गममृष्यताम् ।**
**बालोऽप्ययं हृदा धत्ते यत् समातुरसद्वचः ॥ २७ ॥**

**प्रकाशिका –** विस्मित इत्युक्तम् । विस्मयमेवाभिनयेनाह ॥ अहो इति । तेजो धैर्यलक्षणं प्रभावो वा । अमृश्यतामसहमानानाम् ॥ २७ ॥

**नारद उवाच–**

**क्व यात्येको भवान् वत्स हित्वा स्वगृहमृद्धिमत् ।**
**लक्षये त्वाऽवमत्याङ्ग संतप्तं स्वजनोत्थया ॥ २८ ॥**

**प्रकाशिका –** लक्षये लक्षणवृत्त्या जानामि ॥ २८ ॥

**ध्रुव उवाच–**

**किं न ते ध्यानजातेन दृष्टं वा योगराधसा ।**
**नोत्सहे सुरुचेर्वाचा समाधातुं मनःक्षतम् ॥ २९ ॥**

**नारद उवाच–**

**नाधुनाऽप्यवमानं ते सन्मानं चापि पुत्रक ।**
**लक्षयामः कुमारस्य सक्तस्य क्रीडनादिषु ॥ ३० ॥**

**प्रकाशिका –** योगराधसा योगसामर्थ्येन न दृष्टं किं सर्वं दृष्टमेव । तथाऽपि । वक्ष्यामीति शेषः। तदेव वचनं दर्शयति ॥ नोत्सह इति । नोत्सहे न शक्तोस्मि । वाचा जातमिति शेषः ॥ २९ ॥ ३० ॥

**विकल्पे विद्यमानेऽपि न ह्यसंतोषहेतवः ।**
**पुंसो मोहमृते भिन्ना यल्लोका निजकर्मभिः ॥ ३१ ॥**

**तात्पर्यम् – विविधकल्पने विद्यमानेऽपि परिणततया ॥ ३१ ॥**

**प्रकाशिका –** ननु नाहं लौकिककुमार इत्यतो विवेकिनोऽपि विमर्शे सति वैरिदुर्वचो न दुःखहेतुरित्याह ॥ विकल्प इति । अत्र विकल्पे मानापमानविवेके सत्यपि लोका भिन्ना न सन्ति किन्तु मोहकल्पिता एवेत्यर्थपरत्वप्रतीतिनिरासाय विकल्प इत्यस्यार्थमाह ॥ विविधकल्पन इति । अत्र विकल्पे मानापमान विवेके सत्यपि लोका भिन्ना न सन्ति किन्तु मोहकल्पिता एवेत्यर्थ-परत्वप्रतीतिनिरासाय विकल्प इत्यस्यार्थमाह ॥ विविधकल्पन इति । अत्र मोहकल्पित-तयाऽभिप्रेतत्ववर्णने विद्यमान इत्यनेनाविरोध इति दर्शनाय विद्यमानेऽपीत्यस्यानुवादः । विविधकल्पने शत्रुमित्रादिभावेन कल्पने परमार्थतो विद्यमानेऽपीत्यर्थः । कल्पशब्दो नात्र भ्रमरूपज्ञानपरः किन्तु जननपर इत्याशयेनाह ॥ परिणततयेति । प्रकृतेरिति । शेषः । कचित्तथैव पाठः । तथा च विकल्पे प्रकृतिपरिणामवशाच्छत्रुमित्रभावेन जनने विद्यमानेऽपि पुंसो मोहमृतेऽयं मम स्वभावत एव शत्रुरिदं मित्रमिति भ्रममन्तरेणासन्तोषहेतवो दुःखजनका न हि । इदमुपलक्षणम् । सुखजनकाश्चेत्यपि ग्राह्यम् । विवेकिनोऽप्युक्तरूपमिथ्याज्ञानमेव सुखदुःखजनकं न शत्रादितयोत्पन्ना लोका इति जानन्तीत्यर्थः । अयं शत्रुरित्यादिज्ञानस्य मोहत्वमेव कुत इत्यत उक्तम् ॥ यल्लोक इति । यद्यस्माल्लोकाः । निजकर्मभिरदृष्टप्रेरकेश्वरोत्पादित प्रकृति-परिणामवशाद्भिन्नाः शत्रादितयोत्पन्ना न तु सज्जीवेषु शत्रुस्वभावतः शत्रुभावः । नापि दुर्जीवेषु मित्रभावः । अतस्तेषूक्तरूपं ज्ञानं मोहरूपमेव । ततश्चेतादृशपरिणामजनकेश्वरस्वातन्त्र्यविमर्शनेन मोहमपाकृत्य मनसि खेदः परिहार्य इत्याशयः ॥ ३१ ॥

**परितुष्येत् ततस्तात तावन्मात्रेण पूरुषः ।**
**दैवोपसादितं यावद् वीक्ष्येश्वरगतिं बुधः ॥ ३२ ॥**

नन्वेवमध्यासनप्राप्त्यभावे कथं ममजीवनमित्यत आह ॥ परितुष्येदिति ॥ ततः कर्मप्रेरके-श्वरस्य स्वातन्त्र्यात् ईश्वरगतिं अदृष्टप्रेरकेश्वरस्य स्वातन्त्र्यं वीक्ष्य सम्यग्विचार्य बुधो विद्वान्याव-

दैवोपसादितं अदृष्टप्रेरकेश्वरेण दत्तं तावन्मात्रेण अन्नादिनापरितुष्येदलंबुद्धिं प्राप्नुयात् । अधिकाकांक्षा न कार्येत्याशयः ॥ ३२ ॥

**अथ मात्रोपदिष्टेन योगेनावरुरुत्ससि ।**
**यत्प्रसादात् स वै पुंसां दुराराध्यो गतो मम ॥ ३३ ॥**

**प्रकाशिका** – अध्यासनार्थं यत्नोऽपि तव न सुकर इत्याह ॥ अथेति । अथ यदि मात्रोपदिष्टेन योगेनोपायेन यत्प्रसादाद्यस्य हरेः प्रसादाद्यं हरिमवरुरुत्सस्यनुग्रहोन्मुखीकर्तुमिच्छसि । अध्यासनमिति शेषः । तर्ह्यपि स हरिर्मम पुंसां दुराराध्यो मतः । कुतस्तत्प्रसादावाप्तिः कुतस्तरां फलाप्तिरित्यर्थः । वा इत्यनेन स्वानुभवसिद्धिं दर्शयति ॥ ३३ ॥

**मुनयः पदवीं यस्य निःसङ्गेनोरुजन्मभिः ।**
**न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना ॥ ३४ ॥**

**प्रकाशिका** – दुराराध्यत्वमेवोपपादयति ॥ मुनय इति । पदवीं मार्गम् । निःसङ्गेन तीव्रभक्तियोगयुक्तेन समाधिना मृग्यंतोऽपि यस्य पदं न विदुः स देवो दुराराध्य इत्यन्वयः ॥ ३४ ॥

**अतो निवर्ततामेष निर्बन्धस्तव निष्फलः ।**
**यतिष्यति भवान् काले श्रेयसां समुपस्थिते ॥ ३५ ॥**

**प्रकाशिका** – तर्हि श्रेयसोऽर्थं प्रयतमानस्य मम जन्मनो वैय्यर्थ्यमित्यतो नायं काल इत्याह ॥ यतिष्यतीति । श्रेयसे निःश्रेयसाय काले वार्धिके सम्यगुपस्थिते प्राप्ते सति ॥ ३५ ॥

**यस्य दैवेन विहितं स तेन सुखदुःखयोः ।**
**आत्मानं तोषयन् देही तमसः पारमृच्छति ॥ ३६ ॥**

**प्रकाशिका** – तावत्पर्यन्तमपि नाधिकाकांक्षा कार्येत्याशयेनेदानीमनुष्ठेयं मोक्षसाधनमुपदिशति ॥ यस्येति द्वाभ्याम् । सुखदुःखयोर्मध्ये यत्सुखं यद्दुःखं वा यस्य दैवेन विहितं दत्तं स देही तयोरन्यतरेणात्मानं तोषयंस्तत्कृतोच्चनीचतामनापादयंस्तमसोऽज्ञानस्य पारमन्तं मोक्षं गच्छति ॥ ३६ ॥

**गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात् ।**
**मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते ॥ ३७ ॥**

**प्रकाशिका** – गुणाधिकात् । पुरुषादिति शेषः ।। ल्यब्लोपनिमित्ता एता पञ्चम्यः । गुणाधिकं पुरुषं प्राप्येत्यादिरूपयोजना द्रष्टव्या । मुदं प्रीतिं लिप्सेत्कुर्यात् । नासूयमित्यर्थः । अनुक्रोशं कंपां न तिरस्कारम् । मैत्रीं सौहार्दम् । न तु स्पर्धाम् । तापैर्मनोखेदकैर्भावैः । तथा च मोक्षमार्गमनुतिष्ठता त्वयाऽऽदृष्टप्रेरकेश्वरनिष्ठारूपे शमे संपादिते दुर्वचनादिजनितपरितापादिनाऽभिभवस्तव न भविष्यतीति भावः ।। ३७ ।।

**ध्रुव उवाच–**

**सोऽयं शमो भगवता सुखदुःखहतात्मनाम् ।**
**दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः ।। ३८ ।।**
**अथापि मेऽविनीतस्य क्षात्रं घोरमुपेयुषः ।**
**सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि ।। ३९ ।।**

**प्रकाशिका** – योऽस्माद्विधैर्दुर्दर्शः शास्त्रदृष्ट्या ज्ञातुमशक्यः सोऽयं शमो भगवन्निष्ठालक्षणो भगवता सुखदुःखाभ्यां हतात्मनां पीडितमनसां पुंसां कृपया दर्शितो यद्यपि । अथाऽपि स शमो मे मम सुरुच्या दुर्वचो बाणैर्भिन्नेहृदि न श्रयते न स्थितिं लभते । कथं भूतस्य मे । क्षात्रं क्षत्रस्य संबन्धि घोरं धर्ममुपेयुषः प्राप्तवतोऽत एवाविनीतस्यार्येष्वनम्रस्य ।। ३८,३९ ।।

**पदं त्रिभुवनोत्कृष्टं जिगीषोः साधुवर्त्म मे ।**
**ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ।। ४० ।।**

**प्रकाशिका** – तर्हि किं त्वया कार्यमित्यपेक्षायामाह ।। पदमिति । अन्यैरप्यनधिष्ठितमत एव त्रिभुवने उत्कृष्टं पदं स्थानं जिगिषोर्जेतुं प्राप्तुमिच्छोर्मे साधुवर्त्म समीचीनं मार्गं ब्रूहि । अनेनाध्यासनप्राप्तिमात्रं न मदीयं प्रयत्नफलमिति सूचयति ।। ४० ।।

**नूनं भवान् भगवतो योऽङ्गजः परमेष्ठिनः ।**
**विनुदन्नटते वीणां हितार्थं जगतोऽर्कवत् ।। ४१ ।।**

**प्रकाशिका** – विणां वितुदन्वादयन् । अनेनाटतस्तव श्रमो नास्तीति सूचयति । तथा च त्वदटनस्य जगद्धितार्थत्वान्ममापि जगदंतस्थत्वाद्ब्रूहीत्याशयः ।। ४१ ।।

**मैत्रेय उवाच–**

**इत्युदाहृतमाकर्ण्य भगवान् नारदस्तदा ।**
**प्रीतः प्रत्याह तं बालं तद्वाक्यमनुकम्पया ।। ४२ ।।**

**प्रकाशिका** – तद्वाक्यं प्रति प्रीतः ॥ ४२ ॥

**नारद उवाच–**

**जनन्याऽभिहितः पन्थाः स वै निःश्रेयसस्य ते ।**
**भगवान् वासुदेवस्तं भज तत्प्रवणात्मना ॥ ४३ ॥**

**प्रकाशिका** – तमेव वत्साश्रयं भक्तवत्सलम् इत्यादि यो जनन्याऽभिहितः पंथा स एव ते तव निःश्रेयसस्याभिप्रेतार्थस्य सिद्धये । स्यादिति शेषः । ननु जनन्या हरिभजनं कार्यमित्येवोक्तं न तु तद्रूपविशेषभजनमतो मदभीष्टप्रदं भगवद्रूपं किं मया भजनीयमित्यपेक्षायामाह ॥ भगवानिति । वासुदेवो वासुदेवरूपो यस्तं तत्प्रवणात्मना तन्निष्ठमनसा भज इत्यन्वयः ॥ ४३ ॥

**धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः ।**
**एकमेव हरेस्तत्र कारणं पादसेवनम् ॥ ४४ ॥**

**प्रकाशिका** – स वै निःश्रेयसस्येत्युक्तमुपपादयति ॥ धर्मेति । कारणमितरव्यावर्तकसाधनम् ॥

**तत् तात गच्छ भद्रं ते यमुनायास्तटं शुचि ।**
**पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः ॥ ४५ ॥**

**प्रकाशिका** – तद्भजनाय क्षेत्रमुपपादयति ॥ तत्तातेति । तत्तस्माद्धरिपादसेवनस्यैव सकलपुरुषार्थहेतुत्वात् । मधोः पूर्णानन्दस्य हरेर्वननं भजनं यस्माद्भवति तन्मधुवनम् ॥ ४५ ॥

**स्नात्वानुसवनं तस्मिन् कालिन्द्या सलिले शिवे ।**
**कृत्वोचितानि निवसन्नात्मनः कल्पितासने ॥ ४६ ॥**

**प्रकाशिका** – अनुसवनं त्रिषवणमात्मन उचितानि संध्याद्यभावेऽपि स्वयोग्यानि नमस्कारादीनि । कल्पितासनः । कुशादिभिरिति शेषः ॥ ४६ ॥

**प्राणायामेन त्रिवृता प्राणेन्द्रियमनोमलम् ।**
**शनैर्व्युदस्याभिध्यायेन्मनसा गुरुणां गुरुम् ॥ ४७ ॥**

**प्रकाशिका** – त्रिवृता त्रीन् रेचकादीन्वृणोतीति त्रिवृत् । तेन प्राणानामवशत्वरूपमिन्द्रियाणां विषयगमनरूपं मनश्चांचल्यरूपं मलं व्युदस्य निरस्य गुरुणां गुरुं हरिम् । ह्रस्वश्छान्दसः अनेनादौ गुरुपरंपरा स्मर्तव्येति सूचयति ॥ ४७ ॥

**प्रसादाभिमुखं शश्वत्प्रसन्नवदनेक्षणम् ।**
**सुनासं सुभ्रुवं चारुकपोलं सुन्दरं हरिम् ॥ ४८ ॥**

**प्रकाशिका** – पुरुषायुषशतेनाप्रसन्नतादिगुणवांश्चेत्किमनेनेत्यतोऽश्रद्धा न कर्तव्येति ध्येयस्वरूपमुपदिशति ॥ प्रसादाभिमुखमित्यादिना ॥ ४८ ॥

**तरुणं रमणीयाङ्गमरुणाब्जेक्षणाधरम् ।**
**प्रयताश्रयणं कृष्णं शरण्यं करुणार्णवम् ॥ ४९ ॥**

**प्रकाशिका** – अरुणत्वलक्षणज्ञापनाय पुनरीक्षणमुक्तम् ॥ ४९ ॥

**श्रीवत्साङ्कं घनश्यामं पुरुषं वनमालिनम् ।**
**शङ्खचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ॥ ५० ॥**

**प्रकाशिका** – घनवच्छ्यामं नीलम् । पुरुषलक्षणसामग्रीसूचनाय पुरुषग्रहणम् ॥ ५० ॥

**किरीटिनं कुण्डलिनं केयूरवलयान्वितम् ।**
**कौस्तुभाभरणग्रीवं पीतकौशेयवाससम् ॥ ५१ ॥**

**प्रकाशिका** – कौस्तुभस्याभरणभूता ग्रीवा यस्य तम् ॥ ५१ ॥

**काञ्चीकलापपर्यस्तं लसत्काञ्चननूपुरम् ।**
**दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥ ५२ ॥**

**प्रकाशिका** – काञ्चीकलापेन पर्यस्तं परिवेष्टितम् ॥ ५२ ॥

**पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम् ।**
**हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ॥ ५३ ॥**

**प्रकाशिका** – नखमणिश्रेण्या विलसद्भ्यां पद्भ्यां समर्चतां भक्तानामात्मनि देहे हृत्पद्म-कर्णिकाधिष्ण्यमाक्रम्यावस्थितम् ॥ ५३ ॥

**स्मयमानमभिध्यायेत् सानुरागावलोकनम् ।**
**नियमेनैकभूतेन मनसा वरदर्षभम् ॥ ५४ ॥**

**तात्पर्यम् – एकस्मिन्नेव भूतेन ॥ ५४ ॥**

**प्रकाशिका** – भूतेन मनसा । नियमनैकभूतेन । अत्रैकभूतेनेत्यस्य प्रकृतसङ्गतमर्थं दर्शयति ॥ एकस्मिन्नेवेति । तथा च नियमेनाव्यभिचारेणैकस्मिन्नेव ध्येयवस्तुनि भूतेन स्थितेन । सदा बाह्यविषयाभिनिवेशरहितेनेति यावत् । इति मूलार्थ इति भावः ॥ ५४ ॥

**एवं भगवतो रूपं सुभद्रं ध्यायतो मनः ।**
**निर्वृत्त्या परया पूर्णं सम्पन्नं न निवर्तते ॥ ५५ ॥**

**प्रकाशिका** – निर्वृत्या परमानन्देन तूर्णं शीघ्रं संपन्नं सत् ध्येयादितरत्र न निवर्तते न गच्छति ॥ ५५ ॥

**जाप्यश्च परमो गुह्यः श्रूयतां मे नृपात्मज ।**
**यं सप्तरात्रं प्रपठन् पुमान् पश्यति खेचरान् ॥ ५६ ॥**

**प्रकाशिका** – जाप्यो मन्त्रः ॥ ५६ ॥

**ओं नमो भगवते वासुदेवाय**
**मन्त्रेणानेन देवस्य कुर्याद् द्रव्यमयीं बुधः ।**
**सपर्यां विविधैर्द्रव्यैर्देशकालविभागवित् ॥ ५७ ॥**

**प्रकाशिका** – द्रव्यमयीं शिलादिनिर्मितां प्रतिमाम् । द्वितीया सप्तम्यर्थे । तस्यां देवस्य वासुदेवस्य सपर्यां कुर्यादित्यन्वयः ॥ ५७ ॥

**सलिलैः शुचिभिर्माल्यैर्वन्यैर्मूलफलादिभिः ।**
**शस्ताङ्कुरैः कुशैश्चार्चेत् तुलस्या प्रियया प्रभुम् ॥ ५८ ॥**

**प्रकाशिका** – द्रव्याण्येवाह ॥ सलिलैरिति । वन्यैर्वनभवैः ॥ ५८ ॥

**लब्ध्वा द्रव्यमयीमर्चां क्षित्यम्ब्वादिषु चार्चयेत् ।**
**आहृतात्मा मुनिः शान्तो यतवाङ् मितवन्यभुक् ॥ ५९ ॥**

**प्रकाशिका** – द्रव्यमयीमर्चां शिलादिप्रतिमां लब्ध्वा संपाद्य क्षितौ स्थण्डिले । आदि शब्दादादित्यमण्डले हृदये वा । शास्त्रे क्षित्यंब्वादिषु यदर्चनं विहितं तद्द्रव्यमयीमर्चां लब्ध्वा तस्यैव न ह्यादितो मनसस्तत्रानवस्थानात् इति ज्ञातव्यम् । आहृतात्मा विषयेभ्य आकृष्य वशीकृतमनः मितं नियतादर्धं फलमूलादि वन्यं भुंक्त इति वन्यभुक् ॥ ५९ ॥

**स्वेच्छावतारचरितैश्चरितं निजमायया ।**
**करिष्यत्युत्तमश्लोकस्तान् ध्यायेद् हृदयङ्गमान् ॥ ६० ॥**

**प्रकाशिका –** स्वेच्छावतारचरितैः स्वेच्छया गृहीता येऽवतारा मत्स्यादयस्तेषां चरितैः कंसवधादिलक्षणै रचितं व्यक्तीकृतम् । ईश्वरत्वोपपादकगुणसमूहमिति शेषः । निजमायया स्वरूपसामर्थ्येनोत्तमश्लोको रामकृष्णादिरूपो यान्हृदयङ्गमान्पराक्रमान्करिष्यति तांश्च ध्यायेदित्यन्वयः ॥ ६० ॥

**परिचर्या भगवतो यावतीः पूर्वकल्पिताः ।**
**ता मन्त्रहृदयेनैव प्रयुज्यान्मन्त्रमूर्तये ॥ ६१ ॥**

**तात्पर्यम् – मन्त्रहृदयेन मन्त्रेण च नमः शब्देन च ॥ ६१ ॥**

**प्रकाशिका –** परिचर्याः पूजा साधनानि यावतीर्यावत्यः पूर्वकल्पिताः पूर्वाचार्यैर्विहिताः । पूर्वसेविता इति पाठे पूर्वाचार्यैः सेवनं कारिताः समर्पिता इति यावदिति व्याख्येयम् । मन्त्रहृदयेनेत्यस्यार्थाप्रतीतेस्तदर्थमाह ॥ मन्त्रहृदयेनेति । हृदयशब्दस्य मन्त्रशास्त्रे नमः शब्दवाच्यतया प्रसिद्धत्वाद्धृदयेनेत्यस्य नमःशब्देनेति व्याख्यानमित्यवगन्तव्यम् । तथा च मन्त्रश्च हृदयं च मन्त्रहृदयं तेनेत्यर्थः । सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः । मन्त्रहृदयेन मन्त्रेण नमःशब्देन ॐ नमो भगवते वासुदेवायेति द्वादशाक्षरमन्त्रमुच्चार्य पश्चान्नम इत्युक्त्वा पूजासाधनं गन्धादिकं दद्यादित्यर्थः । दानसमये स्वधादिशब्दवन्नमःशब्दप्रयोगस्यापि प्रसिद्धत्वादित्याशयः । मन्त्रमूर्तये मन्त्रप्रतिपाद्यविग्रहाय ॥ ६१ ॥

**एवं कायेन मनसा वचसा च मनोगतः ।**
**परिचर्यमाणो भगवान् भक्तिमत्परिचर्यया ॥ ६२ ॥**

**प्रकाशिका –** भक्तिमन्तः सन्तस्तेषां परिचर्यया शुश्रूषया ॥ ६२ ॥

**पुंसाममायिनां सम्यग् भजतां भाववर्धनः ।**
**श्रेयो दिशत्यभिमतं यद् धर्मादिषु देहिनाम् ॥ ६३ ॥**

**प्रकाशिका –** भाववर्धनो भक्तिवृद्धिकरः । देहिनां धर्मादिषु यच्छ्रेयोऽभिमतं तद्दिशति ॥६३॥

**विरक्तश्चेन्द्रियरतौ भक्तियोगेन भूयसा ।**
**तन्निरन्तरभावेन भजेताद्धा विमुक्तये ॥ ६४ ॥**

**मैत्रेय उवाच–**

**इत्युक्तस्तं परिक्रम्य प्रणम्य च नृपार्भकः ।**
**ययौ मधुवनं पुण्यं हरेश्चरणचर्चितम् ॥ ६५ ॥**

**प्रकाशिका** – इन्द्रियरतौ विषयभोगे विरक्तः ॥ ६४ ॥ ६५ ॥

**तपोवनं गते तस्मिन् प्रविष्टोऽन्तःपुरं मुनिः ।**
**अर्हितोऽर्हणया राज्ञा सुखासीन उवाच तम् ॥ ६६ ॥**

**प्रकाशिका** – अर्हणया पूजासाधनेन ॥ ६६ ॥

**नारद उवाच–**

**राजन् किं ध्यायसे दीर्घं मुखेन परिशुष्यता ।**
**किं वा न रिष्यते कामो धर्मो वार्थेन संयुतः ॥ ६७ ॥**

**प्रकाशिका** – किंवा नरिष्यते न हिंस्यते । न नश्यतीति यावत् सवितर्कप्रश्नः ॥ ६७ ॥

**राजोवाच–**

**सुतो मे बालको ब्रह्मन् स्त्रैणेनाकरुणात्मना ।**
**निर्वासितः पञ्चवर्षः सह मात्रा महान् कविः ॥ ६८ ॥**

**प्रकाशिका** – निर्वासितो विवासितः । कविरित्यनेन ज्ञानित्वं द्योतयति । मात्रा सहेत्युक्तिः तस्या अप्यनादृतत्वाभिप्रायेण ॥ ६८ ॥

**अप्यनाथं वने ब्रह्मन् मा खादन्त्वर्भकं वृकाः ।**
**श्रान्तं शयानं क्षुधितं परिम्लानमुखाम्बुजम् ॥ ६९ ॥**
**अहो मे बत दौरात्म्यं स्त्रीजितस्योपधारय ।**
**योऽङ्कं प्रेम्णाऽऽरुरुक्षन्तं नाभ्यनन्दमसत्तमः ॥ ७० ॥**

**प्रकाशिका** – मा खादन्तु न खादन्तु ॥ ६९ ॥ ७० ॥

**नारद उवाच–**

**मा मा शुचः स्वतनयं देवगुप्तं विशांपते ।**
**तत्प्रभावमविज्ञाय प्रावृङ्क्ते यद्यशो जगत् ॥ ७१ ॥**

**प्रकाशिका** – यस्य यशो जगत्प्रावृंक्ते व्याप्नोति ॥ ७१ ॥

**सुदुष्करं कर्म कृत्वा लोकपालैरपि प्रभुः ।**
**एष एष्यत्यचिरतो यशो विपुलयंस्तव ॥ ७२ ॥**

**तात्पर्यम् – तस्यैव योग्यत्वाल्लोकपालानां दुष्करम् । 'नाशक्यं देवतानां तु यदन्यैः शकितं क्वचित् । शक्ता अपि न कुर्वन्ति यदन्यविहितं बुधा' इति ब्राह्मे ॥ ७२ ॥**

**प्रकाशिका** – लोकपालैरिति दुष्करं कर्म कृत्वेत्युक्त्या देवानां ध्रुवकृतकर्मण्यशक्तिरिति भात्यतोऽत्र विवक्षितमभिप्रायमाह ॥ तस्यैवेति । योग्यत्वाद्विहितत्वात् । तथा च ध्रुवकृतकर्मणि देवानां शक्तिसद्भावेऽपि देवास्तन्न कुर्वन्ति तान्प्रति तस्याविहितत्वात् । अविहितकरणे च प्रत्यवायप्रसङ्गात् । अतो लोकपालानां वचनं दुष्करं संभवतीत्यर्थः । अत्र प्रमाणसंवादमाह ॥ नाशक्यमिति । तुशब्दोऽवधारणे । नैवेति संबन्धः । अन्यैः शङ्कितमन्येषां शक्यं दृष्ट्या निरूपणयाऽऽदिष्टेनोपदेशेनान्यविहितमन्यान्प्रति विहितम् । विपुलयन्विस्तारयन् ॥ ७२ ॥

**मैत्रेय उवाच–**

**इति देवर्षिणा प्रोक्तं विस्रभ्य जगतीपतिः ।**
**राज्यलक्ष्मीमनादृत्य पुत्रमेवान्वचिन्तयत् ॥ ७३ ॥**

**प्रकाशिका** – विश्रभ्य विश्वस्य ॥ ७३ ॥

**तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम् ।**
**समाहितः पर्यचरद् दिष्ट्याऽऽदेशेन पूरुषम् ॥ ७४ ॥**

**तात्पर्यम् – दृष्ट्या निरूपणया । आदेशेन उपदेशेन ॥ ७४ ॥**

**प्रकाशिका** – ध्रुवो मधुवनं प्राप्य किमकरोदित्यपेक्षायामाह ॥ तत्रेति । अभिषिक्तः स्नातः । यस्यां प्राप्तस्ताम् । पर्यचरन्सेवितवान् । दृष्ट्या देशेनेत्यस्याप्रतीत्या प्रकृतोपयुक्तमर्थमाह ॥ दृष्ट्येति । अनेन दृश्यतेऽनयेति दृष्टिरिति निरूपणाद्दृष्टिशब्दार्थ उक्तो भवति । भावार्थे प्रत्यय इत्याशयेनोपदेशेनेत्युक्तिः । तथा च दृष्ट्या शमादिनिरूपणया सहितेनादेशेन मन्त्रोक्तोपदेशेन तदनुसारेणेति मूलं व्याख्येयमिति भावः । दृष्ट्या योग्यतया । दिष्टेनेति क्वचित्पाठः । तत्र दृष्ट्या योग्यतया दिष्टेनोपदिष्टेन प्रकारेणेति मूलार्थ इति ज्ञातव्यम् ॥ ७४ ॥

**त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशनः ।**
**आत्मवृत्त्यनुसारेण मासं निन्येऽर्चयन् हरिम् ॥ ७५ ॥**

**द्वितीयं च तथा मासं षष्ठे षष्ठेऽर्भको दिने ।**
**तृणपर्णादिभिः शीर्णैः कृतान्नोऽभ्यर्चयद् विभुम् ॥ ७६ ॥**

**प्रकाशिका** – तस्य देहधारणप्रकारमाह ॥ त्रिरात्रान्ते इति । कपित्थानि बदराणि चासनं यस्य । अनशननियतिं कथयति ॥ आत्मवृत्तीति । यावताऽत्मनः शरीरस्य वृत्तिः स्थितिस्तदनु-सारेणेत्यर्थः ॥ ७५,७६ ॥

**तृतीयं चानयन्मासं नवमे नवमेऽहनि ।**
**अब्भक्ष उत्तमश्लोकमुपाधावत् समाधिना ॥ ७७ ॥**

**प्रकाशिका** – उपधावद्ध्यातवान् । समाधिना चित्तैकाग्र्येण ॥ ७७ ॥

**चतुर्थमपि वै मासं द्वादशे द्वादशेऽहनि ।**
**वायुभक्षो जितश्वासो ध्यायन् देवमपारयत् ॥ ७८ ॥**

**प्रकाशिका** – अपारयदतिक्रान्तवान् ॥ ७८ ॥

**पञ्चमे मास्यनुप्राप्ते जितश्वासो नृपात्मजः ।**
**ध्यायन् ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचलः ॥ ७९ ॥**

**प्रकाशिका** – अचलः स्थिरः ॥ ७९ ॥

**देवाश्चक्रुस्तपोविघ्नं त्रासयन्तः स्वमायया ।**
**सर्पेभसिंहकूष्माण्डैस्तान् नापश्यत् परं गतः ॥ ८० ॥**

**तात्पर्यम्** – 'यत्र देवैः कृते विघ्ने खण्डितो न पुमान्भवेत् । तत्र तद्यशसे विघ्नं कुर्युर्न तु विघातने । यत्र खण्डितता तत्र खण्डनायैव केवलम् । सत्यकामा यतो देवास्ते चित्ताद्यभिमानिनः । अतो विमोहनायैव प्राप्नुयुस्ते पराजयम् । तेषामशक्तितोक्तिश्च विमोहाय सुरद्विषामि'ति ब्रह्माण्डे ॥ ८० ॥

**प्रकाशिका** – स्वमायया स्वसामर्थ्येन कल्पितैः सर्पादिभिः कूष्माण्डाः पिशाचविशेषाः । तान्नापश्यत् । यतः परमात्मानं मनसा गतस्तद्ध्यानपर इत्यर्थः । अत्र ध्रुवे देवानां प्रयत्नस्य

वैयर्थ्योक्त्या तेषामसत्यकामत्वमशक्तिश्चोच्यते इत्यतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैवाह ॥ यत्रेति । खण्डितः खण्डिततया विघातने तपोविघाताय न तु नैव खण्डितता । तपस इति शेषः । केवलमत्यन्तं खण्डनायैव विघ्नं कुर्युः । कुतः । सत्यकामत्वमित्यत उक्तम् ॥ त इति । पराजयमशक्तताम् । तथा च देवा हरिभक्तस्य ध्रुवस्य यशसे विघ्नकरानुत्पाद्य स्वयमेव परिहृतवन्तो नत्वशक्ताः । मूले तथा प्रतीतिश्चासुरमोहनायेत्याशयः ॥ ८० ॥

**सर्वतो मन आकृष्य हृदि भूतेन्द्रियाश्रयम् ।**
**ध्यायन् भगवतो रूपं नाद्राक्षीत् किञ्चनापरम् ॥ ८१ ॥**

**तात्पर्यम् –** भूतेन्द्रियाश्रयं भगवद्रूपम् ॥ ८१ ॥

**प्रकाशिका –** भूतेन्द्रियाश्रयमित्यस्य मन इत्यनेनान्वयभ्रान्तिपरिहारायान्वयं दर्शयति ॥ भूतेति ॥ ८१ ॥

**आधारं महदादीनां प्रधानपुरुषेश्वरम् ।**
**ब्रह्म धारयमाणे तु त्रयो लोकाश्चकम्पिरे ॥ ८२ ॥**

**प्रकाशिका –** धारयमाणस्य सतश्चकंपिरे कंपिताः । तत्तेजः सोढुं न समर्था जाता इत्याशयः ॥ ८२ ॥

**यदैकपादेन स पार्थिवार्भकस्तस्थौ तदङ्गुष्ठनिपीडिता मही ।**
**ननाम तत्रार्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे ॥ ८३ ॥**

**प्रकाशिका –** तस्यांगुष्ठेन पीडिता सती मही तत्र तदाऽर्धमर्धयोरन्यतरभागेन ननाम । इभेन्द्रेण गजश्रेष्ठेनाधिष्ठिता तरी नौर्यथा पदे पदे सव्यतो दक्षिणतश्च नमति तद्वत् ॥ ८३ ॥

**तस्मिन्नभिध्यायति विश्वमात्मनो**
**द्वारं निरुध्यासुमनन्यया धिया ।**
**लोका निरुच्छ्वासनिपीडिता भृशं**
**सलोकपालाः शरणं ययुर्हरिम् ॥ ८४ ॥**

**तात्पर्यम् –** विश्वं भगवन्तम् । आत्मनो द्वारं सर्वं जीवोत्पत्त्यादिद्वारम् । लोकानामेव निरुच्छ्वासः लोकपालास्तदर्थमेव शरणं ययुः । 'ध्यातुर्ध्रुवस्य कीर्त्यर्थं हरिणा सह देवताः । लोकोच्छ्वासं निरुध्याथ श्वासार्थं च हरिं ययुः । अन्यप्रवृत्तयस्तेभ्यो न तेषामन्यतः क्वचित् । स्वोत्तमेभ्यस्तु देवेभ्यस्तेषां स्युः स्वप्रवृत्तय' इति तत्त्वनिर्णये ॥ ८४ ॥

**प्रकाशिका** – अन्यदप्याश्चर्यं जातमित्याह ।। तस्मिन्निति । अत्र विश्वमित्यस्य योग्यमर्थं दर्शयति ।। विश्वमिति । विश्वं विष्णुरिति तन्नामसु पाठादित्याशयः । आत्मनो द्वारमित्यस्य आत्मनः सकाशादन्यया धियाऽऽत्माभेददृष्ट्याऽसुं प्राणं तद्वारं निरुद्ध्येति व्याख्याननिरासाय योग्यमर्थं दर्शयति ।। आत्मन इति । समुदायापेक्षयैकवचनम् । उत्पत्त्यादीति योग्यतालब्धमिति ज्ञातव्यम् । सलोकपाला लोका निरुच्छ्वासनिपीडिता इत्युक्त्या लोकपालानामपि निरुच्छ्वासनिपीडितत्वं प्रतीयतेऽतोऽत्र विवक्षितं तात्पर्यं दर्शयति ।। लोकानामेवेति । तर्हि लोकपालानां लोकैः सह हरिं प्रति गमनं किमर्थमित्यतस्तत्प्रयोजनमाह ।। लोकपाला इति । तदर्थमेवेत्यत्रार्थशब्द आवर्तनीयः । आद्यो निवृत्तिवचनः तथा च तदर्थार्थमेव तन्निवृत्त्यर्थमेवेत्यर्थः । ध्रुवेण हरिध्याने कृते लोकपालानां श्वासनिरोधः किमर्थं जातमित्याशङ्कापरिहारायोक्तार्थस्थापनाय च प्रमाणं पठति ।। ध्यातुरिति । परिवारतयेति शेषः । ननु ध्रुवयत्नेनैव लोकपालानामपि श्वासनिरोधः किं न स्यादित्यत आह ।। अन्यप्रवृत्तय इति । तेभ्यः प्रमाणप्रसिद्धा इति शेषः । अन्यतस्तेषां प्रवृत्त्यभावेऽधमानां देवानां प्रवृत्तयो ब्रह्मादिस्वोत्तमाधीना इति प्रमाणप्रसिद्धिविरोध इत्यत आह ।। स्वोत्तमेभ्य इति । तुशब्दोऽवधारणे । स्युरेवेति सम्बन्धः । तथा चान्यतो नीचतो नेति व्याख्येयमिति भावः ।। तश्चश्चायं श्लोकार्थः ।। तस्मिन्ध्रुवेऽनन्यया अन्याविषयकतां गतया धिया श्वासप्रवृत्तिकारणमसुंप्राणं निरुद्ध्य कुंभीकृत्यात्मनो जीवराशेरुत्पत्त्यादेर्द्वारं कारणं विश्वं भगवन्तमभि अभितः परितः स्थितैः दैवैरिन्द्रियाभिमानिभिः सह ध्यायति सति ध्रुवस्य कीर्त्यर्थं देवैर्लोकानाम् श्वासनिरोधे कृते सतीति पूरणीयम् । लोका निरुच्छ्वासनिपीडिता निरुद्ध-प्राणवृत्त्या निपीडिताः सन्तो लोकपालान् शरणं ययुः । अथ तेषां श्वासदाने सामर्थ्याभावात्स-लोकपाला लोका हरिं शरणं रक्षितारं ययुः ।। ८४ ।।

**देवा ऊचुः–**

**नैवं विदामो भगवन् प्राणरोधं चराचरस्याखिलसत्वधाम्नः ।**
**विधेहि तन्नो वृजिनाद् विमोक्षं प्राप्ता वयं त्वां शरणं शरण्यम् ।। ८५ ।।**

**तात्पर्यम् – अखिलसत्वसमूहस्य । 'तेजः शक्तिः समूहश्च गृहं धामेति कथ्यत' इति तत्त्वनिर्णये ।। ८५ ।।**

**प्रकाशिका** – अखिलसत्त्वधाम्न इत्यत्र धामशब्दस्य प्रकृतसंगतमर्थं दर्शयति ।। अखिल-सत्त्वसमूहस्येति । तथा च धामशब्दः समूहपर इत्याशयः । अत्र प्रमाणं दर्शयति ।। तेज इति । धामेतिशब्देन तेज आदिकं कथ्यत इत्यर्थः ।। ततश्चायं श्लोकार्थः ।। हे भगवन् । वयं

चराचरलक्षणस्याखिलसत्त्वधाम्नः सर्वप्राणिसमूहस्य एवं प्राणविरोधं कदाचिदपि न विदामो विघ्नः । तत्तस्माद्धृजिनाच्छ्वासनिरोधजनित- दुःखात् ॥ ८५ ॥

**श्रीभगवानुवाच–**

**मा भैष्ट बालं तपसो दुरत्ययान्निवर्तयिष्ये प्रतियात स्वधाम ।**
**यतो हि वः प्राणनिरोध आसीदौत्तानपादिर्मयि संगतात्मा ॥ ८६ ॥**

**प्रकाशिका –** कोऽसौ बाल इत्यपेक्षायामाह ॥ यत इति । यतो बालात् । मयि सम्यग्गत आत्मा मनो यस्य स तथा ॥ ८६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः ।

**मैत्रेय उवाच–**

**त एवमुत्सन्नभया उरुक्रमे कृतप्रणामाः प्रययुस्त्रिविष्टपम् ।**
**सहस्रशीर्षाऽपि ततो गरुत्मता मधोर्वनं भृत्यदिदृक्षयागतः ॥ १ ॥**

**प्रकाशिका** – ॥ हरिः ॐ ॥ ते देवा एवं भगवद्वाक्येनोत्सन्नभया नष्टभयाः सन्तः सहस्रशीर्षो वासुदेवो गरुत्मता गरुडेन सह । तदारूढ इति यावत् ॥ १ ॥

**स वै धिया योगविपाकतीव्रया हृत्पद्मकोशे स्फुरितं तडित्प्रभम् ।**
**तिरोहितं सहसैवोपलक्ष्य बहिः स्थितं तदवस्थं ददर्श ॥ २ ॥**

**प्रकाशिका** – योगो ध्यानं तस्य विपाकः परिणामस्तेन तीव्रया यत्नाभावेऽपि भगवन्मुखया तिरोहितमुपलक्ष्य ज्ञात्वा तस्य हृत्पद्मगतस्यावस्था यस्य स तदवस्थस्तम् । हृत्पद्मगतस्यावस्था तादृशावस्थाविशिष्टमित्यर्थः ॥ २ ॥

**तद्दर्शनेनागतसाध्वसः क्षिताववन्दताङ्गं विनिमय्य दण्डवत् ।**
**दृग्भ्यां प्रपश्यन् प्रपिबन्निवार्भकश्चुम्बन्निवास्येन भुजेन चाश्लिषन् ॥**

**प्रकाशिका** – आगतसाध्वसः प्राप्तसंभ्रमः । विनिमय्यानतं कृत्वा । संभ्रममेवाह ॥ दृग्भ्यामिति । दृग्भ्यां चक्षुर्भ्यां प्रपिबन्निवास्येन चुंबन्निव भुजैर्भुजाभ्यामाश्लिष्यन्निव प्रपश्यन् अवंदत ॥ ३ ॥

**स तं विवक्षन्तमतद्विदं हरिर्ज्ञात्वाऽस्य सर्वस्य च हृद्यवस्थितः ।**
**कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोले ॥ ४ ॥**

**प्रकाशिका** – विवक्षन्तं स्तुतिरूपां वाचं वक्तुमिच्छन्तमतद्विदं स्तुतिरूपवचनविन्न-भवतीत्यतद्वित्तं सर्वस्य हृद्यवस्थितो यतोऽस्य च ध्रुवस्यापि हृद्यवस्थितोऽतो ज्ञात्वा । ब्रह्ममयेन वेदात्मकेन । तदभिमानिदेवताभिमन्यमानेनेति यावत् । पाञ्चजन्यो वा एष आम्नाय उदित इति श्रुतेः । कंबुना पाञ्चजन्याख्यशङ्खेन ॥ ४ ॥

**स वै तदैव प्रतिपद्य तां गिरं दैवीं परिज्ञातपरात्मनिर्णयः ।**
**तद्भक्तिभावोऽभ्यगृणादसत्वरं परिश्रितोरुश्रवसं ध्रुवक्षितिम् ॥ ५ ॥**

**प्रकाशिका –** या गीः पूर्वमज्ञाता तां गिरं वेदात्मिकां स्तुतिम् । दैवीं देवो हरिस्तद्विषयाम् । यावत्स्वयोग्यं परितो ज्ञातः परमात्मनस्तत्त्वनिर्णयो येन स तथोक्तः । तद्भक्त्या भावो रोमाञ्चनादिक्रिया यस्य स तथोक्तः । भावो लीला क्रीयेत्यभिधानात् । असत्वरमिति क्रिया-विशेषणम् । द्रुतोच्चारणादिकं यथा न भवति तथेति । त्वरया सहितः सत्वरो न सत्वरोऽसत्वरस्तं स्थिरतया । अवस्थित इति भगवद्विशेषणं वा । परितः स्थितं व्याप्तमुरु बृहच्छ्रवः मङ्गलं श्रवणं यस्य स तथातम् । ध्रुवक्षितिं ध्रुवा नित्या स्थितिर्वैकुण्ठादिस्थानं यस्य स तथा तम् । ध्रुवः क्षितिमिति वा पाठः । क्षि निवासगत्योरिति धातोः । क्षितिं गतिमित्यर्थः ॥ ५ ॥

**ध्रुव उवाच–**

**योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां**
**संजीवयत्यखिलशक्तिधरः स्वधाम्ना ।**
**अन्यांश्च हस्तचरणश्रवणत्वगादीन् ।**
**प्राणान् नमो भगवते पुरुषाय तुभ्यम् ॥ ६ ॥**

**प्रकाशिका –** यो मम प्रसुप्तां स्तोत्रेऽसमर्थां वाचं वागिन्द्रियमन्यांश्च प्राणानीन्द्रियाणि । स्वधाम्ना स्वसामर्थ्येनाखिलशक्तिधर इन्द्रियतदभिमानिदेवताशक्तिप्रेरकः सञ्जीवयति । स्वविषय-पराङ्मुखान्करोति । तस्मै पुरुषाय देहान्तर्नियामकाय तुभ्यं नमः ॥ ६ ॥

**एकस्त्वमेव भगवन्निदमात्मशक्त्या**
**मायाख्ययोरुगुणया महदाद्यशेषम् ।**
**सृष्ट्वाऽनुविश्य पुरुषस्तदसद्गुणेषु**
**नानेव दारुषु विभावसुवद् विभासि ॥ ७ ॥**

**प्रकाशिका –** ननु पुराणानां नानात्वात्तद्गतस्य हरेरपि नानात्वप्राप्तौ कथं य इत्याद्येकवचनेनैकत्वं तस्योक्तमित्यत आह ॥ एकस्त्वमिति । आत्माधीनतया शक्यत्वाच्छक्ति शब्दवाच्यया प्रकृत्या उरवो गुणाः सत्त्वाद्या यस्यास्तया इदं महदाद्यशेषं सृष्ट्वाऽनुविश्यानुप्रवेशेन यः पुरुषशब्दवाच्यः स त्वम् । तस्याः प्रकृतेरसन्तोऽमङ्गला गुणाः सत्त्वादयो येषु ते तथा तेषु सात्त्विकादिरूपेषु कार्येष्वित्यर्थः । दारुषु काष्ठेषु विभावसुरग्निर्यथा विभासति ॥ ७ ॥

**त्वद्दत्तया वयुनयेदमचष्ट विश्वं**
**सुप्तः प्रबुद्ध इव नाथ भवत्प्रपन्नः ।**

**तस्यापवर्ग्यशरणं तव पादमूलं**
**विस्मर्यते कृतधिया कथमार्तबन्धो ॥ ८ ॥**

**प्रकाशिका** – ममैतादृशं ज्ञानं त्वदधीनमिति किं वाच्यम् । यतो ब्रह्मणोऽपि ज्ञानं त्वदधीनमिति वदंत्येव । त्वत्कृतोपकारं विस्मरन्ति ते कृतघ्ना इत्याह ॥ त्वद्दत्तयेति । वयुनया ज्ञानेनाचष्टापश्यत् । कथं सुप्तः पुरुषः प्रबुद्धः सन् यथा पश्यति तद्वत् । यत आपवर्ग्या मुक्तास्तेषामपि शरणम् । कृतधिया कृतज्ञेन कथं विस्मर्यते । न कथमपि । एवं भूतं त्वां विस्मरन्तः कृतघ्ना एवेत्याशयः ॥ ८ ॥

**नूनं विमुष्टमतयस्तव मायया ते**
**ये त्वां भवाप्ययविमोक्षणमन्यहेतोः ।**
**अर्चन्ति कल्पकतरुं कुणपोपभोग्य-**
**मिच्छन्ति यत् स्पर्शजं निरयेऽपि नॄणाम् ॥ ९ ॥**

**प्रकाशिका** – एतादृशोपकारिणं मामर्चन्तोऽपि केचित्कुतो न मुच्यन्त इत्यपेक्षायां ते त्वयैव वञ्चितचित्ताः पुनः संसरन्तीत्याह ॥ नूनमिति । भवाप्ययविमोक्षणं जननमरणात्मक संसारमुक्तिदम् । कल्पतरुं कल्पवृक्षवत्सर्वाभीष्टप्रदम् । त्वामन्यहेतोः कामाद्यर्थं येऽर्चन्ति ते नूनं विमुष्टमतयो वञ्चितचित्ताः । कुतः । यतो यस्य विषयजातस्य स्पर्शजं संबन्धेन जायमानं सुखं नरकेऽपि नृणां सुलभम् । तत्कुणपतुल्येन देहेनोपभोग्यं विषयसुखमिच्छन्ति । तस्मादन्य-कामान्विहायैव त्वद्ध्यानादिरूपमर्चनं मोक्षार्थं कार्यमित्याशयः ॥ ९ ॥

**या निर्वृतिस्तनुभृतां तव पादपद्म-**
**ध्यानाद् भवज्जनकथाश्रवणेन वा स्यात् ।**
**सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्**
**किम्वन्तकासिलुलितात् पततां विमानात् ॥ १० ॥**

**तात्पर्यम् – परब्रह्मणि स्थितस्य ध्यानादिकं विना न भवति । सुप्तौ दृष्टत्वात् ॥ १० ॥**

**प्रकाशिका** – नन्वेवमन्यकामनां विहाय मोक्षकामनया त्वद्ध्यानादिकं कुर्वतां मोक्षकामनामपि विहाय केवलं त्वत्प्रीत्यर्थमेव तत्कुर्वतां को विशेषो येन ते मोक्षाशामपि त्यजन्तीत्यपेक्षायां तेषां ध्यानादिना जीवन्मुक्तदशायामेव मोक्षकामनां परममुक्तिगताभिव्यक्तपूर्ण

स्वरूपसुखापेक्षयाऽधिकस्वरूपसुखाभिव्यक्तिर्भवति । किमु परममुक्तिदशायामित्याशयेनाह ॥ या निर्वृतिरिति । अत्र सा ब्रह्मणि चतुर्मुखे नास्तीति प्रतीतिवारणाय स्थितस्येति पदमध्याहृत्य योजयति ॥ परब्रह्मणीति । मुक्तस्यापीत्यर्थः । नन्विदमपि बाधितम् । मुक्तस्याधिकारिकदेवादेरभिव्यक्तक्लृप्तपूर्णसुखवत्त्वादित्यत उक्तम् । ध्यानादिकं विना परब्रह्मणि स्थितस्यापि । ध्यानादिकं विना परब्रह्मणि स्थितस्यापि ज्ञानोत्तरबहुतरध्यानाद्यकरणेन मुक्तस्येत्यर्थः । अल्पमुक्तस्येति यावत् । यद्यप्याब्रह्मणीति विच्छिद्याल्पमुक्तेऽपीति व्याख्यातुं शक्यम् । तथाऽपि तनुभृतामिति षष्ठ्यन्तस्य पूर्वमुक्तत्वात्पततामिति वक्ष्यमाणत्वाच्चात्रापि स्थितस्येत्यध्याहृत्यैव योजितमित्यवगन्तव्यम् । न भवतीत्यनेन मा भूदित्येतदुक्ततात्पर्यम् । ननूत्तमाधिकारिणामप्यधिकस्वरूपसुखाभिव्यक्तौ परब्रह्मप्राप्तिरेव निमित्तं न ध्यानादिकमपि येनाल्पमुक्तेस्तदभावेनाधिकसुखाभिव्यक्त्यभावः इत्यत उक्तम् ॥ सुप्ताविति । प्राज्ञेनात्मना संपरिष्वक्त इत्यादिप्रमाणप्रसिद्धाया ब्रह्मप्राप्तेः सुप्तौ सत्येऽपि नाधिकसुखस्याविर्भावो दृष्टः । ध्यानाद्यभावात् । अतो ध्यानादिकमपि तत्र निमित्तं न ब्रह्मप्राप्तिमात्रमित्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ तनुभृतां विस्तृतब्रह्मोपासकानां मोक्षकामनामपि परित्यज्य भजतां रसिकानां तवपादपद्मध्यानाद्भवज्जन्मकथाश्रवणेन भवतो भवज्जनानां च कथायाः । वाशब्दोऽधिकारिविशेषसूचकः । श्रवणेन या निर्वृतिर्यत्सुखं स्यात्सा निर्वृतिः स्वरूपसुखाभिव्यक्तिः स्वमहिम्न्यनन्याधीनमाहात्म्योपेते परब्रह्मणि स्थितस्याल्पमुक्तस्यापि मुक्त्यनन्तरभाविना ध्यानादिव्यञ्जकेन विना परब्रह्मप्राप्तिमात्रेण मा भून्न भवति । सुप्तौ परब्रह्मप्राप्तावपि सुप्त्यनन्तरं परब्रह्मध्यानदर्शनाद्यभावेन मुक्तिसुखाभावस्य दृष्टत्वात् । अन्तकस्य हरेरसिस्थानीयेन कालचक्रेण लुलितात्खण्डिताद्विमानात्पततां स्वर्गादिनिवासिनां सा नास्तीति किमु वक्तव्यम् । तथा च मोक्षकामनामपि परित्यज्य भजतामुत्तमाधिकारिणां परममुक्तिदशायामधिकस्वरूपसुखाभिव्यक्तिर्भवतीति किं वाच्यमित्याशयः ॥ १० ॥

**भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो**
**भूयादनन्त महताममलाशयानाम् ।**
**येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं**
**नेष्ये भवद्गुणकथामृतपानमत्तः ॥ ११ ॥**

**प्रकाशिका** – तर्हि तादृशभक्तसङ्गतिः कथाश्रवणाय मम भूयादित्याशास्ते ॥ भक्तिमिति । भक्तिं त्वयि प्रवहतामविच्छेदेन कुर्वताम् । येन महत्प्रसङ्गेन सम्यगंजसाऽयत्नत एव । उरूणि

व्यसनानि यस्मिन् । नेष्ये पारं गमिष्यामि । भवद्गुणकथैवामृतं तस्य पानेन मत्त इतरविषय-स्मरणशून्यः सन् ॥ ११ ॥

**ते न स्मरन्त्यतितरां प्रियमीशमाद्यं**
**स्वान् संपदः सुतसुहृद्गृहवित्तदारान् ।**
**ये त्वब्जनाभभवदीयपदारविन्द-**
**सौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ १२ ॥**

**तात्पर्यम् – ये स्वाः सम्पदः स्मरन्ति ते त्वां न स्मरन्ति । ये भगवद्भक्तसङ्गाः ते स्वाः सम्पदो न स्मरन्ति ॥ १२ ॥**

**प्रकाशिका –** ननु किं विषयास्मरणरूपमत्ततयाऽपि प्रयोजनं येनोक्तलक्षणमत्ततासिद्ध्यै मद्भक्तसङ्गोऽपेक्षितः स्यादित्यतः त्वद्भक्तताप्रयोजनं त्वस्मरणमेवेत्यन्वयव्यतिरेकाभ्यामुपपादयति ॥ ते न स्मरन्तीति । अत्रान्वयव्यतिरेकयोः स्पष्टमप्रतीत्या ते न स्मरन्तीत्यादेरावृत्त्या योजनां दर्शयति ॥ ये स्वान्संपद इति । स्वानित्यनेन सुतसुहृदादेर्ग्रहणम् । न तु संपदो विशेषणम् । अनेनोक्तविधमत्ततास्वव्यतिरेकेण हरिस्मरणव्यतिरे को दर्शित इति ज्ञातव्यम् । अन्वय-प्रतिपादकद्वितीयार्धतात्पर्यमाह ॥ ये भगवद्भक्तसङ्गा इति । न स्मरन्ति । किन्तु त्वामेव स्मरन्तीत्यपि ग्राह्यम् ॥ ततश्चायं श्लोकार्थः ॥ ये स्वान्स्वीयान्सुतादीन्संपदश्च स्मरन्ति । तेऽतितरां प्रियमाद्यमीशं त्वां न स्मरन्ति । ये तु भवदीयपादारविंदसौगन्ध्यलुब्धहृदयं येषां ते तेषु त्वद्भक्तेषु कृतप्रसङ्गाः संपादितप्रकृष्टसंवासास्ते स्वान्सुतादीन्संपदश्च न स्मरन्ति । किं त्वतितरां प्रियं त्वामेव स्मरन्ति । अत उक्तत्वद्भक्ततायास्त्वत्स्मरणमेव प्रयोजनमित्याशयः ॥ १२ ॥

**तिर्यङ्नगद्विजसरीसृपदेवदैत्य-**
**मर्त्यादिभिर्विरचितं सदसद्विशेषम् ।**
**रूपं स्थविष्ठमज ते महदाद्यशेषं**
**नातः परं परम वेद्मि न यत्र वाचः ॥ १३ ॥**

**तात्पर्यम् – 'पश्यमानोऽपि तु हरिं न तु वेत्ति कथञ्चन । वेत्ति किञ्चित्प्रसादेन हरेरथ गुरोस्तथे'ति ब्रह्मतर्के ॥ १३ ॥**

**प्रकाशिका –** ननु मद्भक्तसङ्गसाध्येन स्मरणेनापि किं प्रयोजनं तत्साध्यस्य मद्दर्शनस्येदानीं तव जातत्वादित्यतो विशेषज्ञानार्थं तदपेक्षितमित्याशयेनाह ॥ तिर्यगिति । अत्र

तिर्यगादिसहितादुब्रह्माण्डात्परं विलक्षणं यत्ते रूपं तन्न वेद्मीत्युक्त्येदानीं दृष्टं न भगवतो रूपं किन्तु मर्त्यात्मकमेव भाति । अत एतादृशोक्तेस्तात्पर्यं प्रमाणेनैव दर्शयति ॥ पश्यमानोऽपीति । आद्यस्तुशब्दो हेत्वर्थः । द्वितीयोऽवधारणार्थः । कथंचन वेत्तीत्युच्यते । पुराणादाविति शेषः । कुत इत्यत उक्तम् ॥ वेत्तीति । तथाशब्दः समुच्चये । यतो हरेरथानन्तरं गुरोश्च प्रसादेन किंचिदेव वेत्त्यतः । तथा च न वेत्तीत्यस्य विशेषतो न वेत्तीत्यर्थो वर्णनीय इति भावः ॥ ततश्चायं श्लोकार्थः ॥ हे अज । अशेषं सकलं महदादिकार्यकारणं यस्य तन्महदाद्यशेषं सर्वावयवोपपन्नं महदादि महत्तत्त्वमादिर्यस्य । सता पृथिव्यादिभूतत्रयेणासता वाय्वादिभूतद्वयेन विशेषो यस्य तत्तथोक्तम् । तिर्यगादिभिः सह विशेषेण रचितं ब्रह्माण्डाख्यं ते स्थविष्ठं स्थूलतमं रूपं प्रतिमाऽत एतस्मात्परं विलक्षणं चिदानन्दात्मकमिदं रूपं हरेर्गुरोश्च प्रसादेन किञ्चित्पश्यन्नप्यहं न विशेषतो वेद्मि । कथं भूतम् । यत्र वाचो वेदादिरूपा न साकल्येन प्रतिपादयितुं प्रवर्तन्ते । तथा च विशेषतस्त्वत्स्वरूपज्ञानाय त्वद्भक्तप्रसङ्गो भूयादित्याशयः ॥ १३ ॥

**कल्पान्त एतदखिलं जठरेण गृह्णन् ।**
**शेते पुमान् स्वदृगनन्तसखस्तदङ्के ।**
**यन्नाभिसिन्धुरुहकाञ्चनलोकपद्म-**
**गर्भे द्युमान् भगवते प्रणतोऽस्मि तस्मै ॥ १४ ॥**

**प्रकाशिका** – नन्विदानीं दृश्यमानं भगवत्स्वरूपं नेत्येव किं न स्यादित्यपेक्षायामस्य भगवत्स्वरूपत्वमुपपादयति ॥ कल्पान्त इति । अनन्तः सखा यस्य स तथोक्तः । स्वयंदृक् स्वप्रकाशः पुमान् कल्पान्ते एतदखिलं जगत् जठरेणोदरेण गृह्णन् संहरन् तस्यानन्तस्यांके उत्संगे शेते । यस्य नाभिरेव सिन्धुः समुद्रस्तस्मिन् रोहतीति रुहस्तथा तदेव काञ्चनं सुवर्णं लोकात्मकं पद्मं तस्य गर्भे कर्णिकायां द्युमान्प्रकाशमानो ब्रह्मा । जात इति शेषः । तस्मै तदभिन्नतया प्रतीयमानाय प्रणतोऽस्मि । तथा च यत्प्रणतोस्मि तदिदं रूपं कल्पान्तशायित्वादिलक्षणोपेतं भगवद्रूपाभिन्नतया दृष्टत्वाद्भगवत्स्वरूपं भवत्येवेत्याशयः ॥ १४ ॥

**त्वं नित्यमुक्तपरिशुद्धविशुद्ध आत्मा**
**कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ।**
**ये बुध्यवस्थितमखण्डितया स्वबुद्ध्या**
**द्रष्ट्वा स्थिता वधिमतो व्यतिरिक्त आस्से ॥ १५ ॥**

**तात्पर्यम् – वधिं अवधिम्। अल्लोपेन। संसारस्यावधिभूतं त्वामास्थिताः। सहैवास्ते॥ १५॥**

**प्रकाशिका –** युक्त्यन्तरमप्याह॥ त्वमिति। त्वं मया दृश्यमानः। नित्यमुक्तश्चासौ परितः सर्वत्र शुद्धश्चासौ विबुद्धो विशेषेण सर्वज्ञश्चात्मा व्याप्तः कूटस्थो विकारशून्यो जगदादावन्ते च वर्तमानः पुरुषः। त्रयाणां लोकानामधीशोऽखण्डेशः। तथा च श्रुत्यादिप्रसिद्धनित्यमुक्तत्वादि-भगवल्लक्षणोपेततया दृश्यमानत्वादिदं भगवत्स्वरूपं भवत्येवेत्याशयः। वधिमवधिम्। संसाराख्यावधिभूतं त्वामास्थितास्तैः सहैवास्ते। दृश्यमानमिदं रूपं न मर्त्यात्मकमित्यत्र कैमुत्यन्यायमाह॥ ये बुद्ध्यवस्थितमिति। अत्र स्थितावधिमित्यस्यैकपदत्वप्रतीति-वारणायाभिमतं छेदं दर्शयन्व्याख्याति॥ वधिमिति। ननु वधिरिति कथं रूपमित्यत आह॥ अल्लोपेनेति। आदौ विद्यमानस्याकारस्य लोपेनेत्यर्थः। वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरिति वचनादिति ज्ञातव्यम्। तथा चास्थिता वधिमिति पदद्वयमिति भावः। नन्वेवमवधिमित्यत्र कस्येति प्रतिसंबन्धिवाचकं पदं न श्रूयते। ये आस्थिता इत्यत्र तच्छब्दोऽपि। अत उभयत्रापेक्षितं पूरयन् अन्वयं दर्शयति॥ संसारस्येति। कर्मबन्धस्येत्यर्थः। अवधिभूतं चरमावधिभूतम्। निवर्तकमिति यावत्। आस्थिता आश्रिताः। मुक्ता इति यावत्॥ ततश्चायमर्थः॥ येऽधिकारिणो बुद्ध्यवस्थितं स्वबुद्ध्यादीन्द्रियनियामकमखण्डितया स्वबुद्ध्याऽदिच्छिन्नेन मनसा। स्वरूपज्ञानेन संसारस्यावधिभूतं त्वां दृष्ट्वा त्वामास्थिता आश्रिता मुक्तास्तैः सहैवातो मर्त्याद्व्यतिरिक्तो विलक्षणः। विकाररहित इति यावत्। आस्से भवसि। तथा च त्वदाश्रिता मुक्ता अपि यदा मर्त्यदेहरहितास्तदा त्वं तद्रहित इति किं वाच्यमित्याशयः। यद्बुद्ध्यवस्थितमिति पाठेऽपि यद्ये इत्येव व्याख्येयम्॥ १५॥

**यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति**
**विद्यादयो विविधशक्तय आनुपूर्व्या।**
**तद् ब्रह्म विश्वभवमेकमविश्वमाद्य-**
**मानन्दमात्रमविकारमहं प्रपद्ये॥ १६॥**

**तात्पर्यम् – 'आनुपूर्वी श्रुतिश्चैव त्रयी चाम्नाय उच्यत' इत्यभिधानम्॥ १६॥**

**प्रकाशिका –** इतोऽपीदं भगवत्स्वरूपमित्याशयेनाह॥ यस्मिन्निति। विरुद्धगतयो लोके विरुद्धतया दृश्यमाना विद्यादयः। विद्यादिपदं पञ्चरात्रपौरुषेयशब्दराशिपरम्। आदिपदेनाणुत्व-महत्त्वादयो ग्राह्याः। विद्याविवक्षायां विविधा अनेकप्रकाराः शक्तयो योगरूढ्यादिरूपा

वृत्तयोऽर्थविवक्षायां विविधा विचित्रा अघटितघटका शक्तिः सामर्थ्यनिर्वाहिका येषामिति व्याख्येयम् । अनिशं निरन्तरं देशकालादिव्यवस्थां विना पतन्ति प्रतिपादयन्ति च । आनुपूर्वीत्यस्य प्रकृतसङ्गतमर्थं दर्शयति ।। आनुपूर्वीति । आनुपूर्व्यादिशब्दैराम्नाय एवोच्यत इत्यर्थः । आनुपूर्व्याऽस्थूलमनण्वित्याद्याम्नायेन सहिता इति मूलार्थ इति भावः । यद्ब्रह्म गुणपूर्णं विश्वस्य जगतो भव उत्पत्तिर्यस्मात्स विश्वभवस्तमेकं सर्वोत्तममविश्वं विश्वभिन्नम् । अनन्तमिति पाठे नित्यम् । आद्यमनादिप्रधानव्यावृत्त्यर्थमुक्तम् ।। आनन्दमात्रमविकारं विकाररहितमिति । आनुपूर्व्येत्यस्य चात्रापि संबन्धः । तथा चानुपूर्व्योक्तगुणविशिष्टतया । प्रसिद्धमिति शेषः । तदिदमहं प्रपद्य इत्यर्थः ।। १६ ।।

**सत्याशिषो हि भगवंस्तव पादमूल-**
**माशिष्टयोऽनुभजतः पुरुषार्थमूर्तेः ।**
**अप्येवमार्य भगवान् परिपाति दीनान्**
**वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ।। १७ ।।**

**तात्पर्यम् – तव पादमूलं भजत आचार्यस्याशिष्टयः शिक्षाः सत्याशीःप्रदा एव । तथापि अस्मान् शिष्यान् विशिष्टफलप्राप्तये पुनः परिपाति भवान् ।। १७ ।।**

**प्रकाशिका** – न मद्वांच्छितफलदानायात्र त्वदागमनं त्वद्भक्तस्यास्मद्गुरोरनुग्रहेणैव तस्य सिद्धत्वात् । किन्तु त्वत्कृपास्पदस्य विशिष्टफलदानायेत्याशयेनाह ।। सत्याशिष इति । इदमन्वयं प्रदर्शयन्व्याख्याति ।। तवपादमूलमिति । आचार्यस्येति विशेष्यमध्याहृतम् । शिक्षा उपदेशाः । सत्याशिष इत्यस्यार्थः ।। सत्याशीःप्रदा इति । शुभवाञ्छितप्रदा इत्यर्थः । अनेन सत्या आशिषो याभ्य इति विग्रहं सूचयति । हिशब्दार्थः ।। एवेति । अप्येवमित्यस्यार्थः ।। तथाऽपीति । अस्मानित्याचार्यो न संग्राह्य इत्याह ।। शिष्यानिति । पुनारक्षणं व्यर्थमित्यत उक्तम् ।। विशिष्टफलप्राप्तय इति ।। ततश्चायं श्लोकार्थः ।। पुरुषार्थ आनन्दानुभवः स एव मूर्तिर्यस्य तस्य तव पादमूलमनु स्वयोग्यतानुसारेण भजत आचार्यस्य नारदादेराशिष्टयः शिक्षाः । अनुग्रहपूर्वकोपदेशा इति यावत् । यद्यपि सत्याशिषो हि यथार्थशुभवांछितप्रदा एवाप्येवं तथाऽपि। हे आर्य पूज्य । भगवान्समग्रैश्वर्यमान् । अनेन स्वप्रयोजनं नास्तीति सूचयति । भवान्दीनान् अस्मान् शिष्यान् विशिष्टफलप्राप्तये पुनः परिपाति । कुतः । यतोऽनुग्रहकातरः कृपापरवशः । कृपापरवशतया रक्षणे दृष्टान्तमाह ।। वाश्रेति । नवप्रसूता गौर्वाश्रा सा यथा वत्सकमनुग्रहकातरेव परिपाति तथेति । वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्तीति श्रुतिः ।। १७ ।।

**मैत्रेय उवाच–**

**अथाभिष्टुत एवं वै सत्संकल्पेन धीमता ।**
**भृत्यानुरक्तो भगवान् प्रतिनन्द्येदमब्रवीत् ॥ १८ ॥**

**श्रीभगवानुवाच–**

**वेदाहं ते व्यवसितं हृदि राजन्यबालक ।**
**तत् प्रयच्छामि भद्रं ते दुरापमपि भूयसाम् ॥ १९ ॥**

**प्रकाशिका** – व्यवसितं कल्पितं ते तुभ्यम् । भूयसां ध्रुववरदवराणां योगिनाम् ॥ १८,१९ ॥

**नान्यैरधिष्ठितं भद्र यद् भ्राजिष्णु ध्रुवक्षिति ।**
**यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् ॥ २० ॥**

**प्रकाशिका** – एतदेव विशदयति ॥ नान्यैरिति । भो भद्र । ध्रुवा स्थिरा क्षितिर्निवासो यस्मिंस्तत्तथोक्तम् ॥ २० ॥

**मेढ्यां गोचक्रवत् स्थास्नु उदस्तात् कल्पवासिनाम् ।**
**धर्मोऽग्निः कश्यपः शक्रो मुनयो ये वनौकसः ।**
**चरन्ति दक्षिणीकृत्य भ्रमन्तो वत्सतारकाः ॥ २१ ॥**

**प्रकाशिका** – धान्यक्रमणाय भ्राम्यमाणानां पशूनां बन्धनं स्तंभो मेढी तस्यां गोचक्रवद्बलीवर्दसमूहवत् । आहितमर्पितम् । कल्पवासिनां मनुकल्पवासिनामुदस्तात्पश्चादपि स्थास्नु मन्वन्तरप्रलयेऽप्यनाशीति यावत् । पुरस्तादिति पाठे उत्तरोत्तरमनुकल्पवासिनां पुरस्तात्पूर्वं मनुप्रलयकाल इति यावत् । स्थास्नु तदा लोकत्रयनाशेऽप्यनश्वरमिति व्याख्येयम् ॥

मुनयः सप्तर्षयो वनौकसो वानप्रस्था अन्ये मुनय एते धर्माग्न्यादयो नक्षत्रदेवतारूपाः सन्तो यत्प्रदक्षिणीकृत्य भ्रमन्तश्चरन्ति । तत्प्रयच्छामीत्यन्वयः ॥ २१ ॥

**प्रस्थिते तु वनं पित्रा दत्त्वा गां धर्मसंश्रयः ।**
**षट्त्रिंशद्वर्षसाहस्रं रक्षिताऽव्याहतेन्द्रियः ॥ २२ ॥**

**प्रकाशिका** – ऐहिकं राज्याधिपत्यादिकमपि ददातीत्याह ॥ प्रस्थित इति । तुभ्यं गां भूमिं दत्वा पित्रोत्तानपादेन वनं प्रति प्रस्थिते प्रयाणे कृते सति । रक्षिता रक्षिष्यति ॥ २२ ॥

त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः ।
अन्वेषती वनं माता दावाग्निं सा प्रवेक्ष्यति ॥ २३ ॥

**प्रकाशिका** – मद्भ्रातुरुत्तमस्य राज्यसाधिकायां सुरुच्यां सत्यां कथं मम राज्यप्राप्तिरित्यत आह ॥ त्वद्भ्रातरीति । तस्मिन्नेव मनो यस्यास्तन्मनाः सा सुरुचिः ॥ २३ ॥

इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः ।
भुक्त्वा चेहाशिषः सत्या अन्ते माऽनुस्मरिष्यसि ॥ २४ ॥

**प्रकाशिका** – यज्ञो हृदयं प्रियो यस्य तम् । सत्याः शुभा मा माम् ॥ २४ ॥

ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम् ।
उपरिष्टाद् ऋषिभ्यस्त्वं यतो नावर्तते यतिः ॥ २५ ॥

**प्रकाशिका** – मत्स्थानं पूर्वदत्तं ध्रुवलोकम् । यतः स्थानाद्यतिः स्वधर्मानुष्ठानेन तल्लोकं प्राप्तः॥

**मैत्रेय उवाच–**

इत्यर्चितः स भगवानतिसृज्यात्मनः पदम् ।
बालस्य पश्यतो धाम जगाम गरुडध्वजः ॥ २६ ॥

**प्रकाशिका** – अतिसृज्य दत्वा ॥ २६ ॥

सोऽपि संकल्पजं विष्णोः पादसेवोपसादितम् ।
प्राप्य संकल्पनिर्वाणं नातिप्रीतोऽभ्यगात् पुरम् ॥ २७ ॥

**प्रकाशिका** – सोऽपि ध्रुवोऽपि विष्णोः संकल्पजं विष्णोः पादसेवनोपसादितं प्राप्तं संकल्पनिर्वाणं स्वसंकल्पफलम् ॥ २७ ॥

**विदुर उवाच –**

सुदुर्लभं यत् परमं पदं हरेर्मायाविनस्तच्चरणार्चनार्जितम् ।
लब्ध्वाऽप्यसिद्धार्थमिवैकजन्मना कथं स्वमात्मानममन्यतार्थवित् ॥ २८ ॥

**मैत्रेय उवाच–**

मातुः सपत्न्या वाग्बाणैर्हृदि विद्धस्तु तान् स्मरन् ।
नैच्छन्मुक्तिपतेर्मुक्तिं तस्मात् तापमुपेयिवान् ॥ २९ ॥

**प्रकाशिका** – माया ज्ञानमस्यास्तीति मायावी तस्य सर्वज्ञस्य हरेः परमं पदं ध्रुवलोकमेक-जन्मना लब्धमप्यात्मानं स्वमसिद्धार्थमिवाप्राप्तप्रयोजनमिव कथममन्यत ज्ञातवान् । न चाविवेकी । यतोऽर्थवित् । सप्रयोजनाभिज्ञः ॥ २८,२९ ॥

**ध्रुव उवाच–**

**समाधिनाऽनेकभवेन यत्पदं विदुः सनन्दादय ऊर्ध्वरेतसः ।**
**मासैरहं षड्भिरमुष्य पादयोश्छायामुपेत्यापहतः पृथङ्मतिः ॥ ३० ॥**

**प्रकाशिका** – पश्चात्तापमेवाह ॥ समाधिनेति सार्धषड्भिः । अनेके भवा यस्मिन् बहुजन्म-स्वभ्यस्तेनेत्यर्थः । तेनास्य हरेः पादयोः छायां प्राप्यापहतोऽपगतस्तिर्यक् ताडित इवाभूवम् । पृथङ्मतिर्भगवदितरविषयाभिनिविष्टबुद्धिः ॥ ३० ॥

**अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत ।**
**भवच्छिदः पादमूलं गत्वा याचे तदन्तवत् ॥ ३१ ॥**

**तात्पर्यम् – 'आधिपत्यमनित्यं तु ध्रुवलोकस्य यद्ध्रुवे । न तु तत्स्थानगन्तॄणां यतीनां गतिरुत्तमा । तस्यापि मुक्तिर्नियता नियतं चापि तत्पदम् । तथापि कामनानिन्दा ध्रुवेण सुकृता बते'ति भविष्यत्पर्वणि ॥ ३१ ॥**

**प्रकाशिका** – अनात्म्यं जाड्यम् । गत्वा प्राप्य । यदंतवन्नश्वरं तद्याचे प्रार्थितवान् । अत्र ध्रुवलोकस्यान्तवत्त्ववचनं यतो नावर्तते यतिरिति पूर्वोक्त्या विरुद्धम् । तत्र तत्स्थानगतस्य यतेरनावृत्त्युक्त्या तत्स्थानस्याक्षयत्वप्रतीतेरतो विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ आधिपत्यमिति । ध्रुवे यद्ध्रुवलोकस्याधिपत्यं तत्तु तदेवानित्यं तत्स्थानगंतॄणां यतीनां ध्रुव-लोकस्याधिपत्यं न तु नैव किन्तूत्तमा पुनरावृत्तिशून्या स्थितिः । तथा चान्तवदिति वचनं ध्रुवाधिपत्यविषयं यतो नावर्तत इति वचनं तु तत्स्थानगन्तृयतिविषयमतो न कोऽपि विरोध इत्याशयः । नन्वेवं ध्रुवस्य पुनरावृत्ततया न मुक्तिरित्यत उक्तम् ॥ तस्यापीति । तर्हि सर्वज्ञेन हरिणा तत्स्थानाधिपत्यं तस्मै कस्माद्दत्तमित्यत आह ॥ नियतं चापीति । चोऽवधारणे । तत्पद-मपि तस्य नियतमेवातो हरिणा दत्तमित्याशयः । तर्ह्यधिकारिणां स्वाधिकारकामनाया हरि-प्रीत्यर्थकत्वात्कथं ध्रुवेणाहो बत ममानात्म्यमिति तत्कामनानिन्दाकृतेत्यत आह ॥ तथाऽपीति । तत्पदस्य नियतत्वेऽपि ध्रुवेण कामनानिन्दा सुकृता सुष्ठु कृता । मुमुक्षुणा विषयकामना सर्वथा न कार्येति लोकशिक्षणार्थमित्यर्थः । बतेति तस्य कृपालुत्वमास्वादयति ॥ ३१ ॥

**मतिर्विदूषिता देवैर्यतद्भिरसहिष्णुभिः ।**
**यो नारदवचस्तथ्यं नाग्रहीषमसत्तमः ॥ ३२ ॥**

**प्रकाशिका** – नारदेन शिक्षितबुद्धेस्तव कथं जाड्यं प्राप्तमित्यत आह ॥ मतिरिति । देवैर्बुद्ध्यभिमानिभिर्यतद्भिर्मदपेक्षया शीघ्रं मन्वन्तरप्रलयकाल एवाविनाशिपदं प्रति । अत एवासहिष्णुभिः । विकल्पे विद्यमानेऽपीत्यादिरूपं नारदवचः ॥ ३२ ॥

**दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक् ।**
**तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा ॥ ३३ ॥**

**तात्पर्यम् – 'द्वितीयस्य स्वतन्त्रस्य त्वभावाद्व्यवर्जितः । ईश्वरश्चेशितव्यस्य भावात्स परमेश्वर' इति हरिवंशेषु ॥ ३३ ॥**

**प्रकाशिका** – एतदेव दर्शयति ॥ दैवीमिति । सर्वत्र निर्मलत्वेन द्योतमानस्य हरेर्विद्यमानां तां मायां बन्धकशक्तिमुपाश्रित्य तद्वशो भूत्वा सुप्त इव स्वप्नं पश्यन्निव भिन्नदृग्वस्तुयाथात्म्या-पेक्षयाऽन्यथा पश्यन् द्वितीयेऽसत्यपि भ्राता य उत्तमो भ्रातृव्यः शत्रुरिति दृष्टिजातया हृद्रुजा हृद्रोगेण तप्ये तापमनुभवामि । अत्र द्वितीयेऽसत्यपीति स्वातिरिक्तस्य मिथ्यात्वमुच्यत इति भाति । अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ द्वितीयस्येति । यत ईशितव्यस्यान्यस्य भावात्सद्भावमपेक्ष्येश्वर इत्युच्यते । तुशब्दोऽवधारणे । स्वापेक्षया द्वितीयस्य स्वतन्त्रस्याभावादेव द्वयवर्जितः । द्वितीयशून्यस्य इत्युच्यते । न तु द्वितीयस्यासत्त्वादित्यर्थः । कुत इत्यत आह ॥ ईश्वरस्येति । य ईश्वर इत्युच्यते स भगवांस्तु परमेश्वरः श्रुत्यादिप्रसिद्धः । अत ईशितव्यं ब्रह्मादिद्वितीयं सत्यमित्येवाङ्गीकार्यम् । ततश्च द्वितीयाभाववचनस्योक्त एवार्थः । तथा च द्वितीये भगवदपेक्षयाऽन्यस्मिन्स्वतन्त्रेऽसत्यपि भ्रातैव स्वतन्त्रः शत्रुरिति बुद्ध्या जातया हृद्रुजा तप्य इति मूलं व्याख्येयमिति भावः ॥ ३३ ॥

**मयैतत् प्रार्थितं व्यर्थं चिकित्सेव गतायुषि ।**
**प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम् ॥ ३४ ॥**

**प्रकाशिका** – तपसा प्रसाद्य मया यत्प्रार्थितं तदेतद्व्यर्थं नश्वरत्वात् । चिकित्सा औषधदानम् । जगतामादानादिकर्तारम् ॥ ३४ ॥

**भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः ।**

**तादात्म्यं यच्छतो मौढ्यान्मानो मे भिक्षितं बत**
**ईश्वरात् क्षीणपुण्येन पुलकानिव चाधनः ॥ ३९ ॥**

**तात्पर्यम् – 'हरौ नियतचित्तत्वाद्गृहवत्तत्प्रवेशनात् । मोक्षं तादात्म्यमित्याहुर्न तद्रूपत्वतः क्वचिदि'ति भविष्यत्पर्वणि ॥ तच्चित्ततैव तादात्म्यम् । 'नैकात्मतां मे स्पृहयन्ती'त्युक्तत्वात् । 'हरीच्छितेच्छुतैकात्म्यं न तेनैकस्वरूपते'ति च । 'कामेन मे काम आगादि'ति च श्रुतिः ॥ ३९ ॥**

**प्रकाशिका** – प्रार्थितमेव दर्शयति ॥ भवच्छिदमिति । भवं संसारम् । तादात्म्यमित्यस्य स्वाभेदमिति व्याख्याननिरासाय प्रमाणोदाहरणपूर्वकं विवक्षितमर्थमाह ॥ हराविति । मुक्तानामिति शेषः । तद्रूपतः स्वरूपतो न तु नैव । क्वचित्कुत्रापि ग्रन्थे । यत एवं भविष्यत्पर्वण्युक्तमतस्तच्चित्ततैव तदेकाग्र्यचित्तत्वमेव तादात्म्यं प्रकृते तादात्म्यशब्दार्थ इत्यर्थः । ननु ग्रहवत्प्रवेशनमपि तच्छब्दार्थतया कुतो नोच्यत इत्यत आह ॥ नैकात्म्यतामिति । एकात्म्यतां मे मयि न स्पृहयन्ति नेच्छन्ति । ग्रहवत्प्रवेशनरूपस्यैकात्म्यस्यात्रैकान्तिभिर-प्रार्थनीयतयोक्तत्वेनैकान्तिध्रुवप्रार्थनीयतयोच्यमानमिदमैकात्म्यं न तत्प्रवेशनरूपं किन्तु तदेक-चित्ततारूपमेवेत्यर्थः । तत्कामितकामवत्त्वं वैकात्म्यशब्दार्थतया विवक्षितं न तत्स्वरूपमैक्य-मित्याशयेन तत्र प्रमाणं पठति ॥ हरीच्छितेति । ऐकात्म्यं ऐकात्म्यताशब्दार्थः इति भावः । तुशब्दोऽवधारणार्थ इत्यभिप्रेत्य तद्व्यावर्त्यमाह ॥ नैकस्वरूपतेति । ननु मुक्तस्य हरीच्छितेच्छावत्त्वमेव कुतो येनैवं व्याख्यानमित्यतोऽत्र श्रुतिमपि दर्शयति ॥ कामेनेति । मृत्योः संहर्तुरीश्वरस्य कामेनेच्छानुसारेणैव मे काम आगात् । मुक्तावागच्छतीति श्रुत्यर्थः । तथा चैवं जीवन्मुक्तिदशायां प्रार्थनायाः कृतत्वान्मुक्तस्य हरीच्छितेच्छावत्त्वमर्थात्सिद्ध्यत्येवेत्याशयः ॥ ततश्चायं मूलार्थः ॥ तादात्म्यं तदैकाग्र्यचित्तत्वं यच्छत ईश्वराद्धरेः सकाशात्क्षीणपुण्येन मे मया राज्यादिविषये मानोऽभिमानो भिक्षितो याचितो बत हा कष्टम् । मनोभिक्षितमिति पाठे मनो मनोऽनुसारेण संकल्पितं भिक्षितमिति व्याख्येयम् ॥

अत्र दृष्टान्तमाह ॥ ईश्वरादिति । यथाऽधनो दरिद्रः क्षीणेन पुण्येनेश्वराच्चक्रवर्तिनः सकाशात्पुलकानि तुच्छधान्यानि कुलित्थादीनि याचते तथैवेत्यर्थः । चशब्दस्तुषादि-तुच्छपदार्थान्तरसमुच्चायकः ॥ ३९ ॥

मैत्रेय उवाच–

न वै मुकुन्दस्य पदारविन्दयो रजोजुषस्तात भवादृशा जनाः ।
वाञ्छन्ति तद्दास्यमृतेऽर्थमात्मनो यदृच्छया लब्धमनः समृद्धयः ॥३६॥

प्रकाशिका – मैत्रेयो हरिभक्तस्य ध्रुवस्यैतादृशानुतापो युक्त एवेत्याशयेनाह ॥ न वा इति । तद्दास्यमित्यनेन तादात्म्यमित्येतदुक्तार्थतया विवृतमिति ज्ञातव्यम् । अर्थमन्यपुरुषार्थमात्मनः परमात्मानः सकाशात् । कुतो न वांछतीत्यत आह ॥ यदृच्छयेति । भगवदिच्छयैवेत्यर्थः । यदृच्छया लब्धेन वित्तादिना मनसः समृद्धिर्येषां ते तथा ॥ ३६ ॥

आकर्ण्यात्मजमायान्तं सम्परेत्य यथागतम् ।
राजा न श्रद्दधे भद्रमभद्रस्य कुतो मम ॥ ३७ ॥

प्रकाशिका – प्रस्तुतमाह ॥ आकर्ण्येति । संपरेत्य मृत्वा गतमाकर्ण्य यथा न श्रद्दधते तथैवेत्यर्थः । अभद्रस्य मम भद्रं कुत इति मत्वेति शेषः ॥ ३७ ॥

श्रद्धाय वाक्यं देवर्षेर्हर्षवेगेन धर्षितः ।
वार्ताहर्तुरतिप्रीतो हारं प्रादान्महाधनम् ॥ ३८ ॥

प्रकाशिका – एवं शोकेन श्रद्धामकृत्वा विवेकमवलंब्यैष्यत्यविरत इति देवर्षेर्नारदस्य वाक्यं श्रद्धाय यथार्थमवबुद्ध्य हर्षवेगेन हर्षोद्रेकेण धर्षितो वशीकृतो महान्ति धनानि यस्य स तथा ॥३८॥

सदश्वं रथमारुह्य कार्तस्वरपरिष्कृतम् ।
ब्राह्मणैः कुलवृद्धैश्च पर्यस्तोऽमात्यबन्धुभिः ॥ ३९ ॥

प्रकाशिका – पर्यस्तः परिवृतः ॥ ३९ ॥

शङ्खदुन्दुभिनादेन ब्रह्मघोषेण वेणुभिः ।
निश्चक्राम पुरात् तूर्णमात्मजाभीक्षणोत्सुकः ॥ ४० ॥

प्रकाशिका – वेणुभिर्वेणुनादैश्च सहितः ॥ ४० ॥

सुनीतिः सुरुचिश्चास्य महिष्यौ रुक्मभूषिते ।
आरुह्य शिबिके सार्धमुत्तमेनाभिजग्मतुः ॥ ४१ ॥

**प्रकाशिका** – रुक्मं हेम । शिबिके आन्दोलिके उत्तमेन साकमिति शेषः ॥ ४१ ॥

**तं दृष्ट्वोपवनाभ्याश आयान्तं तरसा रथात् ।**
**अवरुह्य नृपस्तूर्णमासाद्य प्रेमविह्वलः ॥ ४२ ॥**

**प्रकाशिका** – उपवनाभ्याशे समीपे ॥ ४२ ॥

**परिरेभेऽङ्गजं दोर्भ्यां दीर्घोत्कण्ठमनाः श्वसन् ।**
**विष्वक्सेनाङ्घ्रिसंस्पर्शहताशेषाघबन्धनम् ॥ ४३ ॥**

**प्रकाशिका** – अंगजं पुत्रम् । विष्वक्सेनस्य हरेरङ्घ्रिस्पर्शेन हतमशेषमघं बन्धनं च यस्य स तथा तम् । अनेन राज्ञोऽपि तत्स्पर्शेनाघपरिहार इति सूचितम् ॥ ४३ ॥

**अथाजिघ्रन्मुहुर्मूर्ध्नि शान्तैर्नयनवारिभिः ।**
**स्नापयामास तनयमाप्तोद्दाममनोरथम् ॥ ४४ ॥**

**प्रकाशिका** – शान्तैः शीतलैः । शस्य सुखस्यान्तो निर्णयो यैः । सुखसूचकैरिति यावदिति वा । अतः प्राप्त उद्दाम उत्कृष्टो मनोरथो येन तम् ॥ ४४ ॥

**अभिवन्द्य पितुः पादावाशीर्भिश्चानुमन्त्रितः ।**
**ननाम मातरौ शीर्ष्णा सत्कृतः सज्जनाग्रणीः ॥ ४५ ॥**

**सुरुचिस्तं समुत्थाप्य पादावानतमर्भकम् ।**
**परिष्वज्याह जीवेति बाष्पगद्गदया गिरा ॥ ४६ ॥**

**प्रकाशिका** – आशीर्भिराशीर्वचनैरनुमन्त्रित उक्तः । मन्त्रतुल्यैराशीर्वचनैर्विषयीकृत इति यावत् । इदं कर्तव्यं तस्य नाश्चर्यमिति सूचनाय सज्जनाग्रणीरित्युक्तम् ॥ ४५,४६ ॥

**यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः ।**
**तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ ४७ ॥**

**प्रकाशिका** – द्वेषयुक्तायाः सुरुच्याः कथं ध्रुवे प्रीतिरुत्पन्नेत्यपेक्षायामाह ॥ यस्येति । मैत्र्यादिभिः । उत्तमेषु भक्तिः समेषु मैत्र्यधमेषु सत्सु कृपेत्येवमादिभिरित्यर्थः । नमंत्यनुसरन्ति । प्रव्हीभवन्तीति वा । आपः स्वयं स्वयमेव निम्नदेशं प्रति यथा तथैव ॥ ४७ ॥

**उत्तमश्च ध्रुवश्चोभावन्योन्यं प्रेमविह्वलौ ।**
**अङ्गसङ्गादुत्पुलकावस्रौघं मुहुरूहतुः ॥ ४८ ॥**

**प्रकाशिका** – अस्रौघं बाष्पप्रवाहम् । ऊहतुर्दधतुः ॥ ४८ ॥

**सुनीतिरस्य जननी प्राणेभ्योऽपि प्रियं सुतम् ।**
**उपगुह्य जहावाधिं यदङ्गस्पर्शनिर्वृता ॥ ४९ ॥**
**पयः स्तनाभ्यां सुस्राव नेत्रजैः सलिलैः शिवैः ।**
**तदाऽभिषिच्यमानाया वीरे वीरसुवो मुहुः ॥ ५० ॥**

**प्रकाशिका** – वीरं पुत्रं सूतवतीति वीरसूस्तस्याः । वीरपुत्रेऽभिषिच्यमानायाः स्तनाभ्यां पयस्तदा सुस्राव ॥ ५० ॥

**तां शशंसुर्जना राज्ञीं दिष्ट्या ते पुत्र आर्तिहा ।**
**प्रतिलब्धश्चिरं नष्टो रक्षिता मण्डलं भुवः ॥ ५१ ॥**

**प्रकाशिका** – दिष्ट्या पुण्येन नष्टोऽदर्शनं प्राप्तो रक्षिता रक्षिष्यति ॥ ५१ ॥

**अभ्यर्चितस्त्वया नूनं भगवान् प्रणतार्तिहा ।**
**यदनुध्यायिनो धीरा मृत्युं जिग्युः सुदुर्जयम् ॥ ५२ ॥**

**प्रकाशिका** – यदि प्रणतार्तिहरो हरिस्त्वया नाभ्यर्चितस्तर्हि चिरं नष्टः पुत्रो न प्रतिलब्धः स्यात् । न च तथा । तस्मादभ्यर्चित इति तर्कः । भगवन्तं विशिनष्टि ॥ यदनुध्यायिन इति ॥ ५२ ॥

**लाल्यमानं जनैरेवं ध्रुवं सभ्रातरं नृपः ।**
**आरोप्य करिणीं हृष्टः स्तूयमानोऽविशत् पुरम् ॥ ५३ ॥**

**तात्पर्यम्** – **'कलभश्चैव कन्यानां करिणी बालमङ्गल' इति राजनीतौ ॥ ५३ ॥**

**प्रकाशिका** – जनैर्मात्रादिभिर्जनैः स्तूयमान इति वाऽन्वयः । अत्र विशिष्टकरिणी-ग्रहणेऽभिप्रायं प्रमाणेनैव दर्शयति ॥ कलभ इति । कलभः करिशावकः कन्यानां मङ्गले कर्तव्ये वाहनार्थं कलभ एव स्यात् । बालानां कुमाराणां मङ्गले कर्तव्ये करिणी स्यादित्यर्थः । अतः कुमारस्य ध्रुवस्य मङ्गलार्थं करिण्येवोपात्तेत्याशयः ॥ ५३ ॥

**तत्र तत्रोपसंक्लृप्तैर्लसन्मकरतोरणेः ।**
**संवृतैः कदलीस्तम्भैः पूगपोतैश्च तद्विधैः ॥ ५४ ॥**

**प्रकाशिका** – पुरं वर्णयति । तत्र तत्रेति चतुर्भिः । संवृतैः फलपुष्पबन्धनसहितैः पूगानां पोतैर्बालवृक्षैस्तद्विधैः फलपुष्पयुक्तैः फलद्वारमुपस्कृतमलंकृतमित्युत्तरेणान्वयः ॥ ५४ ॥

**चूतपल्लववासःस्रङ्मुक्तादामविलम्बिभिः ।**
**उपस्कृतं प्रतिद्वारमपां कुम्भैः सदीपकैः ॥ ५५ ॥**

**प्रकाशिका** – चूतपल्लवाश्च वासांसि च स्रजश्च मुक्तादामानि च तेषां विलंबो विशिष्टलंबनं येषु कुंभेष्वितितैः ॥ ५५ ॥

**प्राकारैर्गोपुराट्टालैः शातकुम्भपरिच्छदैः ।**
**सर्वतोऽलंकृतं श्रीमद्विमानशिखरद्युभिः ॥ ५६ ॥**

**प्रकाशिका** – शातकुंभपरिच्छदैः सुवर्णालंकारैरट्टालं हर्म्यमित्यर्थः । श्रीमतां विमानानां शिखराणां च द्युभिरलंकृतम् । अनेन देवादीनामागमनं तत्र सूचयति ॥ ५६ ॥

**मृष्टचत्वररथ्यादिमार्गं चन्दनचर्चितम् ।**
**लाजाक्षतैः पुष्पफलैस्तन्दुलैः बलिभिर्युतम् ॥ ५७ ॥**

**प्रकाशिका** – चत्वरश्चतुष्पथो रथ्य राजमार्गः । आदिपदेनावान्तरमार्गग्रहणम् । मृष्टाः संमार्जिताश्चत्वरादयो यस्मिन् ॥ ५७ ॥

**ध्रुवाय पथि दृष्टाय तत्र तत्र पुरस्त्रियः ।**
**सिद्धार्थाक्षतदध्यम्बुदूर्वापुष्पफलानि च ॥ ५८ ॥**

**प्रकाशिका** – सिद्धार्थाः शुभ्रसर्षपाः ॥ ५८ ॥

**उपजह्रुः प्रयुञ्जाना वात्सल्यादाशिषः सतीः ।**
**शृण्वंस्तु वल्गुगीतानि प्राविशद् भवनं पितुः ॥ ५९ ॥**

**प्रकाशिका** – उपजह्रुर्व्यकिरन् । सतीः सत्यः । एतासां पुरस्त्रीणां वल्गूनि चारूणि गीतानि ॥ ५९ ॥

महामणिव्रातमये स तस्मिन् कशिपूत्तमे ।
लालितो नितरां पित्रा न्यवसद् दिवि देववत् ॥ ६० ॥

प्रकाशिका – तस्मिन्विद्यमाने कशिपोत्तमे मञ्चोत्तमे ॥ ६० ॥

पयः फेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ।
आसनानि महार्हाणि यत्र रौक्मा उपस्कराः ॥ ६१ ॥
यत्र स्फटिककुड्येषु महामारकतेषु च ।
मणिप्रदीपा आभान्ति ललनारत्नसंयुताः ॥ ६२ ॥

प्रकाशिका – दान्ता गजदन्तनिर्मिता रुग्मपरिच्छदाः सुवर्णालङ्कारयुक्ताः । मञ्चादय इति शेषः । यत्र भवने उपस्कराः पात्राणि ॥ ६१ ॥

उद्यानानि च रम्याणि विचित्रैरमरद्रुमैः ।
कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥ ६३ ॥

प्रकाशिका – कूजन्ति विहंगमिथुनानि येषु तैर्गायन्तो मत्ता मधुव्राता येषु तैरमरद्रुमै रम्याण्युद्यानानि च यत्र यस्मिन्नभवन् इति पूर्वेणान्वयः ॥ ६३ ॥

वाप्यो वैदूर्यसोपानाः पद्मोत्पलकुमुद्वतीः ।
हंसकारण्डबकुलैर्जुष्टाश्चक्राह्वसारसैः ॥ ६४ ॥
उत्तानपादो राजर्षिः प्रभावं तनयस्य तम् ।
श्रुत्वा दृष्ट्वाऽद्भुततमं प्रपेदे विस्मयं परम् ॥ ६५ ॥
वीक्ष्योढवयसं पुत्रं प्रकृतीनां च संमतम् ।
अनुरक्तप्रजं राजा ध्रुवं चक्रे भुवः पतिम् ॥ ६६ ॥

प्रकाशिका – ऊढवयसं राज्यपरिपालनशक्तिमन्तम् ॥ ६६ ॥

आत्मानं च प्रवयसमाकलय्य विशां पतिः ।
वनं विरक्तः प्रातिष्ठत् विमृशन्नात्मनो गतिम् ॥ ६७ ॥

प्रकाशिका – प्रवयसं संवृद्धम् आकलय्य ज्ञात्वा । आत्मनः स्वस्य हरेश्च गतिं स्थितिम् । विमृशन्विचारयन् ॥ ६७ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे दशमोऽध्यायः ॥ १० ॥

## अथ एकादशोऽध्यायः ।

मैत्रेय उवाच–

प्रजापतेर्दुहितरं शिंशुमारस्य वै ध्रुवः ।
उपयेमे भ्रमिं नाम तत्सुतौ कल्पवत्सरौ ।। १ ।।

प्रकाशिका – ।। हरिः ॐ ।। अत्र न केवलं मोक्ष एव भगवत्प्रसादायत्तः किन्तु बाह्याभ्यन्तरशत्रुजयोऽपीत्यतस्तन्माहात्म्यं वर्ण्यतेऽस्मिन्नध्याये । तत्रादौ ध्रुवविवाहादिप्रकारः कथ्यते ।। प्रजापतेरित्यादिना । तत्सुतौ तस्या भ्रमेः सुतौ कल्पो वत्सरश्च महाबलो ध्रुवः ।। १ ।।

इलायामपि भार्यायां वायोः पुत्र्यां महाबलः ।
पुत्रमुत्कलनामानं योगेश्वरमजीजनत् ।। २ ।।

प्रकाशिका – योगेश्वरमणिमाद्यष्टांगयोगानामीश्वरम् ।। २ ।।

उत्तमस्त्वकृतोद्वाहो मृगयायां बलीयसा ।
हतः पुण्यजनेनाद्रौ तन्माता तद्गतिं गता ।। ३ ।।

प्रकाशिका – तस्य सुतस्य गतिं स्थितिम् । मृतिमिति यावत् ।। ३ ।।

ध्रुवो भ्रातृवधं श्रुत्वा कोपामर्षशुचाऽर्पितः ।
जैत्रं स्यन्दनमास्थाय गतः पुण्यजनालयम् ।। ४ ।।

प्रकाशिका – कोपः क्रोधोऽमर्षोऽसहिष्णुता ताभ्यां युक्तया शुचार्पितो व्याप्तः । जैत्रं जयशीलं पुण्यजनालयमलकापुरीम् ।। ४ ।।

गत्वोदीचीं दिशं राजा रुद्रानुचरसेविताम् ।
ददर्श हिमवद्द्रोण्यां पुरीं गुह्यकसंकुलाम् ।। ५ ।।

प्रकाशिका – रुद्रानुचरा राक्षसा गुह्यका इति यक्षाणामेव नामान्तरम् ।। ५ ।।

दध्मौ शङ्खं महाबाहुः खं दिशश्चानुनादयन् ।
येनोद्विग्नदृशः क्षत्तरुपदेव्योऽत्रसन् भृशम् ।। ६ ।।

ततो निष्क्रम्य बलिना उपदेवमहाभटाः ।
असहन्तस्तन्निनादमभिपेतुरुदायुधाः ॥ ७ ॥

**प्रकाशिका** – उपदेव्यो यक्षस्त्रियः ॥ ६,७ ॥

स तानापततो वीर उग्रधन्वा महारथः ।
एकैकं युगपत् सर्वानहन् बाणैस्त्रिभिस्त्रिभिः ॥ ८ ॥
ते वै ललाटलग्नैस्तैरिषुभिः सर्व एव हि ।
मत्वा निरस्तमात्मानमाशंसन् कर्म तस्य तत् ॥ ९ ॥

**प्रकाशिका** – अहन् जघान ॥ ८,९ ॥

तेऽपि चामुममृष्यन्तः पादस्पर्शमिवोरगाः ।
शरैरविध्यन् युगपद् द्विगुणं प्रचिकीर्षवः ॥ १० ॥

**प्रकाशिका** – द्विगुणं यथा भवति तथा षड्भिः प्रतिकर्तुमिच्छवः ॥ १० ॥

ततः परिघनिस्त्रिंशैः प्रासशूलपरश्वधैः ।
शक्त्यृष्टिभिर्भुशुण्डीभिश्चित्रवाजैः शरैरपि ॥ ११ ॥

**प्रकाशिका** – चित्रवाजैर्विचित्रपक्षैः ॥ ११ ॥

अभ्यवर्षन् प्रकुपिताः सरथं सह सारथिम् ।
इच्छन्तस्तत्प्रतीकर्तुमयुतानां त्रयोदश ॥ १२ ॥

**प्रकाशिका** – अयुतानां वा त्रयोदशलक्षादुपरि त्रिंशत्सहस्राणि । प्राधान्यविवक्षयैतत् ॥ १२ ॥

औत्तानपादिः स तदा शस्त्रवर्षेण भूयसा ।
नोपादृश्यत संच्छन्न आसारेण यथा गिरिः ॥ १३ ॥

**प्रकाशिका** – तदा ध्रुवः किमभूत्तत्राह ॥ औत्तानपादिरिति । आसारेण सन्ततनिबिड-वर्षधारया ॥ १३ ॥

हाहाकारस्तदैवासीत् सिद्धानां दिवि पश्यताम् ।
हतोऽयं मानवः सूर्यो मग्नः पुण्यजनार्णवे ॥ १४ ॥

**प्रकाशिका** – सूर्यः ज्ञानिप्रियः सूर्य इव सूर्यो वा । मानवो मनोः पौत्रः ॥ १४ ॥

**नदत्सु यातुधानेषु जयकाशिष्वथो मृधे ।**
**उदतिष्ठद् रथस्तस्मान्नीहारादिव भास्करः ॥ १५ ॥**

**प्रकाशिका** – जयकाशिषु जयप्रकाशकेषु नदत्सूदतिष्ठच्छस्त्रास्त्रवर्षादन्यत्रागात् ॥ १५ ॥

**धनुर्विस्फूर्जयन्नुग्रं द्विषतां खेदमुद्वहन् ।**
**अस्त्रौघं व्यधमद् बाणैर्घनानीकमिवानिलः ॥ १६ ॥**

**प्रकाशिका** – द्विषतां शस्त्रौघं व्यधमत्संचूर्णितमकरोत् ॥ १६ ॥

**तस्य ते चापनिर्मुक्ता भित्त्वा वर्माणि रक्षसाम् ।**
**कायानाविविशुस्तिग्मा गिरीनशनयो यथा ॥ १७ ॥**

**प्रकाशिका** – वर्माणि कवचानि ॥ १७ ॥

**भल्लैः संच्छिद्यमानानां शिरोभिश्चारुकुण्डलैः ।**
**ऊरुभिर्हेमतालाभैर्दोर्भिर्वलयवल्गुभिः ॥ १८ ॥**

**प्रकाशिका** – भल्लैरर्धचन्द्राकारैः ॥ १८ ॥

**हारकेयूरमुकुटैरुष्णीषैश्च महाधनैः ।**
**आस्तृतास्ता रणभुवो रेजुर्वीरमनोहराः ॥ १९ ॥**

**प्रकाशिका** – रणभुवो रणप्रदेशाः ॥ १९ ॥

**हतावशिष्टा इतरे रणाजिराद् रक्षोगणाः क्षत्रियवर्यसायकैः ।**
**प्रायो निकृत्तावयवा विदुद्रुवुर्मृगेन्द्रविक्रीडितयूथपा इव ॥ २० ॥**

**प्रकाशिका** – निकृन्ता भिन्ना अवयवो येषाम् । मृगेन्द्रेण सिंहेन विगतक्रीडोपक्रमाः । यूथपा गजाः ॥ २० ॥

**अपश्यमानः स तदाऽऽततायिनं महामृधे कंचन मानवोत्तमः ।**
**पुरीं दिदृक्षन्नपि नाविशद् द्विषां न मायिनां वेद चिकीर्षितं जनः ॥ २१ ॥**

**प्रकाशिका** – आततायिनं शस्त्रपाणिम् । यतो जनो मायिनां चिकीर्षितं कर्तुमिष्टं न वेद न जानात्यतः ॥ २१ ॥

**इति ब्रुवंश्चित्ररथः स्वसारथिं यत्तः परेषां प्रतियोगशङ्कितः ।**
**शुश्राव शब्दं जलधेरिवेरितं नभस्वता दिक्षु रजोऽन्वदृश्यत ॥ २२ ॥**

**प्रकाशिका** – इति ब्रुवन्नित्यत्रापि न मायिनामित्यादेरनुषङ्गः । चित्ररथो ध्रुवो । यत्तः प्रयत्नवान्प्रतियोगः पुनरुद्यमः । जलधेरुत्पन्न इव नभस्वता वायुनेरितं प्रेरितम् ॥ २२ ॥

**क्षणेनाच्छादितं व्योम घनानीकेन सर्वतः ।**
**विस्फुरत्तडिता दिक्षु त्रासयंस्तनयित्नुना ॥ २३ ॥**

**प्रकाशिका** – विस्फुरंत्यस्तटितो यस्मिंस्तेन । त्रासयन्तः स्तनयित्नवो यस्मिंस्तेन ॥ २३ ॥

**ववृषू रुधिरौघास्थिपूयविण्मूत्रमेधसः ।**
**निपेतुर्गगनादस्य कबन्धान्यग्रतोऽनघ ॥ २४ ॥**

**प्रकाशिका** – ववर्षुः । मेघा इति शेषः । मेधस इति पुंस्त्वं छान्दसम् । कबन्धानि शिरोरहितशरीराणि ॥ २४ ॥

**ततः खेऽदृश्यत गिरेर्निपेतुः सर्वतो दिशम् ।**
**गदापरिघनिस्त्रिंशमुसला साश्मवर्षिणः ॥ २५ ॥**

**प्रकाशिका** – साश्मवर्षिणोऽश्मवर्षसहितं यद्वर्षं तद्वतः ॥ २५ ॥

**अहयोऽशनिनिःश्वासा वमन्तोऽग्निं रुषाऽक्षिभिः ।**
**अभ्यधावन् गजा मत्ताः सिंहव्याघ्राश्च यूथशः ॥ २६ ॥**

**प्रकाशिका** – अशनिर्मेघवह्निज्वाला तद्वन्निःश्वासो येषाम् ॥ २६ ॥

**समुद्र ऊर्मिभिर्भीमः प्लावयन् सर्वतो भुवम् ।**
**आससाद महाह्रादः कल्पान्त इव भीषणः ॥ २७ ॥**

**प्रकाशिका** – ह्रादो नादः ॥ २७ ॥

**एवंविधान्यनेकानि त्रासनान्यमनस्विनाम् ।**
**ससृजुस्तिग्मगतय आसुर्या माययाऽसुराः ॥ २८ ॥**

**प्रकाशिका** – त्रासनानि भयङ्कराण्यमनस्विनां मनोबलरहितानाम् । तिग्मा क्रूरा गतिर्येषां ते तिग्मगतयोऽसुराः सुरभिन्ना यक्षा । आसुर्या असुरजनप्रियया ॥ २८ ॥

**ध्रुवे प्रयुक्तामसुरैस्तां मायामतिदुस्तराम् ।**
**निशाम्य तस्य मुनयः शमाशंसन् समागताः ॥ २९ ॥**

**प्रकाशिका** – शं कल्याणमाशंसन्प्रार्थितवन्तः ॥ २९ ॥

**मुनय ऊचुः –**

**औत्तानपादे भगवांस्तव शार्ङ्गधन्वा**
**देवः क्षिणोत्ववनतार्तिहरो विपक्षान् ।**
**यन्नामधेयमभिधाय निशम्य चाद्धा**
**लोकोऽञ्जसा तरति दुस्तरमङ्ग मृत्युम् ॥ ३० ॥**

**प्रकाशिका** – अद्धा साक्षात् । अंजसा सुखेनैव । अनेन नारायणास्त्रमृषिभिः स्मारितमिति ज्ञातव्यम् ॥ ३० ॥

**मैत्रेय उवाच–**

**निशम्य वदतामेवं ऋषीणां धनुषि ध्रुवः ।**
**संदधेऽस्त्रमुपस्पृश्य यन्नारायणनिर्मितम् ॥ ३१ ॥**

**प्रकाशिका** – उपस्पृश्याचमनादिकं कृत्वा यन्नारायणेन निर्मितमभिव्यक्तं तत् ॥ ३१ ॥

**संधीयमान एतस्मिन् माया गुह्यकनिर्मिताः ।**
**क्षिप्रं विनेशुर्विदुर क्लेशा ज्ञानोदये यथा ॥ ३२ ॥**

**तस्यार्षास्त्रं धनुषि प्रयुञ्जतः सुवर्णपुङ्खाः कलहंसवाससः ।**
**विनिःसृता आविविशुर्द्विषद्बलं वनं यथा भीमरवाः शिखण्डिनः ॥ ३३ ॥**

**प्रकाशिका** – आर्षमृषिसंबन्धि । ऋषिभिः स्मारितमिति यावत् । तच्च तदस्त्रं च प्रयुंजतः सतः । सुवर्णपुंखाः सुवर्णमयाः पुंखा मूलप्रदेशा येषाम् । कलहंसानां वासांसि पक्षा इव पक्षा येषां शराणां ते तथा । शिखंडिनो मयूराः । वस आच्छादन इति धातोः । वासःशब्देन पक्षा लक्ष्यन्ते । भीमो भयंकरो रवो येषां ते तथा ॥ ३३ ॥

**तैस्तिग्मधारैः प्रधने शिलीमुखैरितस्ततः पुण्यजना उपद्रुताः ।**
**तमभ्यधावन् कुपिता उदायुधाः सुपर्णमुन्नद्धफणा इवाहयः ।। ३४ ।।**

**प्रकाशिका –** तिग्मधारैरुग्राग्रैः शिलीमुखैः शरैः ।। ३४ ।।

**स तान् पृषत्कैरभिधावतो मृधे निकृत्तबाहूरुशिरोधरोदरान् ।**
**निनाय लोकं परमर्कमण्डलं व्रजन्ति निर्भिद्य यमूर्ध्वरेतसः ।। ३५ ।।**

**प्रकाशिका –** पृषत्कैर्बाणैः परमुत्तमं लोकं निनाय प्रापयामास । कथं भूतम् । ऊर्ध्वरेतसः संन्यासिनोऽर्कमण्डलं भित्वा यं व्रजन्ति तम् ।। ३५ ।।

**तान् हन्यमानानभिवीक्ष्य गुह्यकाननागसश्चित्ररथेन भूरिशः ।**
**औत्तानपादिं कृपया पितामहो मनुर्जगादोपगतः सहर्षिभिः ।। ३६ ।।**

**प्रकाशिका –** अनागसो निरपराधान् । चित्ररथेन ध्रुवेण ।। ३६ ।।

**मनुरुवाच–**

**अलं वत्सातिरोषेण तमोद्वारेण पाप्मना ।**
**येन पुण्यजनानेतानवधीस्त्वमनागसः ।। ३७ ।।**

**प्रकाशिका –** तमोद्वारेण यथार्थज्ञानप्रतिबन्धकत्वेन नरकद्वारेण पाप्मना पापसाधनेन ।। ३७ ।।

**नास्मत्कुलोचितं तात कर्मैतत् सद्भिर्गर्हितम् ।**
**वधोऽयमुपदेवानामारब्धस्तेऽकृतैनसाम् ।। ३८ ।।**

**प्रकाशिका –** अकृतैनसामकृतापराधानाम् ।। ३८ ।।

**नन्वेकस्यापराधेन तत्सङ्गाद् बहवो हताः ।**
**भ्रातुर्वधाभितप्तेन त्वयाऽङ्ग भ्रातृवत्सल ।। ३९ ।।**

**प्रकाशिका –** ननु मद्भ्रातृहंतारः कथमकृतैनस इत्यत आह ।। नन्विति । एकस्यापराधेन तत्संगादपराधियक्षापरित्यागात् ।। ३९ ।।

**नायं मार्गो हि साधूनां हृषीकेशानुवर्तिनाम् ।**
**यदात्मानमसंगृह्य पशुवद् भूतवैशसम् ।। ४० ।।**

**प्रकाशिका** – सत्यप्यपराधे न भागवतस्य तवेदं नोचितमित्याह ।। नायमिति । आत्मानं मनोऽसंगृह्यानियम्य पशुवन्मूढवत् । भूतानां वैशसम् । हिंसेति यावत् ।। ४० ।।

**सर्वभूतात्मभावेन भूतावासं हरिं भवान् ।**
**आराध्याऽऽप दुराराध्यं विष्णोस्तत् परमं पदम् ।। ४१ ।।**

**प्रकाशिका** – इतोऽपि तवेदमुचितमित्याह ।। सर्वभूतेति द्वाभ्याम् । सर्वभूतानामन्तर्यामित्वेन भूतावासं भूतेष्ववस्थितम् ।। ४१ ।।

**स त्वं हरेरनुध्याता तत्पुंसामपि संमतः ।**
**कथं त्ववद्यं कृतवाननुशिक्षन् सतां व्रतम् ।। ४२ ।।**

**प्रकाशिका** – हरेरनुध्याता सर्वभूतेषु हर्यनुसंधानवान् । अनुध्यायत इति पाठे हरिणा हृदि चिंतित इत्यर्थः । साधुत्वेन संमतः ।। ४२ ।।

**तितिक्षया करुणया मैत्र्या चाखिलजन्तुषु ।**
**समत्वेन च सर्वात्मा भगवान् सम्प्रसीदति ।। ४३ ।।**

**प्रकाशिका** – सतां व्रतमेव दर्शयंस्तत्फलमेवाह ।। तितिक्षयेति । नीचेषु सत्सु करुणया । समेषु मैत्र्याऽखिलजन्तुषु समत्वेन हरेरेकप्रकारताज्ञानेन । सर्वात्मा सर्वान्तर्यामी ।। ४३ ।।

**सम्प्रसन्ने भगवति पुरुषः प्राकृतैर्गुणैः ।**
**विमुक्तो जीवनिर्मुक्तो ब्रह्म निर्वाणमृच्छति ।। ४४ ।।**

**प्रकाशिका** – तेनापि किमित्यत आह ।। संप्रसन्ने इति । गुणैः सत्त्वादिभिर्विमुक्तोऽत एव जीवत्यनेनेति जीवः शरीरं तस्मान्निर्मुक्तः । निर्वाणं नित्यनिर्मुक्तजडशरीरं ब्रह्मर्च्छति प्राप्नोति ।। ४४ ।।

**भूतैः पञ्चभिरारब्धो योषित् पुरुष एव हि ।**
**तयोर्व्यवायात् सम्भूतिर्योषित्पुरुषयोरिह ।। ४५ ।।**

**प्रकाशिका** – एवं भ्रातृहंतृत्वं यक्षाणामङ्गीकृत्योक्तमिदानीमीश्वरकृतसृष्टावेवायं भ्राता न स्वभावतः स्वातन्त्र्येण । तद्धन्ता च हरिरेव न यक्षादिरित्याशयेन हरेः स्वातन्त्र्येण सृष्ट्यादि-कर्तृत्वरूपं माहात्म्यं दर्शयति ।। भूतैरित्यादिना । आदिकालीनो योषिद्योषिद्देहः पुरुषः

पुरुषदेहश्चारब्धः सृष्टो न स्वाभाविकः । इह जीवराशौ । तयोर्योषित्पुरुषयोर्व्यवायान्मैथुनादन्ययोर्योषित्पुरुषयोरिह संसारे संभूतिः करचरणादिविभागलक्षणं संभवति ॥ ४५ ॥

**एवं प्रवर्तते सर्गः स्थितिः प्रलय एव च ।**
**गुणव्यतिकराद् राजन् मायया परमात्मनः ॥ ४६ ॥**

**प्रकाशिका** एवं पञ्चभूतारब्धैरेव राजादिभिः स्थितिः पञ्चभूतारब्धैरेव यमादिभिः संयमः संहारश्च भवति । ननु पञ्चभूतारब्धदेहानां कथं विचित्रसर्गस्थितिसंयमरूपविलक्षणकार्यहेतुत्वमित्यत उक्तम् ॥ गुणेति । गुणानां सत्त्वादीनां व्यतिकराद्व्यत्यासादिति । तथा च पञ्चभूतानुस्यूतरजःप्रधानेन देहेन सृष्टिस्तदनुस्यूतसत्त्वप्रधानेन स्थितिस्तदनुस्यूततमःप्रधानेन संयम इत्यर्थः । ननु चेतनेच्छाद्यभावे जडानां भूतानां गुणव्यतिकरेण कथं सर्गादीत्यत उक्तम् ॥ परमात्मन इति । माययेच्छया । प्रेरितादिति शेषः ॥ ४६ ॥

**निमित्तमात्रं तत्रात्मा निर्गुणः पुरुषर्षभः ।**
**व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवत् ॥ ४७ ॥**

**तात्पर्यम् – 'हरिरक्लिष्टकारित्वादयस्कान्तवदुच्यते । कामकर्मस्वभावेषु काले चावस्थितो हरिः । सर्वकारणभूतः संस्तत्तन्नाम्नाऽभिधीयत' इति सत्यसंहितायाम् ॥ ४७ ॥**

**प्रकाशिका** – परमात्मनः केचिदुपादानत्वं वदन्ति तान्निराकरोति ॥ निमित्तमात्रमिति । तत्र जगत्सृष्ट्यादौ युक्तिमाह ॥ निर्गुण इति । अनेन सगुणप्रकृतेरेवोपादानत्वमिति सूचयति ॥ निर्गुणत्वेऽपि युक्तिः पुरुषर्षभ इति । क्षराक्षरपुरुषोत्तम इत्यर्थः । एतदुपपादयति ॥ व्यक्ताव्यक्तमिति । कार्यकारणात्मकमित्यर्थः । यस्मिन्निमित्ते सति भ्रमति चेष्टते । अत्र दृष्टान्तमाह ॥ लोहवदिति । यथाऽयस्कान्ते निमित्ते सति लोहं सूच्यादिकं चेष्टते तथेत्यर्थः । अत्रायस्कांतस्य तटस्थतयैवायोभ्रामकत्वं तथा हरेरपि तटस्थतयैव जगच्चेष्टकत्वमुच्यत इति प्रतीतिनिवारणायायस्कान्तदृष्टान्तदार्ष्टान्तिकभाववचनाभिप्रायं प्रमाणेनैवाह ॥ हरिरिति ॥ उच्यते पुराणादाविति शेषः । ननु तटस्थतया कर्तृत्वादित्याशयवानाह ॥ कामेति । चशब्दाद्दैवे चेत्यदृष्टस्य संग्रहः । सर्वकारणभूतः सन् सर्वकारणतयेत्यर्थः । तत्तनाम्ना कामकर्मादिनाम्ना । अभिधीयते । वेदद्रष्टृभिरिति शेषः । अनेन केचित्कर्म वदंत्येनमिति वक्ष्यमाणश्लोकतात्पर्यमुक्तमिति ज्ञातव्यम् ॥ ४७ ॥

**स खल्विदं भगवान् योगशक्त्या गुणप्रवाहेषु विभक्तवीर्यः ।**
**करोत्यकर्तेव निहन्त्यहन्ता चेष्टा विभूम्नः खलु दुर्विभाव्या ॥ ४८ ॥**

**प्रकाशिका** – ननु लोके पितादिरेव सृष्टिकर्ता राजादिरेव पालनकर्ता यमादिरेव संहारकर्त्तेति प्रसिद्धेः परमात्मनः सृष्ट्यादिकर्तृत्वं कथमित्यत आह ॥ स खल्विति । स भगवान्योगशक्त्या गुणप्रवाहेषु गुणानां सत्त्वादीनां प्रवाहः सृष्टिर्येभ्यस्तेषु पित्रादिषु स्थित्वा तत्र क्रियानुसारेण विभक्तं वीर्यं सामर्थ्यं यस्य स तथा । इदं पुत्रादिरूपं जगत्करोति । पालयतीत्यपि ग्राह्यम् । निहन्ति च । खल्विति प्रमाणप्रसिद्धिं दर्शयति । तथा च लौकिकीप्रसिद्धिरप्रयोजकेति भावः । नन्वाप्तसमस्तकामस्य भगवतः प्रयोजनरागाभावान्न सृष्टिपालनकर्तृत्वं वास्तवं नापि संहर्तृत्वं द्वेषाभावादित्यत उक्तम् । प्रयोजनापेक्षयाऽकर्तैव करोति द्वेषेणाहन्तैव निहन्तीति । ननु कथमिदं लोकविरुद्धं घटत इत्यत उक्तम् ॥ चेष्टेति । विशेषेण परिपूर्णस्य भगवतश्चेष्टाप्रवृत्तिर्दुर्विभाव्या लौकिकन्यायेन ज्ञातुमशक्या खल्विदमपि श्रुत्यादिप्रसिद्धमित्यर्थः ॥ ४८ ॥

**सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ।**
**जनं जनेन जनयन् मारयन् मृत्युनाऽऽत्मनः ॥ ४९ ॥**

**प्रकाशिका** – ननु भगवतोऽप्यन्तवत्त्वे सर्वान्तकरत्वं सादित्वे सर्वजनकत्वं च कथमित्यत आह ॥ सोऽनन्त इति । स्वयमनन्तः सर्वान्तकरो यतः कालः कालनामा । स्वयमनादिरादिकृत् प्रथमकर्ता । मुख्यकर्तेति यावत् । यतोऽव्ययो ज्ञानेच्छादीनां ह्रासशून्यः । नन्वेवं सृष्ट्यादिषु पुत्रादिषु पित्रादेरपि कर्तृत्वप्रसिद्धिः किं निबन्धन इत्यतस्ते तदधीना एव कर्तार इत्याशयेनोक्तम् ॥ जनमिति । जनं पुत्रादिरूपमात्मनः स्वस्याधीनेन जनेन पित्रादिना जनयन् आदिकृत् । आत्मनोऽधीनेन मृत्युना यमादिना मारयन्नन्तकरः सन् वर्तते ॥ ४९ ॥

**न वै स्वपक्षोऽस्य विपक्ष एव वा परस्य मृत्योर्विशतः समं प्रजाः ।**
**तं धावमानमनुधावन्त्यनीशा यथा रजांस्यनिलं भूतसङ्घाः ॥ ५० ॥**

**प्रकाशिका** – एवं कुर्वतोऽपि न वैषम्यादिदोषप्रसक्तिः कर्मसापेक्षत्वादित्याह ॥ न वा इति । परस्य पालकस्य स्वपक्षो योग्यताद्यतिरेकेण पक्षपातविषयः । मृत्योर्मारकस्य विपक्षो योग्य-ताद्यतिरेकेण दण्ड्यः । वै श्रुत्यादिप्रसिद्धमेतत् । कुत इत्यतोऽस्य हेतुगर्भविशेषणमाह ॥ विशत इति । प्रजा जनान्समं यथा भवति तथा । पुण्यपापाद्यनुसारेणेति यावत् । विशतः प्रवेशतः । प्रेरयत इति यावत् । मृत्योः परस्य विलक्षणस्य । नन्वेवं स्वातन्त्र्यभङ्ग इत्यत आह ॥ तं धावमानमिति । स्वातन्त्र्येण प्रवर्तमानं भगवन्तमनीशाः कर्माद्यधीना भूतसङ्घा अनुधावंत्यनुसृत्य प्रवर्तन्ते । अत्र दृष्टान्तमाह ॥ यथेति । अनिलं धावन्तमनु यथा रजांसि तथैवेत्यर्थः । तथा चानादिकर्मबद्धानां जीवानां तत्कर्मणां च तदधीनत्वान्न तस्य स्वातन्त्र्यभङ्ग इत्याशयः ॥ ५० ॥

**आयुषोऽपचयं जन्तोस्तथैवोपचयं विभुः ।**
**उभाभ्यां रहितः स्वस्थो दुःस्थस्य विदधात्यसौ ॥ ५१ ॥**

**प्रकाशिका –** नन्वेवं पुनर्वैषम्याद्यापत्तिरित्यत एतादृशवैषम्यादिकं तस्य स्वभाव एवेत्याशयेनाह ॥ आयुष इति । ऐश्वर्यदेरप्युपलक्षमेतत् । उपचयं वृद्धिम् । दुःस्थस्य स्वाधीनपुण्यपापबद्धस्य जन्तोः अपचयं ह्रासम् । स्वस्थः पुण्यपापबद्धोऽत एवोभाभ्यामायुराद्युपचयापचयाभ्यां रहितः । अनेन तस्य स्वातन्त्र्यमुपपादितमिति ज्ञातव्यम् । एतादृशस्वभाव एवासाविति भावः ॥ ५१ ॥

**केचित् कर्म वदन्त्येनं स्वभावमपरे नृप ।**
**एके काले परे दैवं पुंसः काममुतापरे ॥ ५२ ॥**

**प्रकाशिका –** ननु कालकर्मादिकमपि वेदेषु जगत्कारणतया तत्र तत्रोच्यतेऽतस्तद्विरोध इत्यतस्ते कालकर्मादिशब्दा एतमेव वेदद्रष्टारं वदंत्यतो न कोऽपि विरोध इत्याशयेनाह ॥ केचिदिति । केचिद्वेदद्रष्टारः । एवमपरे पर इत्यत्रापि वेदद्रष्टार एव विवक्षिताः । तथा च ये ये वेदद्रष्टारः कर्मस्वभावादिकं सर्वकारणतया वदन्ति ते कर्मादिशब्दैः कर्माद्यन्तःस्थितं हरिमेव प्रतिपादयंत्यतो न कोऽपि विरोध इत्यर्थः । कर्म सर्वकारणतयोच्यमानकर्मशब्दवाच्यमेवमेव वदन्ति । एवं स्वभावमित्यादावपि तथाविधस्वभावादिशब्दवाच्यमेनं वदन्तीति व्याख्येयम् । कामं तथाविधकामशब्दवाच्यं श्रूयते हि कामोऽकार्षीत्कामः करोति वा । पुंसोऽधिकारिणः प्रवदन्तीत्यन्वयः ॥ ५२ ॥

**अव्यक्तस्याप्रमेयस्य नानाशक्त्युदयस्य च ।**
**न वै चिकीर्षितं तात को वेदाद्धाऽस्य सम्भवम् ॥ ५३ ॥**

**प्रकाशिका –** नन्वीश्वरो जगत्कारणेषु कर्मकालादिषु तत्तच्छक्त्युद्बोधकतया तत्तच्छब्द-वाच्यवान्किमर्थं भवतीत्यपेक्षायामाह ॥ अव्यक्तस्येति । कर्तरि षष्ठी अप्रमेयस्य रमयाऽपि साकल्येन ज्ञातुमशक्यस्येत्यर्थः । नानाशक्तीनां कर्मादिनिष्ठानामुदयो यस्मात्तस्यास्य नानारूप-धारकस्य । संभवं घटकम् । चिकीर्षितं कर्तुमिष्ठम् । को ब्रह्मा सम्यक् न वेद । वयं न विद्म इति किं वाच्यमित्याशयः ॥ ५३ ॥

**नैवैते पुत्रक भ्रातुर्हन्तारो धनदानुगाः ।**
**विसर्गादानयोस्तात पुंसो दैवं हि कारणम् ॥ ५४ ॥**

**प्रकाशिका** – एवमुपपादितस्य हरिस्वातन्त्र्यस्य प्रकृतोपयोगमाह ॥ नैवैत इति । कुतः । उक्तमेव हेतुमनुवदति ॥ विसर्गेति । विसर्गः सृष्टिरादानं संहारो हि यस्माद्देवं भगवान् ॥ ५४ ॥

**स एव विश्वं सृजति स एवावति हन्ति च ।**
**अथापि ह्यनहंकारान्नाज्यते गुणकर्मभिः ॥ ५५ ॥**

**प्रकाशिका** – एवं तेऽपि हन्तारः किं न स्युरित्याशङ्कां पराकुर्वंस्तस्य न लेप इत्याह ॥ स एवेति । गुणैः सत्त्वादिभिः कर्मभिः पुण्यपापैर्नाज्यते न संबद्ध्यते ॥ ५५ ॥

**एष भूतानि भूतात्मा भूतेशो भूतभावनः ।**
**स्वशक्त्या मायया युक्तः सृजत्यत्ति च पाति च ॥ ५६ ॥**

**प्रकाशिका** – नन्वेवं प्रकृत्यादीनां कारणताप्रतिपादकश्रुत्यादिविरोध इत्यत आह ॥ एष इति। स्वस्य शक्तिर्नियामिका यस्याः सा तथा तया मायया चेतनाचेतनरूपया प्रकृत्या । कालकर्मादिरप्युपलक्षणमेतत् । अनेन प्रकृत्यादेरस्वातन्त्र्यकारणत्वम् । स एवेत्यवधारणं तु स्वतन्त्र-कारणान्तरनिषेधाभिप्रायेण । अतो न कोऽपि विरोध इत्युक्तं भवति । यतो भूतात्मा भूतानामादानादिकर्ताऽतः सृजति । सर्जनाभावे तदादानाद्यनुपपत्तेः । यतो भूतानामीशो रुद्रोऽतोऽत्ति । यतो भूतात्मा भूतानामादानादिकर्ताऽतः सृजति । सर्जनाभावेतदादानाद्यनु-पपत्तेः। यतो भूतानामीशो रुद्रोऽत्तोऽत्ति । यतो भूतानि भावयति वर्धयतीति भूतभावनोऽतः पातीति योज्यम् ॥ ५६ ॥

**तमेव मृत्युममृतं तात दैवं सर्वात्मनोपैहि जगत्परायणम् ।**
**यस्मै बलिं विश्वसृजो हरन्ति गावो यथा वै नसि दामयन्त्रिताः ॥ ५७ ॥**

**प्रकाशिका** – उपसंहरति ॥ तमेवेति । तस्मादिति शेषः । मृत्युं मारकममृतं मरणरहितम् । नसि नासिकायां यन्त्रिताः । यन्त्र बन्धन इति धातुः । दाम्ना बद्धाः ॥ ५७ ॥

**यः पञ्चवर्षो जननीं त्वं विहाय मातुः सपत्न्या वचसा भिन्नवर्मा ।**
**वनं गतस्तपसा प्रत्यगक्षमाराध्य लेभे मूर्ध्नि पदं त्रिलोक्याः ॥ ५८ ॥**

**प्रकाशिका** – एतादृशस्य हरेराधनं तव न दुर्घटमित्याशयेनाह ॥ यः पञ्चवर्ष इति । यः पञ्चवर्षः स त्वं यमाराध्य त्रिलोक्या मूर्ध्नि विद्यमानं पदं स्थानं लेभे लब्धवानसि । तमेवेदानी-मन्विष्येत्युत्तरेणान्वयः । प्रति प्रतिगतमक्षमिन्द्रियं यस्य स तथा तम् ॥ ५८ ॥

**तमेवमङ्गात्मनि मुक्तविग्रहैर्व्यपाश्रितं निर्गुणमेकमक्षरम् ।**
**आत्मानमन्विष्य विमुक्तमात्मदृग् यस्मिन्निदं भिन्नमसत् प्रतीयते ॥ ५९ ॥**

**प्रकाशिका** – हरिभक्तस्य तव नैवंविधभूतद्रोहो युक्त इत्याशयेनाह ॥ तमेवेति । आत्मनि मनसि मुक्तविग्रहैः परित्यक्तविरोधैर्योगिभिर्व्यपाश्रितं निषेवितम् । अनेन भूतविग्रहोऽस्य प्रियो न भवतीति सूचयति । निर्गुणं सत्त्वादिगुणकृतविकारशून्यम् । एकं सर्वोत्तममक्षरं देहनाशशून्य-मात्मानं परमात्मानमन्विच्छ । आराधयितुमिति शेषः । विमुक्तं विशिष्टा मुक्तिर्यस्मात्तमात्मदृक् सन् पुनः परमात्मापरोक्षज्ञानी भूत्वेत्यर्थः । भिन्नं पञ्चविधभेदोपेतमिदं विश्वं यस्मिन्यदाश्रितं वर्ततेऽत एवासदस्वतन्त्रं प्रतीयते ॥ ५९ ॥

**त्वं प्रत्यगात्मनि सदा भगवत्यनन्त**
**आनन्दमात्र उपपन्नसमस्तशक्तौ ।**
**भक्तिं विधाय परमां शनकैरविद्या-**
**ग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढाम् ॥ ६० ॥**

**प्रकाशिका** – नन्वेतादृशभूतद्रोहकारणाहङ्कारजनकाविद्याग्रंथिछेदो मम कथं भविष्यतीत्य-पेक्षायामाह ॥ त्वमिति । प्रत्यगात्मन्यन्तःस्थिते परमात्मनि । लोकदृष्ट्या विरुद्धा अप्यत्रो-पपन्नाः समस्ताः शक्तयो यस्मिन् । परमामितोऽप्यधिकाम् । ममाहमिति बुद्धिजननेन प्ररूढा-मुन्मूलयितुमशक्याम् ॥ ६० ॥

**संयच्छ रोषं भद्रं ते प्रतीपं श्रेयसां परम् ।**
**श्रुतेन भूयसा राजन्नगदेन यथाऽऽमयम् ॥ ६१ ॥**

**प्रकाशिका** – तत्रेदं प्रथमसाधनमित्याशयेनाह ॥ संयच्छेति । प्रतीपं प्रतिकूलमगदेनौषधेनायं रोगं यथा नियच्छति तथा ॥ ६१ ॥

**येनोपसृष्टात् पुरुषाल्लोक उद्विजते भृशम् ।**
**न बुधस्तद्वशं गच्छेदिच्छन्नभयमात्मनः ॥ ६२ ॥**

**प्रकाशिका** – कुतो रोषसंयमनं मया कार्यमित्यतोऽत्र सामान्यन्यायमाह ॥ येनेति । येन यदर्थेनोपसृष्टाद्बंधात् हरिभक्तद्रोहकत्वाच्च लोको ज्ञानिजनः । लुक् प्रकाश इति धातोः ॥ ६२ ॥

**हेलनं गिरिशभ्रातुर्धनदस्य त्वया कृतम् ।**
**यज्जघ्निवान् पुण्यजनान् भ्रातृघ्नानित्यमर्षितः ॥ ६३ ॥**

**प्रकाशिका** – न यक्षवधस्तव किन्तु कुबेरस्य हेलनं कृतमित्याह ॥ हेलनमिति । हेलनमवज्ञा । गिरिशस्य रुद्रस्य भ्रातेव भ्राता सखा तस्य धनदस्य कुबेरस्य ॥ ६३ ॥

**तं प्रसादय वत्साशु सन्नत्या प्रश्रयोक्तिभिः ।**
**न यावन्महतां तेजः कुलं नाभिभविष्यति ॥ ६४ ॥**

**प्रकाशिका** – तं कुबेरं संनत्या साष्टांगप्रणामेन ॥ ६४ ॥

**इत्युक्तस्तं प्रणम्याह भगवंस्तेऽनुशासनम् ।**
**आतिष्ठे भ्रातृमात्रोर्मे शोचतः क्षम्यतामिति ॥ ६५ ॥**

**मैत्रेय उवाच –**

**एवं स्वायंभुवः पौत्रमनुशास्य मनुः ध्रुवम् ।**
**तेनाभिवन्दितः साकमृषिभिः स्वपुरं ययौ ॥ ६६ ॥**

**प्रकाशिका** – भ्रातृमात्रोरिति तादर्थ्ये षष्ठी ॥ ६५,६६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे एकादशोऽध्यायः ।

## अथ द्वादशोऽध्यायः ।

मैत्रेय उवाच–

ध्रुवं निवृत्तं प्रतिबुध्य वैशसादपेतमन्युर्भगवान् धनेश्वरः ।
तत्रागतश्चारणयक्षकिन्नरैः संस्तूयमानोऽभ्यवदत् कृताञ्जलिम् ॥ १ ॥

धनद उवाच–

भो भो क्षत्रियदायाद परितुष्टोऽस्मि तेऽनघ ।
यस्त्वं पितामहादेशाद् वैरं दुस्त्यजमत्यजः ॥ २ ॥

प्रकाशिका – ॥ हरिः ॐ ॥ वैशसाद्युद्धात् । धनेश्वरः कुबेरः ॥ १,२ ॥

न भवानवधीद् यक्षान् न यक्षा भ्रातरं तव ।
काल एव हि भूतानां प्रभुरप्ययभावयोः ॥ ३ ॥

प्रकाशिका – अप्ययभावयोर्मरणजन्मनोः ॥ ३ ॥

अहं त्वमित्यपार्था धीरज्ञानात् पुरुषस्य हि ।
स्वाप्नीव भात्यनुध्यानाद् यथा बन्धविपर्ययः ॥ ४ ॥

**तात्पर्यम् – परमेश्वरं विनाऽहं त्वं कर्तेति भ्रान्तिः । 'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुरि'ति मोक्षधर्मे । विपर्ययो दुःखादिः सुखादिरूपस्य ॥ ४ ॥**

प्रकाशिका – कथं तर्ह्यहं कर्ता त्वं कर्तेत्यादिरूपा बुद्धिरित्यतः सा भ्रान्तिरित्याह ॥ अहं त्विति । अत्रेश्वराधीनकर्तृत्वस्य जीवेऽपि सत्वात्कथमपार्थेति भ्रान्तित्वमुच्यत इत्यतोऽभिप्रायमाह ॥ परमेश्वरमिति । परमेश्वरप्रेरणां विनेत्यर्थः । तथा च स्वातन्त्र्येण कर्तृत्वप्रतीतिर्भ्रम इत्याशयः । कुत एवमित्यतो जीवानामस्वतन्त्रकर्तृत्वे परमेश्वरे च स्वतन्त्रकर्तृत्वे च प्रमाणं पठति ॥ नाहमिति । स्वातन्त्र्येणेति शेषः । तुशब्दः स्वातन्त्र्यरूपविशेषार्थः । बन्धविपर्यय इति बन्धस्य मिथ्यात्वमुच्यत इति भाति । अतस्तस्याभिप्रायमाह ॥ विपर्यय इति । सुखज्ञानादिरूपस्य जीवस्य दुःखादिविपर्ययो विपरीतत्वम् । तथा दुःखादिरूपस्य जीवस्य दुर्जीवस्य सुखादिविपर्यय इत्यपि ग्राह्यम् । तथा च स्वाभाविको बन्ध इत्यनेनोच्यते न मिथ्यात्वमित्याशयः ॥ ततश्चायं श्लोकार्थः ॥ अहमेव कर्ता त्वमेव कर्तेति धीरपार्थाऽपगतविषया । भ्रम इति यावत् । पुरुषस्य

पुरुषदेहे विद्यमानस्य स्वतन्त्रकर्तुरज्ञानात् । हीति तत्र प्रमाणप्रसिद्धिं सूचयति । अनुध्याना-ज्जाग्रदवस्थानुभूतपदार्थसंस्कारपाटवात्स्वाप्नीव स्वाप्नपदार्थेषु जाग्रत्वबुद्धिरिवाभाति । नाहं कर्तेति प्रमाणादिति शेषः । यया स्वातन्त्र्येण कर्तृत्वभ्रान्त्याऽनुकूलप्रतिकूलयो रागद्वेषाख्यबन्धनेन विपर्ययः स्वस्वरूपापेक्षयाऽन्यद्दुःखादिरूपवैपरीत्यं भवतीत्यर्थः ॥ ४ ॥

**तद् गच्छ ध्रुव भद्रं ते भगवन्तमधोक्षजम् ।**
**सर्वभूतात्मभावेन सर्वभूतात्मविग्रहम् ॥ ५ ॥**

**प्रकाशिका** – सर्वभूतात्मभावेन सर्वभूतांतर्यामित्वेन सर्वभूतेष्वात्मनः स्वस्य विग्रह-श्चिदानन्दात्मकदेहो यस्य तम् । यद्वा । सर्वभूतात्मनि देहे विग्रहः प्रवेशत्वादिलक्षणो यस्य स तथा तम् ॥ ५ ॥

**भजस्व भजनीयाङ्घ्रिमभवाय भवच्छिदम् ।**
**युक्तं विरहितं शक्त्या गुणमय्याऽऽत्ममायया ॥ ६ ॥**

**तात्पर्यम् – आत्मसामर्थ्याख्यया शक्त्या युक्तम् । गुणमय्या विरहितम् ॥ ६ ॥**

**प्रकाशिका** – शक्त्या युक्तं विरहितमित्यत्र शक्तिशब्दार्थं वदन्व्याहतिपरिहारायान्वयं दर्शयति ॥ आत्मसामर्थ्याख्ययेति । गुणमय्या सत्त्वादिगुणात्मिकयाऽऽत्माधीनया मायया जडप्रकृत्या विरहितं तथाऽबद्धमात्मसामर्थ्याख्यया युक्तं भजस्वेति पूर्वेणान्वयः ॥ ६ ॥

**वृणीहि कामं नृप यन्मनोगतं मत्तस्त्वमौत्तानपदेऽविशङ्कितः ।**
**वरार्हणोऽस्यम्बुजनाभपादयोर्निरन्तरं त्वां वयमङ्ग शुश्रुम ॥ ७ ॥**

**तात्पर्यम् – निरन्तरं भगवत्पादमानसम् ॥ ७ ॥**

**प्रकाशिका** – अंबुजनाभपादयोर्निरन्तरमित्यस्य योग्यं तात्पर्यं दर्शयति ॥ निरन्तरं भगव-त्पादमानसमिति । तथा चांबुजनाभपादयोर्मनोऽव्यवधानरहितमिति व्याख्येयमिति भावः ॥७॥

**मैत्रेय उवाच–**

**स राजराजेन वराय चोदितो ध्रुवो महाभागवतो महामतिः ।**
**हरौ स वव्रेऽचलितां स्मृतिं यया तरत्ययत्नेन दुरत्ययं तमः ॥ ८ ॥**

**प्रकाशिका** – राजराजेन कुबेरेण ॥ ८ ॥

**तस्य प्रीतेन मनसा तां दत्वैलिबिलस्ततः ।**
**पश्यतोऽन्तर्दधे सोऽपि स्वपुरं प्रत्यपद्यत ॥ ९ ॥**

**प्रकाशिका** – ऐलिबिलि इलिबिलापुत्रः कुबेरः ॥ ९ ॥

**अथायजत यज्ञेशं क्रतुभिर्भूरिदक्षिणैः ।**
**द्रव्यक्रियादेवतानां कर्माकर्मफलप्रदम् ॥ १० ॥**

**तात्पर्यम् – द्रव्यक्रियादेवतानां विषयम् । अकर्मफलप्रदं मोक्षफलप्रदम् ॥ १० ॥**

**प्रकाशिका** – कर्माकर्मफलप्रदमित्यस्यैकपदताभ्रमवारणायान्वयं दर्शयन्व्याचष्टे ॥ द्रव्यक्रियेति। तथा च द्रव्यक्रियादेवतानां कर्माकर्मफलप्रदमिति वाक्यद्वयम् । आद्ये कर्मशब्दो विषयपर्याय इत्युक्तं भवति । तथा च द्रव्यत्यागरूपक्रियाणां कर्म विषयमुख्योद्देश्यमित्यर्थः । द्वितीये न विद्यते कर्म बन्धकं यस्मिन्नित्यकर्मशब्दो मोक्षपरः । तथा च तद्रूपफलप्रदमिति मूलार्थ इति भावः ॥ १० ॥

**सर्वात्मन्यच्युते सर्वे तीव्रौघां भक्तिमुद्वहन् ।**
**ददर्शात्मनि भूतेषु तमेवावस्थितं विभुम् ॥ ११ ॥**

**तमेव शीलसम्पन्नं ब्रह्मण्यं दीनवत्सलम् ।**
**गोप्तारं धर्मसेतूनां मेनिरे पितरं प्रजाः ॥ १२ ॥**

**तात्पर्यम् – 'विश्वः पूर्णस्तथा सर्वः समस्तश्चाभिधीयत' इत्यभिधानम् ॥ ११ ॥**

**प्रकाशिका** – सर्वात्मनि सर्वान्तर्यामिणि । सर्व इत्यस्य प्रकृतसङ्गतमर्थं प्रमाणेनैव दर्शयति ॥ विश्व इति । विश्वादिशब्दैः पूर्णत्वमभिधीयत इत्यर्थः । तथा च सर्वगुणपरिपूर्ण इति मूलार्थ इति भावः । तीव्रौघां निरन्तरप्रवाहरूपाम् । संज्ञात्वान्न सर्वनामकार्यम् । आत्मनि स्वस्मिन् भूतेषु चावस्थितम् ॥ ११,१२ ॥

**षट्त्रिंशद्वर्षसाहस्रं शशास क्षितिमण्डलम् ।**
**भोगैः पुण्यक्षयं कुर्वन्नभोगैरशुभक्षयम् ॥ १३ ॥**

**प्रकाशिका** – भोगैः सुखानुभवैः । प्रारब्धपुण्यक्षयमभोगैस्तद्विरुद्धदुःखानुभवैरशुभस्य प्रारब्धपापस्य क्षयम् ॥ १३ ॥

**एवं बहुसवं कालं महात्माऽविकलेन्द्रियः ।**
**त्रिवर्गौपयिकं नीत्वा पुत्रायादान्नृपासनम् ॥ १४ ॥**

**प्रकाशिका** – बहुसवं बहुतिथिम् । अविकलानीन्द्रियाणि यस्य सोऽविकलेन्द्रियः । कथंभूतं कालम् । त्रयाणां वर्गाणां धर्मार्थकामानामौपयिकमुपयुक्तम् । साधनमिति यावत् । यौवनावस्थापादकं कालं नीत्वेत्यर्थः ॥ १४ ॥

**मन्यमान इदं विश्वं मायारचितमात्मनि ।**
**अविद्यारचितस्वप्नगन्धर्वनगरोपमम् ॥ १५ ॥**

**तात्पर्यम् – 'अन्यथात्वात्क्षिप्रनाशाज्जगत्स्वप्नादिवत्स्मृतम् । वर्तमानं नियत्यैव सदैव परमात्मनी'ति वाराहे ॥ 'महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यत' इति स्कान्दे ॥ १५ ॥**

**प्रकाशिका** – स्वप्नगन्धर्वनगरोपममिति विश्वस्य स्वप्नादिसाम्योक्त्या मिथ्यात्वमुच्यत इति प्रतीयतेऽतः स्वप्नादिसाम्योक्तेरभिप्रायं प्रमाणेनैव दर्शयति ॥ अन्यथात्वादिति । विकारित्वादित्यर्थः । स्वप्नशब्देन तत्रापि जाग्रत्वमुच्यते । मूले गन्धर्वनगरसमकक्षतयोपादानात्तद्व्याख्यानरूपत्वाच्चास्य । आदिशब्देन गंधर्वनगरस्य ग्रहणम् । अवधारणार्थस्यैवशब्दद्वयस्यान्यथात्वादेव क्षिप्रविनाशादेवेति संबन्धः । न तु मिथ्यात्वादिति तदर्थः । कुत इत्यत उक्तम् ॥ वर्तमानमिति । यतः परमात्मनि तदाधारतया सदाऽनाद्यनन्तकाले नियत्या नियमेन सर्वकल्पेष्वेकप्रकारेणेश्वरेच्छयेति वा वर्तमानं प्रवर्तमानमत इत्यर्थः । अनेनात्मनि मायारचितमित्येतदुक्तार्थम्। यद्यपि स्वाप्नजाग्रत्वादेरत्यन्तासत्वेन न विकारित्वादिकं तथाऽपि विश्वस्य विकारित्वाद्युपेततया सदा सत्वाभावस्यालाभेन तेनैव स्वप्नादिसाम्यमत्राभिप्रेतं न विकारित्वादिनेत्यवगन्तव्यम् ।

ननु मूले विश्वस्य मायारचितत्वं स्वप्नादेश्चाविद्यारचितत्वमुच्यतेऽतो मिथ्यात्वेनैव स्वप्नादिसाम्यं वक्तव्यमित्यतोऽत्र मायाऽविद्याशब्दौ भगवदिच्छावाचकावित्यभिप्रेत्य प्रमाणं पठति ॥ महामायेति । मायाशब्दपर्यायो महामायाशब्दोऽतो नासङ्गतिरित्यवधेयम् ॥ ततश्चायं श्लोकार्थः ॥ आत्मनि परमात्मनि तदाधारतया मायारचितमीश्वरेच्छानिर्मितमिदं विश्वमविद्ययेश्वरेच्छया रचिते प्रदर्शिते स्वाप्नजाग्रत्वगन्धर्वनगरे सदा सत्वाभावे उपमाभूते यस्य तत्तथोक्तम् । मन्यमानो विशालां बदरीं प्रययावित्युत्तरेणान्वयः ॥ १५ ॥

**आत्मस्त्र्यपत्यसुहृदो बलमृद्धकोश-**
**मन्तःपुरं परिविहारभुवश्च रम्याः ।**
**भूमण्डलं जलधिमेखलमाकलय्य**
**कालोपसृष्टमिति स प्रययौ विशालाम् ॥ १६ ॥**

**प्रकाशिका** – आत्मा देहः । परिविहारभुवः परितो विद्यमानविहारभूप्रदेशान् । पूर्वं विश्वशब्देन गृहीतानामात्मादीनां पुनर्वचनं तेषां दुस्त्यजत्वज्ञापनाय । तथाऽपि दुस्त्यजमपि देहादिकमनित्यमिति ज्ञात्वा तत्राभिमानरहितः प्रययाविति भावः । कालेन कालनामकेन हरिणोपस्पृष्टं संहृतमनित्यमित्याकलय्य विचार्य विशालां बदरीं तत्रत्यां नदीं वा । विशाला बदरी प्रोक्ता नगरी निम्नगा तथेत्यभिधानात् ॥ १६ ॥

**तस्या विशुद्धकरणः शिववार्विगाह्य**
**बद्धासनो जितमरुन्मनसाऽऽहृताक्षः ।**
**स्थूले दधार भगवत्प्रतिरूप एतद्**
**ध्यायंस्तदव्यवहितो व्यसृजन् समाधौ ॥ १७ ॥**

**तात्पर्यम् – स्थूले पातालादिके । शिलावत्प्रतिमारूपे । 'शिलावत्प्रतिमैषा हि विष्णोर्लोक-चतुर्दशी'ति च ॥ १७ ॥**

**प्रकाशिका** – विशालां गतस्याष्टांगयोगानुष्ठानमाह ॥ तस्या इति । तस्या नद्याः भागीरथ्याः शिवं वाः उदकं विगाह्य प्रविश्येति स्नानादयो नियमा उक्ताः । विशुद्धकरण इति शमादयो यमा । बद्धासन इत्यादिनाऽऽसनादीनि स्फुटमेवोक्तानि । जितो वशीकृतो मरुत्प्राणो येन स तथोक्तः । विषयेभ्य मनसा सदाहृतान्यक्षाणि येन । स्थूले भगवत्प्रतिरूप इति पदद्वयस्य विवक्षितमर्थं दर्शयति ॥ स्थूल इति । पातालादिलोकानां शिलावद्विष्णुप्रतिमात्वे प्रमाणं पठति ॥ शिलावदिति । तथा च स्थूले पातालादिचतुर्दशभुवनात्मके भगवतः प्रतिमारूपे शिलावत्प्रति-मायामेतन्मनो दधारेति मूलार्थ इति भावः । अनेन धारणोक्तेति ज्ञातव्यम् । अनन्तरमेतत्स्व-बिंबरूपं ध्यायंस्तत्र स्थूलरूपे मनोधारणं व्यसृजत्पश्चात्समाधौ सत्यव्यवहितः परमाच्छादिकाया व्याघुट्टितत्वेन व्यवधानशून्य एवं हरिं पश्यंस्तच्छरीराभिमानादिकं व्यसृजत् । असंप्रज्ञातसमाधि-मानभूदित्यर्थः ॥ १७ ॥

भक्तिं हरौ भगवति प्रवहन्नजस्र-
मानन्दबाष्पकलया मुहुरर्द्यमानः ।
विक्लिद्यमानहृदयः पुलकाचिताङ्गो
नात्मानमस्मरदसाविति मुक्तलिङ्गः ॥ १८ ॥

प्रकाशिका – एतदेव विशदयति ॥ भक्तिमिति । विक्लिद्यमानहृदयो द्रवद्धृदयः । अहमसौ ध्रुव इत्यात्मानं नास्मरत् । यतो मुक्तलिङ्गो विश्लथितलिंगशरीरः ॥ १८ ॥

स ददर्श विमानाग्र्यं नभसोऽवतरद् भुवः ।
विभ्राजयद् दश दिशो राकापतिमिवोदितम् ॥ १९ ॥
तत्रानुदेवप्रवरौ चतुर्भुजौ श्यामौ किशोरावरुणाम्बुजेक्षणौ ।
स्थिताववष्टभ्य गदां सुवाससौ किरीटहाराङ्गदचारुकुण्डलौ ॥ २० ॥

प्रकाशिका – राकापतिं पूर्णचन्द्रम् ॥ १९,२० ॥

विज्ञाय तावुत्तमभावकिङ्करावभ्युत्थितः साध्वससन्नविक्रमः ।
ननाम नामानि गृणन् मधुद्विषः पार्षत्प्रधानाविति संहताञ्जलिः ॥ २१ ॥
तं कृष्णपादाभिनिविष्टचेतसं बद्धाञ्जलिं प्रश्रयनम्रकन्धरम् ।
सुनन्दनन्दावुपलभ्य सम्मितं प्रीत्योचतुः पुष्करनाभसंमतौ ॥ २२ ॥

प्रकाशिका – उत्तमो भावो लीला क्रिया वा यस्य स उत्तमभावो हरिस्तस्य किंकरौ विज्ञायेत्यर्थः । साध्वसेन संभ्रमेण सन्नो नष्टो विक्रमः पूजासाधनप्रवृत्तिविशेषो यस्य स तथोक्तः । केवलं मधुद्विषो कृष्णस्य नामानि गृणन्मधुद्विषः पार्षदप्रधानाविति हेतोर्ननाम ॥ २१,२२ ॥

सुनन्दनन्दावूचतुः –

भो भो भद्र सुभद्रं ते वचो नोऽवहितः शृणु ।
यः पञ्चवर्षस्तपसा भवान् देवमतीतृपत् ॥ २३ ॥

प्रकाशिका – ते भद्रं मङ्गलमस्तु ॥ २३ ॥

तस्याखिलजगद्धातुर्विद्धि देवस्य शार्ङ्गिणः ।
पार्षदाविह सम्प्राप्तौ नेतुं त्वां भगवत्पदम् ॥ २४ ॥

**सुदुर्जयं विष्णुपदं जितं त्वया यत् सूरयोऽप्राप्य विचक्षते परम् ।**
**आतिष्ठ तच्चन्द्रदिवाकरादयो ग्रहर्क्षतारा: परियन्ति दक्षिणम् ॥ २५ ॥**
**अनास्थितं ते पितृभिरन्यैरप्यङ्ग कर्हिचित् ।**
**आतिष्ठ जगतां वन्द्यं तद् विष्णोः परमं पदम् ॥ २६ ॥**

**तात्पर्यम् – 'शिंशुमारो ध्रुवश्चैव संस्थितौ यत्पुरे सदा । तत्पश्यन्ति न यान्त्यन्ये लोकं यान्ति सुरान्विने'ति च ॥ २५,२६ ॥**

**प्रकाशिका** – विष्णुपदं शिंशुमाराधिष्ठितं स्थानं जितं साधितम् । तत्पदं सूरय उत्क्रान्ता ज्ञानिनोऽप्राप्य परं केवलं दूरादेव विचक्षते पश्यन्ति । यच्चन्द्रदिवाकरादयो ग्रहा ऋक्षाण्यश्विन्यादयस्तारा अपरे नक्षत्राणि दक्षिणं प्रदक्षिणं यथा तथा परियन्ति तदधिष्ठिता भवन्ति । अत्रोत्क्रान्तानां ज्ञानिनां शिंशुमारध्रुवयोः स्थानप्राप्तिर्नास्तीति कथमुच्यते । प्रयाति चक्रं नृप शिंशुमारमिति सोमं वैश्वानरं चेन्द्रं ध्रुवमिति ध्रुवस्य च ज्ञानिप्राप्यतयोक्तत्वादतोऽत्र विवक्षितमभिप्रायं प्रमाणेनैव दर्शयति ॥ शिंशुमार इति । तत्पुरम् । उत्क्रान्ता ज्ञानिनो दूरादेव पश्यन्ति । सुरान्विना । अन्ये तत्र न यान्ति । सुरास्तु तदुभयाधिष्ठितं लोकं यान्तीत्यर्थः । तथा च शिंशुमारस्वामिकं ध्रुवस्वामिकं च लोकं सर्वेऽपि ज्ञानिनो यान्ति । अतस्तदभिप्रायकं प्रयान्ति चक्रं नृप शिंशुमारमित्यादिवचनम् । शिंशुमारलोकान्तर्गतं यत्सदोभयावासस्थानं पुरं तद्देवान्विनाऽन्ये ज्ञानिनो न यान्ति । किन्तु दूरादेव पश्यन्तीत्यत्राभिप्रेतम् । अतो न कोऽपि विरोध इत्याशयः ॥ २५,२६ ॥

**एतद् विमानप्रवरमुत्तमश्लोकमौलिना ।**
**उपस्थापितमायुष्मन्नधिरोढुं त्वमर्हसि ॥ २७ ॥**

**प्रकाशिका** – उत्तमश्लोका ब्रह्मादयस्तेषां मौलिना श्रेष्ठेन शिंशुमारेण हरिणा ॥ २७ ॥

**मैत्रेय उवाच –**

**निशम्य वैकुण्ठनियोज्यमुख्ययोर्मधुच्युतां वाचमुरुक्रमप्रियः ।**
**कृताभिषेकः कृतनित्यमङ्गलो मुनीन् प्रणम्याशिषमभ्यवादयत् ॥ २८ ॥**

**प्रकाशिका** – वैकुण्ठस्य हरेर्नियोज्यभृत्यास्तेषु मुख्यौ तयोर्मधुच्युतं निःसृतं यस्यां ताममृतस्राविणीमित्यर्थः । कृतं नित्यं मङ्गलं नित्यकर्माख्यं मङ्गलं शुभकर्म येन स तथोक्तः । अभ्यवादयदभिवादयामास वाचा पूजयामास ॥ २८ ॥

**परीत्याभ्यर्च्य धिष्ण्याग्र्यं पार्षदावाभिवन्द्य च ।**
**इयेष तदधिष्ठातुं बिभ्रद् रूपं हिरण्मयम् ॥ २९ ॥**

**प्रकाशिका** – यदा परीत्य प्रदक्षिणीकृत्य धिष्ण्याग्र्यं विमानश्रेष्ठम् ॥ २९ ॥

**तदा दुन्दुभयो नेदुर्मृदङ्गपणवादयः ।**
**गन्धर्वमुख्याः प्रजगुः पेतुः कुसुमवृष्टयः ॥ ३० ॥**

**प्रकाशिका** – यदा धिष्ण्याग्र्यं विमानमधिष्ठातुं येष तदा दुंदुभयो इनेदुः ॥ ३० ॥

**स च स्वर्लोकमारोक्ष्यन् सुनीतिं जननीं ध्रुवः ।**
**अन्वस्मरदहं हित्वा नैनां यास्ये त्रिविष्टपम् ॥ ३१ ॥**
**इति व्यवसितं तस्य व्यवसीय सुरोत्तमौ ।**
**दर्शयामासतुर्देवीं देवयानेन चाग्रगाम् ॥ ३२ ॥**
**तत्र तत्र प्रशंसद्भिः पथि वैमानिकैः सुरैः ।**
**अवकीर्यमाणो ददृशे कुसुमैः क्रमशो ग्रहान् ॥ ३३ ॥**

**प्रकाशिका** – व्यवसीय ज्ञात्वा ॥ ३१,३२,३३ ॥

**त्रिलोकीं देवयानेन सोऽतिव्रज्य मुनीनपि ।**
**पुरस्ताद् यद् ध्रुवगतिं विष्णोः पदमथाभ्यगात् ॥ ३४ ॥**

**प्रकाशिका** – मुनीन्सप्तर्षीन् । अतः परस्ताद्यद्विष्णोः शिंशुमारस्य पदं तदभ्यगात् । ध्रुवा निश्चला गतिर्यस्य स तथोक्तः ॥ ३४ ॥

**यद् भ्राजमानं स्वरुचैव सर्वतो**
**लोकास्त्रयो ह्यनुविभ्राजन्त एते ।**
**न ते खला जन्तुषु ये त्वनुग्रहाद्**
**व्रजन्ति भद्राणि चरन्ति येऽनिशम् ॥ ३५ ॥**

**प्रकाशिका** – यद्भ्राजमानमनु यस्य रुचा लोका विभ्राजन्ते । जन्तुषु ये खलास्ते यन्न व्रजन्ति । ये तु जन्तुष्वनुग्रहाद्दयालक्षणादीश्वरानुग्रहादिति वाऽनिशं भद्राणि चरन्ति ते तद् व्रजन्ति ॥ ३५ ॥

**शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः ।**
**यान्त्यञ्जसाऽच्युतपदमच्युतप्रियबान्धवाः ॥ ३६ ॥**

**इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः ।**
**अभूत् त्रयाणां लोकानां चूडामणिरिवामलः ॥ ३७ ॥**

**प्रकाशिका** – एतदेव विशदयति ॥ शान्ता इति । येऽनिशं शान्त्यादिगुणयुक्तास्तेऽच्युतपदं यान्तीत्यन्वयः । अच्युतपदं ध्रुवलोकम् । अच्युतप्रिया बांधवा येषाम् ॥ ३६,३७ ॥

**गम्भीरवेगानिमिषां ज्योतिषां चक्रमर्पितम् ।**
**यस्मिन् भ्रमति कौरव्य मेढ्यामिव गवां गणः ॥ ३८ ॥**

**प्रकाशिका** – यस्मिन्ध्रुवस्थाने ज्योतिषामादित्यादीनां चक्रमाहितं सम्यग्बद्धं सद्भ्रमति । कथं भूतानां ज्योतिषाम् । गंभीरवेगानिमिषां गंभीरो वेगो येषां तानि गंभीरवेगानि न मिषन्ति न मीलन्तीत्यनिर्मीषि । गंभीरवेगानि च तानि अनिर्मीषि च तेषां गंभीरवेगवतामनस्तं गच्छतामित्यर्थः । मेढ्या बन्धः परितो यथा गवां गणो भ्रमति तथैवेत्यर्थः ॥ ३८ ॥

**महिमानं विलोक्यास्य नारदो भगवान् ऋषिः ।**
**आतोद्यं वितुदन् श्लोकान् सत्रेऽगायत् प्रचेतसाम् ॥ ३९ ॥**

**प्रकाशिका** – आतोद्यं वीणां वितुदन् वादयन् ॥ ३९ ॥

**नारद उवाच–**

**नूनं सुनीतेः पतिदेवतायास्तपः प्रभावस्य सुतस्य तां गतिम् ।**
**दृष्ट्वाऽभ्युपायानपि वेदवादिनो नैवाधिगन्तुं प्रभवन्ति किं नृपाः ॥ ४० ॥**

**प्रकाशिका** – पतिरेव देवता यस्याः सा तस्याः सुतस्य यस्तपः प्रभावो माहात्म्यं तस्य तां गतिम् । तत्फलमधिगन्तुमुपायान्मोक्षसाधनधर्मान्दृष्ट्वाऽपि वेदवादिनो ऋषयो नैव प्रभवन्ति किं पुनर्नृपाः । दृष्टाऽभ्युपाया इति पाठे दृष्टा अभ्युपाया मोक्षहेतवो यैस्त इति व्याख्येयम् ॥ ४० ॥

**यः पञ्चवर्षो गुरुदारवाक्शरैर्भिन्नेन यातो हृदयेन दूयता ।**
**वनं ममादेशकरोऽजितं प्रभुं जिगाय तद्भक्तिगुणैः पराजितम् ॥ ४१ ॥**

**प्रकाशिका** – तपःप्रभावगतिं विशिनष्टि ॥ यः पञ्चवर्ष इति द्वाभ्याम् । गुरुदाराः पितृपत्नी सुरुचिः । अजितमपि यो जिगाय वशीकृतवान् ॥ ४१ ॥

**यः क्षत्रबन्धुर्भुवि तस्याधिरूढमन्वारुरुक्षेदपि वर्षपूगैः ।**
**यः पञ्चवर्षो यदहोभिरल्पैः प्रसाद्य वैकुण्ठमवाप तत्पदम् ॥ ४२ ॥**

**प्रकाशिका** – यः पञ्च वर्षाणि यस्य सोऽल्पैरेवाहोभिर्वैकुण्ठं प्रसाद्य यत्तस्य पदमवाप तत्पदं तस्य अधिरूढं कः क्षत्रबन्धुः क्षत्रियो वर्षपूगैरप्यन्वारुरुक्षेदारोढुमिच्छेन्न कोऽपि । तदिच्छाऽप्यशक्ता दूरस्तदारोहणमिति भावः ॥ ४२ ॥

**मैत्रेय उवाच –**

**एतत् तेऽभिहितं सर्वं यत् पृष्टोऽहमिह त्वया ।**
**ध्रुवस्योद्दामयशसश्चरितं संमतं सताम् ॥ ४३ ॥**

**प्रकाशिका** – उद्दाम उत्कृष्टं यशो यस्य ॥ ४३ ॥

**धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत् ।**
**स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ४४ ॥**

**प्रकाशिका** – धन्यमित्यादि धनादेर्निमित्तम् । ध्रौव्यं ध्रुवस्य मोक्षसाधनम् । सौमनस्यं सुमनःप्रदं प्रशस्यं प्रशंसार्हमघमर्षणं पापनाशनम् ॥ ४४ ॥

**श्रुत्वैतच्छ्रद्धयाऽभीक्ष्णमच्युतप्रियचेष्टितम् ।**
**भवेद् भक्तिर्भगवति यया स्यात् क्लेशसंक्षयः ॥ ४५ ॥**

**प्रकाशिका** – श्रुत्वा यो वर्तते तस्य । भक्तिर्भवेत् ॥ ४५ ॥

**महत्त्वमिच्छतां तीर्थं श्रोतुः शीलादयो गुणाः ।**
**यत्र तेजस्तदिच्छूनां मानो यत्र मनस्विनाम् ॥ ४६ ॥**

**प्रकाशिका** – तीर्थं महत्वावाप्तिस्थानं यत्र यस्मिन्नभ्यस्यमाने सति भवन्ति ॥ ४६ ॥

**प्रयतः कीर्तयेत् प्रातः समवाये द्विजन्मनाम् ।**
**सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत् ॥ ४७ ॥**

**पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथ वा ।**
**दिनक्षये व्यतीपाते संक्रमेऽर्कदिनेऽपि वा ॥ ४८ ॥**

**प्रकाशिका** – समवाये समूहे ॥ ४७,४८ ॥

**श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः ।**
**नेच्छंस्तत्राऽत्मनाऽऽत्मानं संतुष्ट इति सिध्यति ॥ ४९ ॥**

**तात्पर्यम् – मनसा परमात्मानं प्रति सन्तुष्टः ॥ ४९ ॥**

**प्रकाशिका** – नेच्छन्निष्कामः । कथं तर्हि फलप्राप्तिरित्यत आह ॥ तत्रेति । अत्रात्मनात्मानमिति पदद्वयस्य विवक्षितमर्थं वदन् अन्वयं दर्शयति ॥ मनसेति । तथा च तृतीयान्तमात्मपदं मनोवाचि द्वितीयान्तं परमात्मवाचि प्रतीति योग्यतया लभ्यत इति भावः । ततश्च तत्र ध्रुवचरिते श्राव्यमाणे आत्मना मनसाऽऽत्मानं परमात्मानं प्रति सन्तुष्टो भवतीति हेतोः सिद्ध्यति । प्राप्ताभीष्टफलो भवतीति भावः ॥ ४९ ॥

**ज्ञानमज्ञाततत्त्वाय यो दद्यात् सत्पथामृतम् ।**
**कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णते ॥ ५० ॥**

**प्रकाशिका** – ध्रुवचरितश्रवणव्याजेन भागवतज्ञानमुपदिशतो न केवलं भगवानेवानुग्रहं करोति किन्तु देवा अपीत्याह ॥ ज्ञानमिति । ज्ञानमुक्तरूपम् । कथं भूतं ज्ञानं सत्पथे मोक्षमार्गे अमृतमिवामृतम् ॥ ५० ॥

**इदं मया तेऽभिहितं कुरूद्वह ध्रुवस्य विख्यातविशुद्धकर्मणः ।**
**हित्वाऽर्भकः क्रीडनकानि मातुर्गृहं च विष्णुं शरणं यो जगाम ॥**

**प्रकाशिका** – मातुर्गृहं च हित्वा ॥ ५१ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः ।

श्रीशुक उवाच–

निशम्य कोषारविणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणम् ।
प्ररूढभावो भगवत्यधोक्षजे प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ॥ १ ॥

**प्रकाशिका** – ॥ हरिः ॐ ॥ प्ररूढो भावो भक्तिर्यस्य ॥ १ ॥

विदुर उवाच–

के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत ।
कस्यान्ववाये प्रख्याताः कुत्र वा सत्रमासत ॥ २ ॥

**प्रकाशिका** – सत्रेऽगायत्प्रचेतसामित्युक्तिः पश्नबीजम् । अन्ववाये वंशे ॥ २ ॥

मन्ये महाभागवतं नारदं देवदर्शनम् ।
येन प्रोक्तः क्रियायोगः परिचर्याविधिर्हरेः ॥ ३ ॥

**प्रकाशिका** – नारदेन प्रचेतसां सत्रे वर्णिताः कथाः प्रष्टुं तन्महिमानमाह ॥ मन्य इति । देवस्य दर्शनं यस्य हरेः परिचर्याया विधिः प्रकारो यस्मिन्सः क्रियायोगः क्रियालक्षणो मोक्षोपायो येन नारदेन पञ्चरात्रादिग्रन्थे प्रोक्त इत्यर्थः ॥ ३ ॥

स्वधर्मशीलैः पुरुषैर्भगवान् पुरुषोत्तमः ।
इज्यमानो भक्तिमता नारदेनेरितः किल ॥ ४ ॥

**प्रकाशिका** – स्वधर्मशीलैः पुरुषैः प्रचेतोभिरिज्यमानः पूज्यमानो नारदेनेरितः प्रतिपादितः किल । प्रचेतसोऽयं हरिमुद्दिश्य त्यागं कृतवतस्तत्स्वरूपं तान्प्रति नारदेन कथितमिति ग्रन्थान्तरे श्रूयत इत्यर्थः ॥ ४ ॥

यास्ता देवर्षिणा तत्र वर्णिता भगवत्कथाः ।
मह्यं शुश्रूषवे ब्रह्मन् कात्स्न्र्येनाचष्टुमर्हसि ॥ ५ ॥

**प्रकाशिका** – अतो याः कथास्तत्र देवर्षिणा वर्णितास्ताः कथा मह्यमाचष्टुं वक्तुमर्हसि ॥ ५ ॥

**मैत्रेय उवाच–**

**ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम् ।**
**सार्वभौमश्रियं नैच्छदधिराजासनं पितुः ॥ ६ ॥**

**प्रकाशिका –** ध्रुवस्य वंशे जात इति वक्तुं तावद्ध्रुवस्य वंशपरंपरामाह ॥ ध्रुवस्येत्यादिना । अधिराजासनं राजासनमधिकृत्य वर्तमानं सार्वभौमश्रियं नैच्छदित्यन्वयः ॥ ६ ॥

**स जन्मनोपशान्तात्मा निःसङ्गः समदर्शनः ।**
**ददर्श लोके विततमात्मानं लोकमात्मनि ॥ ७ ॥**

**प्रकाशिका –** कुतो नैच्छदित्यतोऽत्र हेतुमाह ॥ स इति चतुर्भिः । जन्मना जन्ममारभ्य ॥

समदर्शन इत्युक्तमेव विवृणोति ॥ ददर्शेति । तथा च सर्वत्र हरिं समं पश्यतीति समदर्शन इत्युक्तं भवति । समं तत्तद्योग्यतामनतिक्रम्य पश्यतीति वा समदर्शनः ॥ ७ ॥

**आत्मानं ब्रह्म निर्वाणं प्रत्यस्तमितविग्रहम् ।**
**अवबोधरसैकात्म्यमानन्दमनुसन्ततम् ॥ ८ ॥**

**प्रकाशिका –** पुनः कथंभूतमात्मानम् । जीवराशिं प्रत्यस्तमितोऽदर्शनं प्राप्तो विग्रहो यस्य । जीवप्रयत्नेनाव्यक्तदेहमिति यावत् । नन्वेवमशरीरत्वप्रतिपादकश्रुतिविरोध इत्यत उक्तम् ॥ निर्वाणमिति । प्राकृतशरीरशून्यमित्यर्थः । नन्वेवं कथं तस्य जीवाभेदोक्तिरित्यत उक्तम् ॥ ब्रह्मेति । गुणपूर्णमित्यर्थः । तथा चाभेदश्रुतयोऽपि भेदपरतयैव योज्या इति भावः । ननु प्राक्रतविग्रहाभावे कीदृशो भगवद्विग्रह इत्यपेक्षायां विग्रहस्वरूपं दर्शयन् लोके विततिः किं देहेनोतादेहेनेत्यपेक्षायामाह ॥ अवबोधरसैकात्म्यमिति । अवबोधरसेन श्रेष्ठज्ञानात्मकेन हरिणैकात्म्यमेकस्वरूपत्वं यस्य देहस्य स तथा । श्रेष्ठज्ञानात्मकहर्यभिन्नत्वात्तद्देहोऽपि ज्ञानात्मक इत्याशयः । आनन्दमानन्दरूपं च देहमन्वनुसृत्य सम्यक् ततं ज्ञानानन्दरूपदेहेनैव व्याप्तमित्यर्थः । ददर्शेति पूर्वेणान्वयः ॥ ८ ॥

**अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः ।**
**स्वरूपमवरुन्धानो नान्यदस्मात् तदैक्षत ॥ ९ ॥**

**तात्पर्यम् – स्वरूपं जीवस्य बिम्बरूपं परमात्मानम्। 'भिन्नस्वरूपमभिदं स्वरूपं तु द्विधा हरेः । भिन्नस्वरूपं ब्रह्माद्या मत्स्याद्यभिदमुच्यत' इति गारुडे ॥ ९ ॥**

**प्रकाशिका** – कथं भूतः अव्यवच्छिन्नो निरन्तरो योगो ध्यानं जनको यस्य स तथा । तल्लक्षणाग्निना दग्धाः कर्मानिष्टं काम्यं मलं पापं चाशयो जडान्तःकरणं च यस्य स तथा । स्वरूपशब्दस्य स्वस्वरूपमिति प्रतीतिवारणाय विवक्षितमर्थमाह ॥ स्वरूपमिति । अनेन स्वस्य रूपमिति षष्ठीतत्पुरुषः । रूपशब्दश्च बिंबपर इत्युक्तं भवति । स्वोत्तमानामपि बिंबत्वात्तद्व्यावृत्तये परमात्मानमित्युक्तम् । परमात्माभिन्नमित्यर्थः । अनेन स्वः स्वतन्त्रः परमात्मा तस्य रूपं तदात्मकमित्यपि स्वरूपशब्दव्याख्यानं सूचयति । सम्यङ् न रूपं किन्तु तदाविष्टमित्यपि व्याख्यानमित्यभिप्रेत्य तत्र प्रमाणं पठति ॥ भिन्नस्वरूपमिति । अभिदमभिन्नम् । तुशब्द इतीत्यर्थः । तथा च हरेः स्वरूपं हरिस्वरूपशब्दवाच्यं भिन्नस्वरूपं भिन्नमत एव सुखरूपमेक-मित्यर्थः । अभिदमभिन्नमपरमिति द्विधेत्यर्थः । ब्रह्माद्या जीवा हरेर्भिन्नस्वरूपं भिन्नत्वेऽपि हरिस्वरूपशब्दवाच्या इत्यर्थः । मत्स्यादीत्यत्रादिपदेन बिंबरूपमपि ग्राह्यमित्युच्यते स्वरूप-शब्देन । रूढ्येति शेषः । अनेन परमात्माभिन्नमित्येतदपि प्रमापितमिति ध्येयम् ॥ ततश्चायं मूलार्थः ॥ स्वः स्वतन्त्रः परमात्मा तस्य रूपं तदात्मकं यत्स्वस्य जीवस्य रूपं बिम्बं तत् । तथा सु अरूपं किन्तु तदाविष्टं ब्रह्मादिकं तदप्यवरुंधानः स्वज्ञानावृतं कुर्वाणः । पश्यन्निति यावत् । अस्मदुक्तरीत्या स्वरूपशब्दवाच्यादन्यत्स्वदेहादिकं नैक्षत ॥ ९ ॥

**जडान्धबधिरोन्मत्तमूकाकृतिरतन्मतिः ।**
**लक्षितः पथि बालानां प्रशान्तार्चिरिवानलः ॥ १० ॥**

**प्रकाशिका** – जडादीनामिवाकृतिर्यस्य । अतन्मतिर्न तेषामिव मतिर्यस्य । प्रशान्तान्यर्चींषि ज्वाला यस्यानलस्य तद्वत्स्थितः ॥ १० ॥

**मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः ।**
**वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम् ॥ ११ ॥**

**तात्पर्यम् – 'कल्पः कल्पाभिमानी सन् शिंशुमारानुगःस्थितः । वत्सरो राज्यमकरोत्पित्रा दत्तं महाबल' इति ब्राह्मे । 'चक्रे नारायणः साक्षात्किंस्तुघ्नः कल्पमात्मजमि'ति पाद्मे ॥ ११ ॥**

**प्रकाशिका** – यवीयांसं कनिष्ठम् । ननु ज्येष्ठभार्याजातस्य श्रेष्ठस्योत्कलस्य विरक्तत्वेन भूपतित्वाभावोऽपि भ्रमिसुतयोः कल्पवत्सरयोर्मध्येकल्पस्य ज्येष्ठत्वात्तं विहाय कथं कनिष्ठं वत्सरं भूपतिं चक्रुरित्याशङ्कायां प्रमाणेनैव तत्रोपपत्तिमाह ॥ कल्प इति । ननु ध्रुवसुतः कथं शिंशुमारानुगो जात इत्यत्रैवोपपत्तिं प्रमाणेनैवाह ॥ चक्र इति । किंस्तुघ्नः शिंशुमारः । तथा च

शिंशुमारो ध्रुवसुतं कल्पमात्मजं कृत्वा स्वनियम्यकालविशेषरूपकल्पाभिमानिनं विधाय स्वानुगं चक्र इत्याशयः ॥ ११ ॥

स्वर्वीथिर्वत्सरस्येष्टा भार्याऽसूत षडात्मजान् ।
पुष्पार्णं तिग्मकेतुं च इषमूर्जं वसुं जयम् ॥ १२ ॥

**प्रकाशिका** – इष्टा प्रिया भार्या ॥ १२ ॥

पुष्पार्णस्य प्रभा भार्या दोषा च द्वे बभूवतुः ।
प्रातर्मध्यन्दिनं सायमिति ह्यासन् प्रभासुताः ॥ १३ ॥
प्रदोषो निशिथो व्युष्ट इति दोषासुतास्त्रयः ।
व्युष्टः सुतं पुष्करिण्यां सर्वतेजसमादधे ॥ १४ ॥

**प्रकाशिका** – निशिथः निशीथः । एतास्त्रयः सुताः प्रायः तच्छब्दवाच्यास्तत्तद्धस्त्वभिमानिन इति ज्ञातव्याः ॥ १३,१४ ॥

स चक्षुः सुतमाकूत्यां पत्न्यां मनुमवाप ह ।
मनोरसूत महिषी वैराजा नड्वला सुतान् ॥ १५ ॥
पुरुकुत्सं त्रितं द्युम्नं सत्यव्रतमृतव्रतम् ।
अग्निष्टोममतीरात्रं सुद्युम्नं शिबिमुल्मुकम् ॥ १६ ॥
उल्मुकोऽजनयत् पुत्रान् पुष्करिण्यां षडुत्तमान् ।
अङ्गं सुनासमाख्यातिं क्रतुमाङ्गिरसं गयम् ॥ १७ ॥

**प्रकाशिका** – स सर्वतेजश्चक्षुसंज्ञं मनुं सुतमवाप । मनोर्महिषी नड्वला विरजान् शुद्धान् सुतान् असूत ॥ १५,१६,१७ ॥

सुनीथाऽङ्गस्य या पत्नी सुषुवे वेनमुल्बणम् ।
यद्दौःशील्यात् स राजर्षिर्निर्विण्णो निरगात् पुरात् ॥ १८ ॥

**प्रकाशिका** – उल्बणमसुरम् ॥ १८ ॥

यमङ्ग शेपुः कुपिता वाग्वज्रा मुनयः किल ।
गतासोस्तस्य भूयस्ते ममन्थुर्दक्षिणं करम् ॥ १९ ॥

**प्रकाशिका** – यं वेनम् । अङ्ग विदुर । वागेव वज्रं येषाम् । गतासोर्मृतस्य ॥ १९ ॥

**अराजके तदा लोके दस्युभिः पीडिताः प्रजाः ।**
**जातो नारायणांशेन पृथुः पृथुपराक्रमः ॥ २० ॥**

**प्रकाशिका** – मथनहेतुमाह ॥ अराजक इति । लोकेऽराजके जाते सति यदा प्रजा दस्युभिः पीडितास्तदा जात इत्यन्वयः ॥ २० ॥

**विदुर उवाच–**

**तस्य शीलनिधेः साधोर्ब्रह्मण्यस्य महात्मनः ।**
**राज्ञः कथमभूद् दुष्टा प्रजा यद्विमना ययौ ॥ २१ ॥**

**प्रकाशिका** – दुष्टप्रजा दुष्टपुत्रः । यद्विमना यस्याः प्रजाया हेतोर्विमनाः सन् ॥ २१ ॥

**किं चाहो वेनमुद्दिश्य ब्रह्मदण्डमयूयुजन् ।**
**दण्डव्रतधरे राज्ञि मुनयो धर्मकोविदाः ॥ २२ ॥**

**प्रकाशिका** – दंडव्रतं हिंसाख्यव्रतं धारयतीति दण्डव्रतधरस्तस्मिन् । अनेन सर्वशिक्षको न शापार्ह इति सूचयति ॥ २२ ॥

**नावध्येयः प्रजापालः प्रजाभिरघवानपि ।**
**यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा ॥ २३ ॥**
**एतदाख्याहि मे ब्रह्मन् सुनीथात्मजचेष्टितम् ।**
**श्रद्दधानाय भक्ताय त्वं परावरवित्तमः ॥ २४ ॥**

**मैत्रेय उवाच–**

**अङ्गोऽश्वमेधं राजर्षिराजहार महाक्रतुम् ।**
**नाजग्मुर्देवतास्तस्मिन्नाहूता ब्रह्मवादिभिः ॥ २५ ॥**

**प्रकाशिका** – नावध्येयो नावज्ञेयः । ओजः सामर्थ्यम् ॥ २३,२४,२५ ॥

**तमूचुर्विस्मितास्तात यजमानमथर्त्विजः ।**
**हवींषि हूयमानानि न ते गृह्णन्ति देवताः ॥ २६ ॥**

**प्रकाशिका** – ते हवींषि ॥ २६ ॥

**राजन् हवींष्यदुष्टानि श्रद्धयाऽऽसादितानि ते ।**
**छन्दांस्ययातयामानि योजितानि धृतव्रतैः ॥ २७ ॥**

**प्रकाशिका** – आसादितानि संपादितानि । अयातयामान्यगतवीर्याणि ॥ २७ ॥

**न विदामेह देवानां हेलनं वयमण्वपि ।**
**यन्न गृह्णन्ति भागान् स्वान् ये देवाः कर्मसाक्षिणः ॥ २८ ॥**

**प्रकाशिका** – हेलनमवज्ञानम् ॥ २८ ॥

**मैत्रेय उवाच–**

**अङ्गो द्विजवचः श्रुत्वा यजमानः सुदुर्मनाः ।**
**तत् प्रष्टुं व्यसृजद् वाचं सदस्यांस्तदनुज्ञया ॥ २९ ॥**

**प्रकाशिका** – यज्ञे धृतमौनोऽपि वाचं व्यसृजत्प्रायुंक्त ॥ २९ ॥

**नागच्छन्त्याहुता देवा न गृह्णन्ति ग्रहानिह ।**
**सदसस्पतयो ब्रूत किमवद्यं मया कृतम् ॥ ३० ॥**

**प्रकाशिका** – आहुता आहूताः । गृहान्सोमपात्राणि । इह यज्ञे न गृह्णन्ति ॥ ३० ॥

**सदस्या ऊचुः –**

**नरदेवेह भवतो नावद्यं हि मनाक् स्थितम् ।**
**अस्त्येकं प्राक्तनमघं यदि हेदृक् त्वमप्रजः ॥ ३१ ॥**

**प्रकाशिका** – इहास्मिन् जन्मनि यद्यस्मादधादीदृग्गुणाधिकोऽपि त्वमप्रजः पुत्ररहित इति यदतः प्राक्तनं पूर्वजन्मार्जितमघं बालहत्यादिकमेकमघमस्तीत्यनुमीयते ॥ ३१ ॥

**तथा साधय भद्रं ते आत्मानं सुप्रजं नृप ।**
**इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ॥ ३२ ॥**

**प्रकाशिका** – यथा देवा हविर्गृह्णन्ति तथाऽऽत्मानं सप्रजं पुत्रेण सह वर्तमानं साधय कुरु ततो भद्रं भवति । कथं साधनीयमित्यत आह ॥ इष्ट इति ॥ ३२ ॥

**यथा स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः ।**
**यद् यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ॥ ३३ ॥**

**तात्पर्यम् – 'अनपत्योऽपि सद्धर्मा लोकजिन्नात्र संशयः । देवैस्तु पृथुजन्मार्थे हविरङ्गस्य नो हृतम् ॥ अनपत्यत्वकर्माऽसौ बालहत्या कृता पुरा । अतो दुष्टोऽभवत्पुत्र इष्टो विष्णुरतः पृथुरि'ति वामने ॥ ३३ ॥**

**प्रकाशिका** – तथा सति स्वभागधेयानि स्वभागान् । यद्यस्माद्यज्ञपुरुषो हरिः साक्षाद्वृतः न देवद्वाराऽतोपत्यं तव भविष्यतीति निश्चित्य दिवौकसः स्वभागधेयानि गृहिष्यन्तीत्याशयः । अत्रापत्यास्यै पुत्रकामेष्टौ कृतायां देवा हविर्गृहीष्यन्तीत्युक्त्याऽनपत्यस्य हविर्देवा न गृहिष्यन्तीति । ततश्च तस्य स्वर्गादिलोकप्राप्तिर्नास्तीति प्रतीयतेऽतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैवाह ॥ अनपत्योऽपीति । सद्धर्मा स्वविहितधर्मानुष्ठाता लोकजिदुत्तमलोकं प्राप्नोति । तर्हि देवैः कस्मादंगस्य हविर्नो गृहीतमित्यत उक्तम् ॥ देवैरिति । तुशब्दोऽवधारणे । पृथुजन्मार्थमेव पृथुजन्म भवेदित्यर्थमेवांगस्य हविर्नो हृतं गृहीतम् । यद्यस्माभिरस्य हविर्गृह्येत तर्ह्ययं पुत्रकामेष्टिं न करिष्यति । ततश्च पृथुजन्म न भवेदतः पृथुजन्मार्थमस्यात्र हविर्न ग्राह्यमित्यभिप्रायेणैव न गृहीतम् । न त्वनपत्यकारणादित्यर्थः । नन्वस्त्वनपत्यत्वं तथाऽपि पुत्रकामेष्टौ कृतायामप्यादौ दुष्टपुत्रोत्पत्तिश्च किमर्थमित्यपेक्षायामाह ॥ अनपत्यत्वकर्मासाविति । असावंगः । अनपत्यत्वे निमित्तभूतं कर्म पापं यस्य स तथा । कुतः । पूर्वजन्मनि बालहत्याकृतेः कारणात् । अतोऽनपत्योऽभवदित्यपि ग्राह्यम् । दुष्टः पुत्रोऽभवदित्यत्र पुत्रकामेष्टौ कृतायामपीति शेषः । ननु तर्हि विष्णुमुद्दिश्य कृताया इष्टेर्वैयर्थ्यमापन्नमित्यत उक्तम् ॥ इष्टेति । यतो विष्णुरिष्टोऽतः पृथुः पश्चादभवदित्यर्थः । बालहत्याजनितपापवशादेव पुत्रकामेष्टिफलभूतोऽपि पुत्रो न साक्षाज्जात इत्याशयः ॥ ३३ ॥

**तांस्तान् कामान् हरिर्दद्याद् यान् यान् कामयते जनः ।**
**आराधितो यथैवैष यथा पुंसां फलोदयः ॥ ३४ ॥**

**प्रकाशिका** – ननु मुक्तिप्रदो हरिः किमितरपुरुषार्थं ददातीत्यत आह ॥ तांस्तानिति । नन्वेवं कथं मुक्तिप्रद इत्यत उक्तम् ॥ आराधित इति । एष हरिर्यथा यत्कामनयाऽऽराधितस्तथा तत्कामनानुसारेणैव फलोदयः । हरेः सकाशाद्भवतीति शेषः । मोक्षकामनयाऽऽराधितो मोक्षं ददातीतरपुरुषार्थकामनयाऽऽराधित इतरपुरुषार्थान्ददातीत्याशयः ॥ ३४ ॥

इति व्यवसिता विप्रास्तस्य राज्ञः प्रजाप्तये ।
पुरोडाशं निरवपन् शिपिविष्टाय विष्णवे ॥ ३५ ॥

**प्रकाशिका** – प्रजाप्तये प्रजोत्पत्तये शिपिविष्टाय शिपिषु पशुषु यज्ञनामकेन पुरुषेण प्रविष्टायेत्यर्थः । तथा च श्रुतिः । यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठतीति ॥३५॥

तस्मात् पुरुष उत्तस्थौ हेममाल्यमलाम्बरः ।
हिरण्मयेन पात्रेण सिद्धमादाय पायसम् ॥ ३६ ॥

स विप्रानुमतो राजा गृहीत्वाऽञ्जलिनोदनम् ।
अवघ्राय मुदा युक्तः प्रादात् पत्न्या उदारधीः ॥ ३७ ॥

**प्रकाशिका** – तस्मात्पुरोडाशहोमात्पुरुष उत्तस्थौ । कुण्डादिति शेषः ॥ ३६,३७ ॥

सा तत् पुंसवनं राज्ञी प्राश्यतौ पत्युरादधे ।
ततः काल उपावृत्ते कुमारं सुषुवेऽप्रजा ॥ ३८ ॥

**प्रकाशिका** – पुमान् सूयते अनेनेति पुंसवनं तत्पायसं प्राश्य पत्युः सकाशाद्गर्भमादधे । अप्रजा सती ॥ ३८ ॥

स बाल एव पुरुषो मातामहमनुव्रतः ।
अधर्मांशोद्भवं मृत्युं तेनाभवदधार्मिकः ॥ ३९ ॥

स शरासनमुद्यम्य मृगयुर्वनगोचरः ।
हन्त्यसाधुर्मृगान् दीनान् वेनोऽसावित्यरौज्जनः ॥ ४० ॥

**तात्पर्यम्** – 'मृत्युर्देवो यमभ्राता वेनमातामहोऽसुरः ॥ पीडां वेनेति च प्राहुर्वेनोऽसौ पीडनादभूदि'ति च ॥ ३९, ४० ॥

**प्रकाशिका** – बाल एव कौमारवया एव । मातामहं मातुः सुनीथायाः पितरम् । ननु मृत्युनामकदेवमनुव्रतस्य कथमधार्मिकत्वमुच्यत इत्यपेक्षायामत्राभिप्रायं प्रमाणेनैवाह ॥ मृत्यु-रिति। तथा च यमभ्राता देवो मृत्युरत्र न मृत्युशब्देन ग्राह्यः किं त्वधर्मांशोद्भवमधर्माभिमान्य-सुरांशोद्भवं मातामहमिति विशेषणद्वयसामर्थ्यादसुर एव मृत्युनामा ग्राह्योऽतोऽधार्मिको धर्मविरुद्धकर्मकृदित्याशयः ॥

वेनोऽसावित्यरौज्जन इत्युक्तत्वेन शब्दनिर्वचनं प्रमाणशेषेण दर्शयति ॥ पीडामिति । तथा च मृगयुर्लुब्धकः सन् वेनयति पीडयतीति वेनोऽसाविति नामागच्छतीति जनोऽरौत्चुक्रोश । असाधुर्दुर्जनः ॥ ३९,४० ॥

**आक्रीडे क्रीडतो बालान् वयस्यानतिदारुणः ।**
**प्रसह्य निरनुक्रोशः पशुमारममारयत् ॥ ४१ ॥**
**तं विलक्ष्य खलं पुत्रं शासनैर्विविधैर्नृपः ।**
**यदा न शासितुं कल्पो भृशमासीत् सुदुर्मनाः ॥ ४२ ॥**

**प्रकाशिका** – आक्रीडे क्रीडास्थाने । पशुमारो पशुहिंसकः यथा पशून्मारयति तथैवेति लुप्तोपमा ॥ ४१,४२ ॥

**प्रायेणाभ्यार्चितो देवो येऽप्रजा गृहमेधिनः ।**
**कदपत्यभृतं दुःखं ये न विन्दन्ति दुर्भरम् ॥ ४३ ॥**

**प्रकाशिका** – दुर्मनसस्तस्य कुपुत्रनिन्दावाक्यान्याह ॥ प्रायेणेति त्रिभिः । ये गृहमेधिनोऽप्रजा एवं दुर्भरं धारयितुमशक्यं कदपत्यकृतं दुःखं न विन्दन्ति तैः प्रायेण देवो नारायणोऽभ्यर्चित इत्यन्वयः ॥ ४३ ॥

**यतः पापीयसी कीर्तिरधर्मश्च महान् नृणाम् ।**
**यतो विरोधः सर्वेषां यत आधिरनन्तकः ॥ ४४ ॥**

**प्रकाशिका** – सर्वेषां सर्वैः सह । आधिर्मानसी व्यथा ॥ ४४ ॥

**कस्तं प्रजापदेशं वै मोहं बन्धनमात्मनः ।**
**पण्डितो बहुमन्येत यदर्थाः क्लेशदा गृहाः ॥ ४५ ॥**

**प्रकाशिका** – प्रजापदेशं प्रजा इति नाममात्रं प्रकर्षेण जननरूपार्थाभावात् । आत्मनः स्वस्य मोहेनायं मम पुत्र इति मिथ्याज्ञानेन बन्धनं बन्धनहेतुम् । यदर्था यन्निमित्ता ॥ ४५ ॥

**कदपत्यं वरं मन्ये सदपत्याच्छुचास्पदात् ।**
**निर्विद्येत गृहान्मर्त्यो यत् क्लेशनिवहा गृहाः ॥ ४६ ॥**

**प्रकाशिका** – इदानीं विवेकिनो निर्वेदहेतुत्वात्कदपत्यमेव वरमिति स्तौति ।। कदपत्यमिति । शुचास्पदात्पोषणाय वित्ताद्यर्जनाद्यायासास्पदात् । क्लेशनिवहेन क्लेशसमूहेनातुरो मर्त्यो गृहान्निर्विद्येतेति यस्मात्तस्माद्वरं मन्य इत्यन्वयः । वैराग्यहेतुत्वादिति भावः । टापं चापि हलन्तानामिति वचनाच्छुचेति साधु ।। ४६ ।।

**एवं स निर्विण्णमना नृपो गृहान्निशीथ उत्थाय महोदयोदयात् ।**
**अलब्धनिद्रोऽनुपलक्षितो नृभिर्हित्वा गतो वेनसुवं प्रसुप्ताम् ।। ४७ ।।**

**प्रकाशिका** – महोदयानां महाविभूतीनामुदय उद्रेको यस्मिंस्तत्तथा तस्मात् । वेनसुवं वेनमातरम् ।। ४७ ।।

**विज्ञाय निर्विद्य गतं पतिं प्रजाः पुरोहितामात्यसुहृद्गणादयः ।**
**विचिक्युरुर्व्यामतिशोककातरा यथा निगूढं पुरुषं कुयोगिनः ।। ४८ ।।**

**प्रकाशिका** – विचिक्युरन्वेषितवन्तः । तत्रैव सन्तमपि नापश्यन्नित्यत्र दृष्टान्तमाह ।। यथेति ।। ४८ ।।

**अलक्षयन्तः पदवीं प्रजापतेर्हतोद्यमाः प्रत्युपसृत्य ते पुरीम् ।**
**ऋषीन् समेतानभिवन्द्य साश्रवो न्यवेदयन् पौरव भर्तृविप्लवम् ।। ४९ ।।**

**प्रकाशिका** – साश्रवो बाष्पसहिताः । हे पौरव हे विदुर । भर्तृविप्लवं नाशम् ।। ४९ ।।

इति श्रीमद्भागवते चतुर्थस्कन्धे त्रयोदशोऽध्यायः ।। १३ ।।

## अथ चतुर्दशोऽध्यायः ।

**मैत्रेय उवाच–**

भृग्वादयस्ते मुनयो लोकानां क्षेमदर्शिनः ।
गोप्तर्यसति वै नॄणां पश्यन्तः पशुसाम्यताम् ॥ १ ॥

**प्रकाशिका** – ॥ हरिः ॐ ॥ क्षेमदर्शिनः क्षेमचिन्तकाः । पशुसाम्यतां पशुसाधर्म्यम् । सांकर्यम् ॥ १ ॥

वीर मातरमाहूय सुनीथां ब्रह्मवादिनः ।
प्रकृत्यसंमतं वेनमभ्यषिञ्चन् पतिं भुवः ॥ २ ॥

**प्रकाशिका** – हे वीर । प्रकृत्यसंमतममात्यादीनां प्रकृतीनामसंमतम् । प्रकृत्याऽसंमतमिति पाठे स्वभावेन राज्येऽनुचितमित्यर्थः ॥ २ ॥

श्रुत्वा नृपासनगतं वेनमत्युग्रशासनम् ।
निलिल्युर्दस्यवः सद्यः सर्पत्रस्ता इवाखवः ॥ ३ ॥

**प्रकाशिका** – दस्यवश्चोरा निलिल्युर्निलीना बभूवुः ॥ ३ ॥

स आरूढनृपस्थान उन्नद्धोऽष्टविभूतिभिः ।
अवमेने महाभागान् स्तब्धः सम्भावितः शठः ॥ ४ ॥

**प्रकाशिका** – आरूढं नृपस्थानं सिंहासनं येन स तथा । अष्टविभूतिभिः अष्टानां दिक्पालानामैश्वर्यैरुन्नद्धः स्तब्धः महत्सूत्थानाद्याचारशून्यः ॥ ४ ॥

एवं मदान्ध उत्सिक्तो निरङ्कुश इव द्विपः ।
पर्यटन् रथमास्थाय कम्पयन्निव रोदसी ॥ ५ ॥

न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित् ।
एवं न्यवारयद् धर्मं भेरीघोषेण सर्वतः ॥ ६ ॥

**प्रकाशिका** – उत्सिक्त उद्धतः । रोदसी द्यावापृथिव्यौ ॥ ५,६ ॥

वेनस्यावेक्ष्य मुनयो दुर्वृत्तस्य विचेष्टितम् ।
विमृश्य लोकव्यसनं कृपयोचुः स्म सत्रिणः ॥ ७ ॥

**प्रकाशिका** – सत्रिणो यज्वानः ।। ७ ।।

**अहो उभयतः प्राप्तं लोकस्य व्यसनं महत् ।**
**दारुण्युभयतो दीप्त इव तस्करपालयोः ।। ८ ।।**

**प्रकाशिका** – दारुणि काष्ठे उभयतो मूलतोऽग्रतश्च दीप्ते ज्वलिते तन्मध्यवर्तिनां पिपीलिकादि प्राणिनां यथोभयतो व्यसनं भवति । एवं तस्करपालयोस्तस्करात्पालकाच्च व्यसनं प्राप्तमित्यर्थः।।८।।

**अराजकभयादेष कृतो राजाऽतदर्हणः ।**
**ततोऽप्यासीद् भयं त्वद्य कथं स्यात् स्वस्ति देहिनाम् ।। ९ ।।**

**प्रकाशिका** – एतदेव विशदयन्नाहुः ।। अराजकेति । अतदर्हः राज्यानर्हः ।। ९ ।।

**अहेरिव पयः पोषः पोषकस्याप्यनर्थकृत् ।। १० ।।**

**वेनः प्रकृत्यैव खलः सुनीथागर्भसम्भवः ।**
**निरूपितः प्रजापालः स जिघांसति वै प्रजाः ।। ११ ।।**

**प्रकाशिका** – अयं स्वपोषकाणामस्माकमप्यनर्थकर इत्येतदृष्टान्तमुखेनाहुः ।। अहेरिवेति । पयःपोषः क्षीरेण पोषणम् । युष्माभिरयं कथं षोषित इत्यत आहुः ।। वेन इति । प्रकृत्यैव स्वभावेनैव सुनीथागर्भसंभवो यतोऽतो निरूपितो नियुक्तोऽस्माभिः ।। १०,११ ।।

**तथाऽपि सान्त्वयामोऽमुं माऽस्मांस्तत्पातकं स्पृशेत् ।**
**तद्विद्वद्भिरसद्वृत्तो वेनोऽस्माभिः कृतो नृपः ।। १२ ।।**

**सान्त्वितो यदि नो वाचं न ग्रहीष्यत्यधर्मकृत् ।**
**लोकधिक्कारसन्दग्धं दहिष्यामः स्वतेजसा ।। १३ ।।**

**प्रकाशिका** – तथापि दुर्वृत्तत्वेऽपि सांत्वयामः समीचीनवचनैः प्रार्थयिष्यामः । तत्पातकं तस्य पातकम् । तत्पातकस्पर्शो युष्माकं कुत इत्यत आहुः ।। तद्विद्वद्भिरिति । यद्यस्माद-सद्वृत्तोऽयमिति विद्वद्भिरेवास्माभिर्वेनो नृपः कृतस्तस्मात्तदीयपापस्य स्पर्शोऽस्माकं प्राप्त-मभूदित्याशयः ।। १२,१३ ।।

एवमध्यवसायैनं मुनयो गूढमन्यवः ।
उपव्रज्याब्रुवन् वेनं सान्त्वयित्वाऽथ सामभिः ॥ १४ ॥

नृपवर्य निबोधैतद् यत् ते विज्ञापयाम भोः ।
आयुः श्रीबलकीर्तीनां तव तात विवर्धनम् ॥ १५ ॥

**प्रकाशिका** – सामभिः प्रियोक्तिभिः ॥ १४,१५ ॥

धर्म आचरितः पुंसां वाङ्मनः कायबुद्धिभिः ।
लोकान् विशोकान् वितरत्यथानन्त्यमसङ्गिनाम् ॥ १६ ॥

**प्रकाशिका** – असंगिनां निष्कामिनाम् । आनंत्यं मोक्षमपि ॥ १६ ॥

स ते मा विनशेद् वीर प्रजानां क्षेमलक्षणः ।
यस्मिन् विनष्टे नृपतिरैश्वर्यादवरोहति ॥ १७ ॥

**प्रकाशिका** – मा विनशेन्मा विनश्यत् । अवरोहत्यधोयाति ॥ १७ ॥

राजन्नसाध्वमात्येभ्यश्चोरादिभ्यः प्रजा नृपः ।
रक्षन् यथा बलिं गृह्णन्निह प्रेत्य च मोदते ॥ १८ ॥

यस्य राष्ट्रे पुरे चैव भगवान् यज्ञपूरुषः ।
इज्यते स्वेन धर्मेण जनैर्वर्णाश्रमात्मकैः ॥ १९ ॥

तस्य राज्ञो महाराज भगवान् भूतभावनः ।
परितुष्यति विश्वात्मा तिष्ठतो निजशासने ॥ २० ॥

तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे ।
लोकाः सपाला ह्येतस्मै हरन्ति बलिमादृताः ॥ २१ ॥

**प्रकाशिका** – कोऽसौ धर्मो यो लोकान्वितरतीत्यत आहुः ॥ राजन्निति । यो नृपोऽसाधवो येऽमात्यादयस्तेभ्यः । यथायोग्यं षष्ठांशं बलिं करम् ॥ १८-२१ ॥

तं सर्वलोकामरयज्ञसंग्रहं त्रयीमयं द्रव्यमयं तपोमयम् ।
यज्ञैर्विचित्रैर्यजतो भवाय ते राजन् स्वदेशाननुरोद्धुमर्हसि ॥ २२ ॥

**तात्पर्यम् – सर्वलोकादीन्सङ्गृह्णातीति तत्सङ्ग्रहः । 'सर्वस्य ग्रहणाद्विष्णुः सर्वसङ्ग्रह उच्यते । वेदस्य तद्वक्तृकत्वात्प्राधान्यं तु त्रयीमयः । सर्वं तद्विषयत्वेन मुख्यं सर्वमयस्तत' इति स्कान्दे ॥ २२ ॥**

**प्रकाशिका** – एतादृशहरिपूजकब्राह्मणानुसरणं त्वया कार्यमित्याहुः ॥ तमिति । अत्र सर्वलोकामरयज्ञसङ्ग्रहमित्यस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ सर्वलोकादीनिति । संगृह्णाति सम्यग्जानाति स्वीकरोतीति वा । सर्वसङ्ग्रहः सर्वलोकादिसङ्ग्रहः । इत्युच्यत इति शेषः । अत्र प्रमाणं पठति ॥ सर्वस्येति । लोकादेरित्यर्थः । त्रयीमय इत्यादेरपि विवक्षितमर्थं प्रमाणशेषेणैव दर्शयति ॥ वेदस्येति । तस्य वक्तृत्वात्प्रतिपादकत्वाच्च प्राधान्यम् । तुशब्दोऽनन्यविषयतयेति विशेषसूचकः । सर्वं द्रव्यं तप आदिकं तद्विषयत्वेन तदुद्देश्यकत्वेन मुख्यं प्रधानं ततो वेदादेः प्राधान्यप्रदत्वतः ॥ ततश्चायमर्थः ॥ सर्वशब्दः प्रत्येकमभिसंबध्यते । सर्वान् लोकांस्तत्पालान-मरान्सुरांस्तत्प्रतिपादकान्यज्ञांश्च संगृह्णातीति तथा तम् । मयशब्दोऽयं न मयट् । तथा च त्रयी वेदो मय इतरशब्दराशितो यस्मात्प्रधानं भवति तत्प्रतिपादितो भवति स त्रयीमयः तमित्यर्थः । एवं द्रव्यमयं पुरोडाशादिकं तपश्च मयं प्रधानम् । मुख्यमिति यावत् । यस्मादुद्देशाद्भवति स तथा तम् । विचित्रैर्द्रव्ययज्ञास्तपोयज्ञा इत्यादिषूक्तैर्यज्ञैस्ते तव भवाय भद्राय स्वदेशान्स्वदेशस्थान् । अनुरोद्धुमनुवर्तितुम् ॥ २२ ॥

**यज्ञेन युष्मद्विषये द्विजातिभिर्वितायमानेन सुराः कला हरेः ।**
**स्विष्टाः सुतुष्टाः प्रदिशन्ति वाञ्छितं तद्धेलनं नार्हसि वीर चेष्टितुम् ॥ २३ ॥**

**तात्पर्यम् – 'विष्णोः सन्निहितत्वात्तु सर्वे देवा हरेः कला' इति च ॥ २३ ॥**

**प्रकाशिका** – ननु यज्ञैर्हरिरेवेष्टश्चेदिन्द्रादयो देवाः कथं फलप्रदाः स्युरित्याशङ्कायां तेषामपि हरिसंनिधानपात्रत्वेनेज्यत्वात्फलप्रदत्वमतो यज्ञाकरणे तदवज्ञाऽपि तव भविष्यतीत्याशयेनाहुः ॥ यज्ञेनेति । युष्मद्विषये भवदुद्देशे । अत्र सुरा हरेः कला अंशा इत्युक्त्या मत्स्यादिवत्सुराणां कलात्वमिति प्रतीयतेऽतोऽत्र विवक्षिततात्पर्यं प्रमाणेनैवाह ॥ विष्णोरिति । तुशब्दो विशेषेणेत्यर्थकः । अवधारणार्थे वा । संनिहितत्वादेव सर्वदेवेष्विति शेषः । कलाः इत्युच्यन्ते इति शेषः । तथा च हरेः कलाविशेषेण हरिणाऽऽविष्टा इत्यर्थः । तथा च यज्ञैर्देवान्तःस्थितस्य हरेरधिष्ठानभूतदेवा अपि इष्टाः सन्तः फलप्रदा इत्याशयः । तेषां देवानां हेलनमवज्ञाम् ॥ २३ ॥

वेन उवाच–

**बालिशा बत यूयं वै अधर्मे धर्ममानिनः ।**
**ये वृत्तिदं पतिं हित्वा जारं पतिमुपासते ॥ २४ ॥**

**प्रकाशिका** – बालिशा अज्ञाः । कथमधर्मे धर्ममानिन इत्यतोऽस्याधर्मत्वमुपपादयति ॥ ये वृत्तिदमिति । वृत्तिदमन्नादिप्रदम् । जारमिति लुप्तोपमा । यथा स्वपतिं हित्वा स्त्री जारमुपास्ते तथा भवन्तो वृत्तिदमत एव पतिं पालकं मां हित्वाऽन्यमीशमुपासते । अतोऽयमधर्मस्तत्र च धर्ममानिन इत्यन्वयः ॥ २४ ॥

**अवजानन्ति ये मूढा नृपरूपिणमीश्वरम् ।**
**नानुविन्दन्ति ते भद्रमिह लोके परत्र च ॥ २५ ॥**

**प्रकाशिका** – इष्टविघातित्वाच्चायमधर्म इत्याशयेनाह ॥ अवजानन्तीति ॥ २५ ॥

**को यज्ञ पुरुषो नाम यत्र वो भक्तिरीदृशी ।**
**भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम् ॥ २६ ॥**
**विष्णुर्विरिञ्चो गिरिश इन्द्रो वायुर्यमो रविः ।**
**पर्जन्यो धनदः सोमः क्षितिरग्निरपां पतिः ॥ २७ ॥**

**प्रकाशिका** – बालिशत्वमुपपादयति ॥ क इत्यादिना । भर्तृस्नेहो विदूरो येषाम् ॥ २६,२७ ॥

**एते चान्ये च विबुधाः प्रभवो वरशापयोः ।**
**देहे तिष्ठन्ति नृपतेः सर्वदेवमयो नृपः ॥ २८ ॥**

**प्रकाशिका** – वरशापयोर्दाने प्रभवः । यतः सर्वदेवमयः सर्वदेवात्मकस्तं भवन्तो न जानंत्यतो यूयं बालिशा इत्याशयः ॥ २८ ॥

**तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः ।**
**बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् ॥ २९ ॥**

मैत्रेय उवाच–

**इत्थं विपर्ययमतिः पापीयानुत्पथं गतः ।**
**अनुनीयमानस्तद्याश्ञां न चक्रे भ्रष्टमङ्गलः ॥ ३० ॥**

**इति तेऽसकृतास्तेन द्विजाः पण्डितमानिना ।**
**भग्नायां हव्ययाञ्चायां तस्मै विदुर चुक्रुधुः ॥ ३१ ॥**
**हन्यतां हन्यतामेष पापः प्रकृतिदारुणः ।**
**जीवन् जगदसावाशु कुरुते भस्मसाद् ध्रुवम् ॥ ३२ ॥**
**नायमर्हत्यसद्वृत्तो नरदेववरासनम् ।**
**यो वै यज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥ ३३ ॥**

**प्रकाशिका** – अग्रभुगादौ यज्ञभागभोक्ता ॥ २९-३३ ॥

**को वैनं परिचक्षीत वेनमेकमृतेऽशुभम् ।**
**प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनम् ॥ ३४ ॥**

**प्रकाशिका** – ननु निंद्यस्य निन्दनं युक्तमेवेत्यतो विष्णुर्नकेनापि निन्द्य इत्याहुः ॥ को वेति । परिचक्षीत विनिन्द्येत न कोऽपीत्यर्थः । कृतघ्नश्चायमतोऽवश्यं हन्तव्य इत्याशयेनाहुः ॥ प्राप्त इति । यदनुग्रहभाजनो यस्य विष्णोरनुग्रहविषयः सन् ईदृशमैश्वर्यं प्राप्तोऽतस्तमेनमित्यन्वयः ॥ ३४ ॥

**इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः ।**
**निजघ्नुर्हुङ्कृतैर्वेनं हतमच्युतनिन्दया ॥ ३५ ॥**

**प्रकाशिका** – पूर्वं गूढमन्यव इदानीं रूढमन्यवः । हुंकृतैः हुंकारैः ॥ ३५ ॥

**ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम् ।**
**सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३६ ॥**

**प्रकाशिका** – स्वाश्रमपदं प्रति गते गमने कृते सति विद्यायोगेन मन्त्ररूपोपायेन ॥ ३६ ॥

**एकदा मुनयस्ते तु सरयूसलिलाप्लुताः ।**
**हुत्वाऽग्निं सत्कथाश्चक्रुरुपविष्टाः सरित्तटे ॥ ३७ ॥**
**वीक्ष्योत्थितान् महोत्पातानाहुर्लोकभयंकरान् ।**
**अप्यभद्रमनाथाया दस्युभ्यो न भवेद् भुवः ॥ ३८ ॥**

**प्रकाशिका** – अनाथाया इति हेतुगर्भविशेषणम् । अपिशब्दः किं शब्दार्थः । अनाथाया भुवोऽभद्रं न भवेत्किं भवेदेवेत्याहुरित्यर्थः ॥ ३८ ॥

**एवं ब्रुवत्सु ऋषिषु धावतां सर्वतो दिशम् ।**
**पांसुः समुत्थितो भूमेश्चोराणां वसु लुम्पताम् ॥ ३९ ॥**

**प्रकाशिका** – वसु धनादिकं लुंपतां चोराणां सकाशाद्भूमौ पांसुः समुत्थित इत्यन्वयः ॥ ३९ ॥

**तदुपद्रवमाज्ञाय लोकस्य वसु लुम्पताम् ।**
**भर्तर्युपरते तस्मिन्नन्योन्यं च जिघांसताम् ॥ ४० ॥**

**प्रकाशिका** – तत्तदा लोकस्योपद्रवमाज्ञाय निश्चित्य ॥ ४० ॥

**चोरप्रायं जनपदं हीनसत्त्वमराजकम् ।**
**लोका नावारयञ्छक्ता अपि तद्दोषदर्शिनः ॥ ४१ ॥**

**प्रकाशिका** – हीनसत्त्वं पराक्रमरहितजनपदं चाज्ञाय शक्ता लोकाः क्षत्रियादयो जना नावारयन् । चोरानिति शेषः । कथंभूताः । तद्दोषदर्शिनोऽपि अवारणे दोषदार्शिनोऽपि ॥ ४१ ॥

**ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः ।**
**स्रवते ब्रह्म तस्यापि भिन्नभाण्डात् पयो यथा ॥ ४२ ॥**

**प्रकाशिका** – नैवं ब्राह्मणानाममस्माकमुपेक्षोचितेत्याशयेनाहुः ॥ ब्राह्मण इति । समदृगपि शान्तोऽपि ब्राह्मणो यदि दीनानामुपद्रवं दृष्ट्वा समुपेक्षको भवेत्तर्हि तस्य ब्रह्म । भावप्रधानो निर्देशः । ब्राह्मण्यं स्रवते नश्यति । तस्मादस्माभिरुपेक्षा न कार्येति शेषः ॥ ४२ ॥

**नाङ्गस्य वंशो राजर्षेरेष संस्थातुमर्हति ।**
**अमोघवीर्या हि नृपा वंशेऽस्मिन् केशवाश्रयाः ॥ ४३ ॥**

**प्रकाशिका** – तर्ह्यन्यो राजा क्रियतामित्यत आहुः ॥ नांगस्येति । संस्थातुं नाशं प्राप्तुम् । कुत इत्यत उक्तम् ॥ अमोघेति । हि यस्मादस्मिन्वंशे उत्पन्ना नृपा अमोघवीर्या अमोघपराक्रमास्तस्मात् । एवमस्यैव वंशो वर्धनीय इति निश्चितार्थः ॥ ४३ ॥

**विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः ।**
**ममन्थुरूरुं तरसा तत्रासीद् बाहुको नरः ॥ ४४ ॥**

**प्रकाशिका** – विपन्नस्य मृतस्य । बाहुको वामनः ॥ ४४ ॥

**काककृष्णोऽतिह्रस्वांगो ह्रस्वबाहुर्महाहनुः ।**
**ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्धजः ॥ ४५ ॥**

**प्रकाशिका –** काककृष्णः काकवत्कृष्णवर्णः । महान्तौ हनू कपोलप्रांतौ यस्य स महाहनुः । निम्ननासाग्रोऽधोन्नतघ्राणशिराः ॥ ४५ ॥

**तं तु तेऽवनतं दृष्ट्वा किं करोमीति वादिनम् ।**
**निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत् ॥ ४६ ॥**

**प्रकाशिका –** ततो निषीदेति वचनात् ॥ ४६ ॥

**तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः ।**
**योऽपाहरज्जायमानो वेनकल्मषमुल्बणम् ॥ ४७ ॥**

**मैत्रेय उवाच–**

**अथ तस्य पुनर्विप्रैर्विपन्नस्य महीपतेः ।**
**बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ ४८ ॥**

**तद् दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः ।**
**ऊचुः परमसन्तुष्टा विदित्वा भगवत्कलाम् ॥ ४९ ॥**

तात्पर्यम् – 'अहं ब्रह्मेति वेनस्तु ध्यायन्नापाधरं तमः । तद्राद्धान्तो महीं व्याप्तो भेर्या ख्यापयतोऽनिशम् । आसुरा राक्षसाश्चैव पिशाचास्तत्पथि स्थिताः । भूमौ तत्पृथुना सर्वं निरस्तं महितात्मना । पुनः कलियुगे प्राप्ते अष्टाविंशतिमे मनोः । वैवस्वतस्य समये जाताः क्रोधवशा भुवि । ख्यापयन्ति दुरात्मनो मणिमांस्तत्पुरःसर' इति भविष्यत्पुराणे ।

'त्र्यंशो वेनः समुद्दिष्टः सत्वांशः पृथुतामगात् । रजोंऽशश्च दिवं यातो निषादस्तामसोऽभवत्। स्वयं वेनश्चतुर्थस्तु महातमसि पातित' इति कौर्मे । 'पापरूपी पृथग्जातो निषादो वेनदेहतः । यस्मात्तस्मात्पृथोः पुत्राद्रजो वेनो दिवं ययावि'ति गारुडे ॥ ४७ ॥

**प्रकाशिका –** तत्स्वरूपमाह ॥ योऽपाहरदिति । वेनकल्मषं वेनगतपापम् । स्वशरीररूपं तच्छरीराद्बहिर्निर्गमनेनापाहरदित्यर्थः । तद्गतपापाभिमानी यस्तामसो जीवो स एव स्वशरीररूपं तद्गतं पापमादाय निषादरूपेण बहिरुत्पन्न इत्याशयः ॥

अत्र मदन्य ईश्वरो नास्तीति वचनमेतस्य कथमृषिभिर्निन्दा कृता तस्यापि मोक्षसाधनतया ब्रह्मैव सन् ब्रह्माप्नोतीत्यादौ श्रूयमाणत्वात् । तत्कालीनैः सर्वैः परिगृहीतत्वाच्च । न च पृथुना तन्मतं निरस्तमिति वाच्यम् । पुनरस्मिन्कलियुगे संकरादिभिः प्रवर्तितत्वात् । न हि निन्द्यत्वे एतत्संभवतीत्यतो यैः तस्मिन् युगेऽस्मिन् युगे तन्मतमनुवर्तितं ते तमोयोग्या असुरा एव न सज्जीवा अतो निन्दा युक्तैवेत्याशयेन तेषामसुरादित्वे प्रमाणं पठति ॥ अहं ब्रह्मेति । अन्धन्तम आप । तथा च तथाध्यानस्य मोक्षसाधनताप्रतिपादकवाक्यमन्यथा नेयमित्याशयः । चशब्देन मर्त्याधमा ग्राह्याः । तत्पथि स्थितास्तद्गृहीतवन्तः । वैवस्वतस्य मनोः समये एकसप्ततिमहायुगे काले तत्राप्यष्टाविंशतिमहायुगान्तर्गतकलियुगे प्राप्ते सति क्रोधवशास्तन्नामानोऽसुराः पूर्वं भीमसेनहतास्त एव दुरात्मना भुवि जाताः सन्तस्तन्मतं ख्यापयन्ति । यस्तेषां पुरःसरो मुख्यो मणिमांस्तन्नामकोऽसुरः स एवेदानीं संकराभिधो जातः । तत्पुरःसरस्तेषां भुव्युत्पन्नानामसुराणां तोटकादीनां गुरुरित्यर्थः ।

ननु वेनस्योदाहृतप्रमाणानुसारेणांधन्तमः प्राप्तो वेनः पृथुतामगादिति ग्रन्थान्तरविरोधः । पुत्रेण जीयते लोक इत्यादिना पृथुराजगुणेन वेनस्य स्वर्गप्राप्त्ययोगाच्च । तस्यैव ग्रन्थान्तरे निषादरूपेणापि जन्मोक्त्ययोगाच्च । इत्यत एतेषामभिप्रायं प्रमाणेनैव दर्शयति ॥ त्र्यंश इति । त्रयोंऽशा आविष्टा यस्मिन्स त्र्यंशः । अंशित्वे पृथ्वादिभिस्त्रिभिरंशैराविष्टः स्वयं चतुर्थ इत्यर्थः । सत्त्वांशः सात्त्विको जीवः पृथुतामगात्पृथुतयोत्पन्नः । रजोंऽशो राजसो जीवो दिवं प्राप्तः । पृथुगुणेनेति शेषः । तमोंऽशस्तामसो जीवः स्वयं तद्देहाभिमानी जीवः । तु विशेषेण तामसः तामसतामसः । अत एव द्विजैर्महातमसि पातितः । अनेन विजघ्नुर्हुंकृतैर्वेनमिति यद्द्विजकर्तृकं वेनहननमुक्तं तन्महातमसि पतनरूपमेवेति ज्ञान्तव्यम् । ननु वेनदेहाधिष्ठितो रजोंऽशो दिवं प्राप्त इति न युक्तम् । तद्देहे तेनापि बहुतरपापसंपादनादित्याशङ्कां प्रमाणेनैव परिहरति ॥ पापरूपीति। राजसवेनसंपादितपापरूपीत्यर्थः । पृथग्जातः । तस्मात्पापागमात् । अनेन योऽपाहरज्जायमानो वेनकल्मषमुल्बणमित्यत्र वेनपदं राजसवेनपरमिति सूचितम् । तद्देहमानिनोंऽधन्तमोयोग्यस्य वेनस्य कल्मषापहरणेऽस्य बाधितत्वादिति ध्येयम् ॥ ४७-४९ ॥

**ऋषय ऊचुः –**

**एष विष्णोर्भगवतः कला भुवनपावनी ।**
**इयं च लक्ष्मीः सम्भूतिः पुरुषस्यानपायिनी ॥ ५० ॥**

**तात्पर्यम् – 'पृथुहैहयादयो जीवास्तेष्वाविष्टो हरिः स्वयम् । विशेषावेशतस्तेषु साक्षाद्धर्यं-शतावचः । किंस्तुघ्नव्यासऋषभकपिला मत्स्यपूर्वकाः । आकूतिजैतरेयौ च धर्मजत्रयमेव च ।**

**धन्वन्तरिर्हयग्रीवो दत्तात्रेयश्च तापसः । स्वयं नारायणस्त्वेते नाणुमात्रविभेदिनः । बलतः स्वरूपतश्चैव गुणैरपि कथञ्चने'ति तत्त्वनिर्णये । 'तत्र सन्निहिता श्रीश्च यत्र सन्निहितो हरिः । नास्य सन्निधिमात्रेण रमा पत्नीत्वमाव्रजेत् । साक्षादेव तु साक्षाच्च हरेः सन्निधितः क्वचित् । गोप्यादिरूपा भवति विपरीतं न तु क्वचिदि'ति च ।। ५० ।।**

**प्रकाशिका –** मूले एष विष्णोर्भगवत इत्यत्र पृथोर्मत्स्यादिवत्साक्षाद्भगवत्कलात्वमुच्यत इति प्रतीतिं प्रमाणेनैवापाकरोति ।। पृथ्विति । पृथ्वादयोऽन्ये जीवास्तेषु हरिः स्वयं राजराज-स्वरूपेणाविष्ट इत्यर्थः । नन्वेवं ते साक्षाद्धरेरंशा इति वक्ष्यमाणविरोध इत्यत आह ।। विशेषावेशत इति । इतरराजापेक्षया तत्र राजरूपस्य विशेषेण सामर्थ्यप्रदर्शनेनाविष्टत्वात्साक्षा-द्धर्यंशत्वप्रतिपादकं वचनम् । उपपद्यत इति शेषः । तर्हि साक्षाद्धरेरंशाः क इत्यतस्तानाह ।। किंस्तुघ्न इत्यादिना । किंस्तुघ्नः शिंशुमारः । मत्स्यपूर्वका मत्स्यादयो दशावतारा आकूतिजो यज्ञनामा । ऐतरेयो महिदासः । धर्मजत्रयं नारायणो हरिः कृष्ण इत्येतन्नामकम् । तापसमनुः स्वयं साक्षान्नारायणः । तदेव विशदयति ।। नाणुमात्रेति । इयं च लक्ष्म्याः संभूतिरित्यस्यापि साक्षादवतारत्वप्रतीतिवारणाय प्रमाणेनैव तात्पर्यमाह ।। तत्रेति । यत्र यस्याः स्त्रियः पतिरूपे पुरुषे हरिः संन्निहितस्तत्र तस्यां स्त्रियाम् । ननु पृथ्वादौ पुरुषे हरेः संन्निहितत्वाद्रमा साक्षादेव रुक्मिण्यादिवत्प्रादुर्भूता तत्पत्नीत्वं प्राप्नेति किं न स्यादित्यत आह ।। नास्येति । अस्य हरेर्जीवान्तरे संनिधानमात्रेणेत्यर्थः । अतस्तत्र तत्पत्न्यां रमाविष्टा भवतीत्येव वक्तव्यमित्यर्थः । तर्हि कुत्र रमा साक्षात्पत्नीत्वं प्राप्नोतीत्यपेक्षायामाह ।। साक्षादेवेति । यत्र यदा रामकृष्णादि-रूपेण हरिः साक्षादेव भवति । तत्र तदा रमा साक्षाद्धरेः पत्नीत्वमाव्रजेत् । तदैव क्वचित् स्त्र्यन्तरे संनिधितश्च पत्नीत्वमाव्रजेत् । अस्योदाहरणमाह ।। गोप्यादिरूपेति । यथा गोप्यादिसंनिहितेत्यर्थः । आदिपदाज्ज्रांबवत्यादीनां ग्रहणम् । यथा रमाऽन्यत्राविष्टाऽपि साक्षादवतीर्णहरिपत्नी भवति तथा हरिरन्यत्राविष्टः साक्षादवतीर्णरमापतिः क्वचिद्भवति किं नेत्याह ।। विपरीतमिति । विपरीतं यथा साक्षादवतीर्णस्य हरेरन्यत्राविष्टा रमा पत्नी भवति । तथाऽन्यत्राविष्टस्य हरेः साक्षात्पत्नी नैव भवतीत्यर्थः । तथा च भगवत्कलां पृथ्वाविष्टाम् ।।

एतस्मिन्विष्णोः कला संनिहिताऽस्ति । इयमस्या लक्ष्म्याः संभूतिः कला संनिहिता यतः सा पुरुषस्य हरेरनपायिन्यवियोगिनीति मूलं व्याख्येयमिति भावः ।। ५० ।।

इति श्रीमद्भागवते चतुर्थस्कन्दे चतुर्थशोऽध्यायः ।। १४ ।।

## अथ पञ्चदशोऽध्यायः

विप्रा ऊचुः–

अत्र तु प्रथमो राज्ञां पुमान् प्रथयिता यशः ।
पृथुर्नाम महाराजा भविष्यति पृथुश्रवाः ॥ १ ॥

इयं च देवी सुदती गुणभूषणभूषणा ।
अर्चिर्नाम वरारोहा पृथुमेवावरुन्धती ॥ २ ॥

**प्रकाशिका** – ॥ हरिः ॐ ॥ सुदती शोभनदंतवती । गुणानां भूषणानां च भूषणा भूषणरूपा वरो वरणीय आरोहो नितंबो यस्याः । अवरुंधती पतित्वेन स्वीकुर्वाणा भविष्यतीत्यर्थः ॥ २ ॥

एष साक्षाद्धरेरंशो जातो लोकरिरक्षया ।
इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥ ३ ॥

**तात्पर्यम्** – तत्र सन्निहितः साक्षाद्भगवान् । 'ब्रह्मण्यनन्ते गरुडे रुद्रे कामे शचीपतौ । अनिरुद्धे मनौ चैव पृथौ च कृतवीर्यजे । नारदे चैवमाद्येषु विशेषात्सन्निधिर्हरेः । सुदर्शनादिष्वस्त्रेषु तथा सन्निहितो हरिः । नरलक्ष्मणौ बलश्चैव शेषस्यांशाः प्रकीर्तिताः । तथा भरतशत्रुघ्नौ चक्रशङ्खावुदाहृतौ । प्रद्युम्नश्च कुमारश्च स्कन्दः कामांशजाः स्मृता' इति स्कान्दे । 'वैन्ये पृथौ सन्निहितो राजरूपी जनार्दन' इति ब्राह्मे ॥ ३ ॥

**प्रकाशिका** – एष इति । अत्र पृथोः साक्षाद्धरेरंशत्वोक्तिर्विशेषावेशत इत्युक्तम् । तथात्वे योजना कथमित्यतस्तां सूचयति ॥ तत्रेति । पृथावित्यर्थः । तथा चैष इति प्रथमा सप्तम्यर्थे सप्तसु प्रथमेति सूत्रादित्याशयः । पृथौ हरेर्विशेषावेश इत्यत्र दार्ढ्याय प्रमाणान्तरमप्याह ॥ ब्रह्मणीति । अनन्ते शेषे मनौ स्वायंभुवे । एवकारद्वयं चशब्दार्थे । तथा चानिरुद्धे च मनौ च पृथौ च कृतवीर्यजे च कार्तवीर्यार्जुने च नारदे चेति योजनीयम् । तथा संनिहितो विशेषेण संनिहितः । एवं नरलक्ष्मणादिष्वपि भगवतो विशेषावेशोऽस्ति तेषां विशेषावेशवदनन्तांशवत्त्वादित्याह ॥ नरलक्ष्मणाविति । शेषस्यांशाः शेषे च विशेषावेष उक्तः । अतस्तेऽपि विशेषाद्धरिसंनिधिमन्त इत्याशयः । चक्रशंखौ चक्रशंखांशौ । भरतश्चक्रांशः शत्रुघ्नः शंखांशः । सुदर्शनादिषु च हरेर्विशेषावेश उक्तः । अतस्तदंशयोरनयोरस्तीति भावः । पृथौ विशेषतः संनिहितस्य हरेर्नामप्रदर्शनाय प्रमाणान्तरं पठति ॥ वैन्य इति । वेनस्यापत्यं पुमान्वैन्यः । तस्मिन्

राजरूपी राजराजनामा ॥ ततश्चायं मूलार्थः ॥ एष एतस्मिन्हरेः साक्षादंशो राजराजनामा जातः प्रादुर्भूतः । इयमस्यामर्चिनाम्न्यामनुजज्ञे प्रादुर्भूता ॥ ३ ॥

**मैत्रेय उवाच–**

**प्रशंसन्ति स्म तं विप्रा गन्धर्वप्रमुखा जगुः ।**
**मुमुचुः सुमनोधाराः सिद्धा नृत्यन्ति तत्स्त्रियः ॥ ४ ॥**

**शङ्खतूर्यमृदङ्गाद्या नेदुर्दुन्दुभयो दिवि ।**
**तत्र सर्व उपाजग्मुर्देवर्षिपितॄणां गणाः ॥ ५ ॥**

**प्रकाशिका** – तत्स्त्रियोऽप्सरसो नृत्यन्ति स्म ॥ ४,५ ॥

**ब्रह्मा जगद्गुरुर्देवः सहागत्य सुरेश्वरैः ।**
**वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः ॥ ६ ॥**

**प्रकाशिका** – चिन्हं रेखात्मकं चक्रम् ॥ ६ ॥

**पादयोररविन्दं च तं वैमेने हरेः कलाम् ।**
**यस्याप्रतिहतं चक्रमंशस्य परमेष्ठिनः ॥ ७ ॥**

**प्रकाशिका** – अरविन्दं रेखात्मकम् । तं तस्मिन् । षट्सु द्वितीयेति सूत्रात् । तस्मिन्हरेः कलाऽस्तीत्यत्र ज्ञापकान्तरमप्याह ॥ यस्येति । यस्य राज्ञश्चक्रमाज्ञाऽप्रतिहतं केनापि प्रतिहतं न भवति । स तस्मिन्परमेष्ठिनो हरेरंशः प्रमाणप्रसिद्धः । पृथ्वाज्ञा यस्मात् न प्रतिहता । अतोऽस्मिन्परमेष्ठिनो हरेरंशोऽस्तीति ज्ञायत इति भावः ॥ ७ ॥

**तस्याभिषेक आरब्धो ब्राह्मणैर्ब्रह्मवादिभिः ।**
**आभिषेचनिकान्यस्मै आजह्रुः सर्वतो जनाः ॥ ८ ॥**

**सरित्समुद्रा गिरयो नागा गावः खगा मृगाः ।**
**द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम् ॥ ९ ॥**

**सोऽभिषिक्तो महाराजः सुवासाः साध्वलङ्कृतः ।**
**पत्न्याऽर्चिषाऽलङ्कृतया विरेजेऽग्निरिवापरः ॥ १० ॥**

प्रकाशिका – अभिषेचनिकान्यभिषेकसाधनानि ॥ ८-१० ॥

**तस्मै जहार धनदो हैमं वीर वरासनम् ।**
**वरुणः सलिलस्रावमातपत्रं शशिप्रभम् ॥ ११ ॥**

प्रकाशिका – हे वीर । वरासनं सिंहासनम् । सलिलस्यामृतरूपस्य बिंदुरूपेण स्रावो यस्मात्तत्तथा ॥ ११ ॥

**वायुश्च वालव्यजने धर्मः कीर्तिमयीं स्रजम् ।**
**इन्द्रः किरीटमुत्कृष्टं दण्डं संयमनं यमः ॥ १२ ॥**

प्रकाशिका – वालव्यजने चामरे ॥ १२ ॥

**ब्रह्मा ब्रह्ममयं वर्म भारती हारमुत्तमम् ।**
**हरिस्सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम् ॥ १३ ॥**

प्रकाशिका – तस्य हरेः पत्नी लक्ष्मीः ॥ १३ ॥

**दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाऽम्बिका ।**
**सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम् ॥ १४ ॥**

प्रकाशिका – दशचन्द्रं तन्नामकासिं खड्गं शतचन्द्रं तन्नामकं चर्म । अमृतमयान् अत्यन्तशुभ्रान् त्वष्टा विश्वकर्मा रूपाश्रयं सुंदरम् ॥ १४ ॥

**अग्निराजगवं चापं सूर्यो रश्मिमयानिषून् ।**
**भूः पादुके योगमये द्यौः पुष्पबलिमन्वहम् ॥ १५ ॥**

प्रकाशिका – आजगवं तन्नामकं रश्मिमयान् रश्मिदेवताभिमन्यमानान् योगमये पादस्पर्शमात्रेणाभीष्टप्रापके । पुष्पबलिं पुष्पलक्षणपूजाम् ॥ १५ ॥

**नाट्यं सुगीतं वादित्रमन्तर्धानं च खेचराः ।**
**ऋषयश्चाशिषः सत्यां समुद्रः शङ्खमात्मजम् ॥ १६ ॥**

प्रकाशिका – नाट्यादिकौशलं खेचरा देवाः । अन्तर्धानमदृश्यताम् । सत्या अमोघाः । आत्मजं स्वस्मिन् जातम् ॥ १६ ॥

**सिन्धवः पर्वता नद्यो रथवीथीर्महात्मनः ।**
**सूतोऽथ मागधो बन्दी संस्तोतुमुपतस्थिरे ॥ १७ ॥**

**प्रकाशिका –** रथवीथी रथमार्गान् । उपतस्थिरे उपस्थिताः ॥ १७ ॥

**स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान् ।**
**मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत् ॥ १८ ॥**

**प्रकाशिका –** स्तावकान् स्तोतुमुद्यतान् अभिप्रेत्य ज्ञात्वा मेघनिर्ह्रादवन्मेघध्वनिवद्ध्वनिर्यस्याः सा तथा ॥ १८ ॥

**पृथुरुवाच–**

**हे सूत हे मागध सौम्य बन्दिन् लोकेऽधुनाऽस्पष्टगुणस्य मे स्यात् ।**
**किमाश्रयो मे स्तव एष योज्यतां मा मय्यभूवन् वितथा गिरो वः ॥१९॥**

**प्रकाशिका –** लोकेऽधुनाऽस्पष्टगुणस्य मे मामुद्दिश्य वो युष्मत्कर्तृकस्तवो गुणवत्ताज्ञापकशब्दसमूहः किमाश्रयः स्यात् । कं गुणामाश्रित्य वर्तमानः स्यात् । निर्विषयः स्यादिति यावत् । अतोऽधुना मयि मद्विषये प्रयुक्ता वो गिरः स्तुतिरूपा वितथा विगतार्था माऽभूवन् भवितुं नार्हन्ति । किन्तु कालान्तरे स्पष्टगुणस्य मे एष्यत्स्तवं योज्यताम् । तथात्वे सार्थका भविष्यन्तीत्याशयः ॥ १९ ॥

**तस्मात् परोक्षेऽस्मदुपाश्रितान्यलं करिष्यथ स्तोत्रमपीड्यवाचः ।**
**सत्युत्तमश्लोकगुणानुवादे जुगुप्सितं न स्तवयन्ति सभ्याः ॥ २० ॥**

**प्रकाशिका –** एतदेवाह ॥ तस्मादिति । तस्मादिदानीमस्पष्टगुणत्वात्परोक्षे कालान्तरेऽस्मदुपाश्रितानि स्पष्टानि कर्माण्याश्रित्यालमत्यर्थम् । स्तोत्रं करिष्यथ । भूषणं कुर्वन्तु । अपीड्यवाचोऽबाधितार्थकवाचः । अनेनेदानीं स्तवने वाचां बाध्यार्थत्वरूपं पीड्यत्वं स्यादिति सूचयति। अभ्युपेत्य चेदमुदितं वस्तुतस्त्वात्मस्तुतिश्रवणं सर्वदा महद्भिर्न कार्यमित्याशयेनाह ॥ सत्युत्तमेति । उत्तमश्लोको हरिस्तद्गुणानुवादेन तत्स्तोत्रे श्राव्यतया विद्यमाने सति जुगुप्सितं स्वात्मानं सभ्या महान्तो न स्तवयन्ति स्तावयन्ति । अन्यकृतं स्वात्मस्तोत्रं न शृण्वन्तीत्याशयः ॥ २० ॥

**महद्गुणानात्मनि कर्तुमिच्छन् कः स्तावकैः स्तावयते सतोऽपि ।**
**स वै भविष्यन्निति विप्रलब्धो जनापहासं कुमतिर्न वेद ॥ २१ ॥**

**प्रकाशिका** – गुणानामप्राकट्ये स्वात्मप्राकट्ये स्वात्मप्रशंसा सर्वथा न श्रोतव्येत्यप्याह ॥ महद्गुणानिति । महतामिन्द्रादीनां गुणान् आत्मनि स्वस्मिन् उत्तरत्र संपादयितुमिच्छन्को विवेकी स्तावकैर्युष्माभिः पूर्वमसतो गुणान् स्तावयते न कोपीत्यर्थः । ननु तथाविधो राजादिर्लोके दृश्यत इत्याशङ्कायां स मूर्ख इत्याह ॥ स वा इति । इहलोके विप्रलब्धः स्वात्मन्यविद्यमानगुणप्रतिपादकशब्दैः स्तुतो भवेत्स जनापहासं विवेकिजनैः क्रियमाणमपहासं न वेद । अत एव कुमतिर्मूर्खः ॥ २१ ॥

**प्रभवो ह्यात्मनः स्तोत्रं जुगुप्सन्त्यपि विश्रुताः ।**
**ह्रीमन्तः परमोदाराः पौरुषं वा विगर्हितम् ॥ २२ ॥**

**प्रकाशिका** – विवेकिनां प्रभूणां नैवं स्थितिरित्याह ॥ प्रभवो हीति । प्रकर्षेण भवन्तीति प्रभवो विवेकिनो विश्रुताः प्रख्यातगुणा अपि जुगुप्सन्ति निन्दन्ति । वाशब्द उपमायाम् । वा विकल्पोपमानयोरित्यभिधानात् । तथा च विगर्हितं पौरुषं ब्राह्मणवधादिविषयपराक्रमं तद्विषयकं स्वस्तोत्रं जुगुप्सन्ति यथैवेति ॥ २२ ॥

**वयं त्वविदिता लोके सूताद्या अपि वरीमभिः ।**
**कर्मभिः कथमात्मानं गोपयिष्याम बालवत् ॥ २३ ॥**

**प्रकाशिका** – हे सूताद्याः । वरीमभिः श्रेष्ठैः ॥ २३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः ।

**मैत्रेय उवाच–**

**इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः ।**
**तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥ १ ॥**

**प्रकाशिका** – ॥ हरिः ॐ ॥ गायकाः सूतादयः ॥ १ ॥

**सूत उवाच–**

**नालं वयं ते महिमानुवर्णने यो देवदेवोऽवततार मायया ।**
**वेनाङ्गजातस्य च पौरुषाणि ते वाचस्पतीनामपि बभ्रमुर्धियः ॥ २ ॥**

**प्रकाशिका** – नालं न समर्थाः । ते त्वत्संन्निहितस्य हरेः । मायया भक्तानुकंपेच्छयाऽवततार। वेनस्यांगाच्छरीराज्जाते पृथौ विशेषेण संन्निहितस्य । अतसातत्यगमन इति धातोः। ते पौरुषाणि पराक्रमान् प्रति । तदनुवर्णन इति यावत् । वाचस्पतीनां ब्रह्मादीनामपि धियो बभ्रमुः । धियां भ्रमे कुतो वाचामवकाश इत्याशयः । कुतः । पुनस्तद्वर्णने वयं समर्था भवेम ॥ २ ॥

**अथाप्युदारश्रवसः पृथोर्हरेः कलावतारस्य कथामृतादृताः ।**
**यथोपदेशं मुनिभिः प्रचोदिताः श्लाघ्यानि कर्माणि वयं वितन्महे ॥ ३ ॥**

**प्रकाशिका** – अथाऽपि साकल्येन वर्णयितुमशक्ता अपि पृथोः पृथ्वाविष्टस्य कथामृते आदृता आदरयुक्ताः । यथोपदेशं मुनिभिः । पूर्वमुपदिष्टप्रकारमनतिक्रम्य तेनैव प्रचोदिताः सन्तो वितन्महे विस्तारयामः ॥ ३ ॥

**एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन् ।**
**गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम् ॥ ४ ॥**

**प्रकाशिका** – तत्परिपंथिनां धर्मसेतुविरोधिनाम् ॥ ४ ॥

**एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः ।**
**काले काले यथाभागं लोकयोरुभयोर्हितम् ॥ ५ ॥**

**प्रकाशिका** – एषः पृथौ संन्निहितो हरिस्तनौ स्वदेहे तनूः स्वशक्तीलक्षणा मूर्तीः । तच्छक्तिरिति यावत् । काले काले विभर्ति । यथाभागं यज्ञादिना स्वर्लोकस्य वर्षणादिना भूलोकस्येति भागमनतिक्रम्योभयोर्लोकयोर्हितं बिभर्ति ॥ ५ ॥

**वसु काल उपादत्ते काले चायं विमुञ्चति ।**
**समः सर्वेषु भूतेषु प्रतपन् सूर्यवद् विभुः ॥ ६ ॥**

**प्रकाशिका** – सूर्यादिदेवशक्तिधारणमस्याहुर्वस्वित्यष्टभिः । वसु धनं करदानकाले आदत्ते । दुर्भिक्षादिकाले विमुंचति प्रजाभ्यः स्वयं धनं ददाति । यथा सूर्यो ग्रीष्मादौ वसु जलमादत्ते । वर्षासु मुंचति तद्वत् । समो यथायोग्यं दण्ड्यादिषु प्रतपन् प्रतापं कुर्वन् । अन्यत्र यथर्तु प्रतपन् ॥ ६ ॥

**तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि ।**
**भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान् ॥ ७ ॥**

**प्रकाशिका** – क्षितेर्वृत्तिः सहनं सोऽस्यास्तीति क्षितिवृत्तिमान् ॥ ७ ॥

**देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः ।**
**कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत् ॥ ८ ॥**

**प्रकाशिका** – देवेऽवर्षत्यनावृष्टौ सत्यां बुभुक्षया कृच्छ्रंगताः प्राणाः यासां ताः प्रजाः स्वयं वृत्तिं दत्वा रक्षिष्यति ॥ ८ ॥

**आप्याययत्यसौ लोकं वदनामृतमूर्तिना ।**
**सानुरागावलोकेन विशदस्मितचारुणा ॥ ९ ॥**

**प्रकाशिका** – वदनमेवामृतमूर्तिश्चन्द्रस्तेन सानुरागावलोको यस्मिन् । विशदस्मितेन चारुणा । वर्तमाननिर्देशो वर्तमानसामीप्यात् ॥ ९ ॥

**अव्यक्तवर्त्मैष विशुद्धकार्यो गम्भीरचेता उपगुप्तवित्तः ।**
**अनन्तमाहात्म्यगुणैकधामा पृथुः प्रचेता इव संवृतात्मा ॥ १० ॥**

**प्रकाशिका** – अव्यक्तवर्त्मा न व्यक्तं वर्त्म प्रवेशनिर्गमनयोर्मार्गो यस्याव्यक्तानां योगिनां वर्त्म यस्य । निगूढं निष्पत्तेः पूर्वमज्ञातं कार्यं यस्योपगुप्तं सुरक्षितं वित्तं यस्य स तथा । अनन्तमाहात्म्योपेतानां गुणानामेकधामा मुख्याश्रयः । संवृतात्मा सम्यगाच्छादितस्वरूपः । प्रचेता इव वरुण इव । समुद्राभिमानिनो वरुणस्याप्येते गुणा द्रष्टव्याः ॥ १० ॥

**दुरासदो दुर्विषह आसन्नोऽपि विदूरवत् ।**
**नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥ ११ ॥**

**प्रकाशिका** – अग्निशक्तिं दर्शयति ॥ दुरासद इति । शत्रोर्मनसाऽपि प्राप्तुमशक्यः । दुर्विषहः शत्रुभिः सोढुमशक्यः । विदूरवत्पौरुषेणाभिभवितुमशक्यः । वेन एवारणिस्तस्मादुत्थितः अनल इवानलः ॥ ११ ॥

**अन्तर्बहिश्च भूतानां पश्यन् कर्माणि चारणैः ।**
**उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम् ॥ १२ ॥**

**प्रकाशिका** – चारणैः गूढचारिभृत्यैः कर्माणि स्वस्तुतिनिन्दारूपाणि पश्यन् जानन्नप्युदासीन इव वर्तिष्यते । अध्यक्षोऽधिपतिः । देहिनामात्मान्तर्यामी । अध्यक्षो वायुर्मुख्य-प्राण इव । प्राणपक्षे चारणैरन्तःश्वाससंचारविशेषैः ॥ १२ ॥

**नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि ।**
**दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः ॥ १३ ॥**

**प्रकाशिका** – आत्मद्विषां सुतमिति सुतग्रहणं तस्य स्वसुतसाम्यबुद्धिप्रदर्शनाय धर्मपथे यमधर्ममार्गे ॥ १३ ॥

**अस्याप्रतिहतं चक्रं पृथोरामानसाचलात् ।**
**वर्तते भगवानर्को यावत् तपति गोगणैः ॥ १४ ॥**

**प्रकाशिका** – चक्रमाज्ञा सेना वा रथचक्रं वा । आमानसाचलमभिव्याप्य प्रवर्तते । कियत्पर्यन्तमित्यत आह ॥ अर्केति । अर्को गोगणै रश्मिसमूहैर्यावत्तपति तावत् ॥ १४ ॥

**रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः ।**
**अथामुमाहू राजानं मनोरञ्जनकैः प्रजाः ॥ १५ ॥**

**प्रकाशिका** – मनोरंजनकैरात्मचेष्टितै रंजयिष्यतीति यद्यस्मादथ तस्मात् ॥ १५ ॥

**दृढव्रतः सत्यसन्धो ब्रह्मण्यो वृद्धसेवकः ।**
**शरण्यः सर्वभूतानां मानदो दीनवत्सलः ॥ १६ ॥**

**मातृभक्तिः परस्त्रीषु पत्न्यामर्ध इवात्मनः ।**
**प्रजासु पितृवत् स्निग्धः किङ्करो ब्रह्मवादिनाम् ॥ १७ ॥**

**प्रकाशिका –** मातरिव भक्तिर्भजनं यस्य । आत्मनो देहस्यार्धे इव पत्न्यां प्रीतिमान् ॥ १७ ॥

**देहिनामात्मवत् प्रेष्ठः सुहृदानन्दवर्धनः ।**
**मुक्तसङ्गप्रसङ्गोऽयं दण्डपाणिरसाधुषु ॥ १८ ॥**
**एष दोग्धा महीं वीरो गां सतीमोजसौषधीः ।**
**समां करिष्यते चेमां धनुः कोट्या समन्ततः ॥ १९ ॥**

**प्रकाशिका –** आनन्दवर्धन आनन्दवृद्धिकरः । मुक्तसङ्गेषु परमहंसेषु प्रकृष्टः सङ्गो यस्य । असाधुषु शिक्षाविषये दण्डपाणिर्यम इव स्थितः ॥ १८.१९ ॥

**अयं तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयाऽवतीर्णः ।**
**यस्मिन्नविद्यारचितं निरर्थकं पश्यन्ति नानात्वमिव प्रतीतम् ॥ २० ॥**

**तात्पर्यम् – यल्लोके निरर्थकं तद्भगवद्रूपेषु प्रतीतनानात्वदृष्टान्तेन पश्यन्ति सन्तः । 'मत्स्यरूपादिनानात्वदृष्टिवद्यन्निरर्थकमि'ति पाद्मे । 'एवं धर्मान्पृथक् पश्यन्नि'ति च ॥ २० ॥**

**प्रकाशिका –** ननु मनुष्यदेहधारिणि पृथौ कथमुक्ता एते गुणा इत्यतोऽस्माभिः स्तुतोऽयं हरिरेवेति स्पष्टमाहुः ॥ अयं त्विति । अयं पृथौ संनिहितः । तुशब्दो विशेषसंन्निधिसूचकः । साक्षादनुपचारेण त्रयाणां लोकानामधीशः कूटस्थो निर्विकारः । आत्माऽऽदानादिकर्ता परमात्मकलया राजराजरूपेण । तस्मादुक्तगुणा उपपन्ना इति शेषः । नन्वेवं भगवति नानाविध-जगदादानादिकर्तृत्वोक्त्या नानात्वं प्राप्तमित्यतस्तत्प्रतीतेर्भ्रान्तित्वमवश्यं कल्प्यमित्याशयेनाह ॥ यस्मिन्निति । अत्र जगतो मिथ्यात्वमुच्यत इति प्रतीतिवारणायापेक्षितमध्याहारं दर्शयंस्तात्पर्यमाह ॥ यल्लोक इति । निरर्थकमविद्यमानविषयकं गन्धर्वनगरादिज्ञानम् । यस्मिन्नित्यस्य तात्पर्यम् ॥ भगवद्रूपेष्विति । प्रतीतं नानात्वमिवेत्यस्यार्थः ॥ प्रतीयमाननानात्व-दृष्टान्तेनेति । नानात्वप्रतीतिदृष्टान्तेनेत्यर्थः । तथा च यत्तच्छब्दयोर्लोके सन्त इत्येतयोश्चाध्याहार इति ज्ञातव्यम् । अत्र प्रमाणसंवादं दर्शयति ॥ मत्स्येति । आदिपदेन कूर्मरूपादिग्रहणम् । निरर्थकमविद्यमानविषयकं ज्ञानम् । यस्मिन्नित्यस्य यद्धर्मेष्वपि व्याख्यानमभिप्रेत्य भगवद्धर्मेषु नानात्वप्रतीतेर्भ्रमत्वे प्रमाणमाह ॥ एवं धर्मानिति । एवं श्रुतिश्चास्तीति शेषः । यथा पर्वतेषु दुर्गे

वृष्टमुदकमधो धावति । एवं धर्मात् भगवतः परस्परं च पृथग्भिन्नानि पश्यन् तानेव यथा दृष्टान् धर्मानन्वेव तद्दर्शनमन्वेवाधो धावतीति श्रुत्यर्थः । अत्र भगवद्धर्माणां भेदज्ञानेनानर्थोक्त्या तत्ज्ञानस्याविद्यमानविषयकत्वमर्थात्प्राप्तमित्यवगन्तव्यम् ॥ तथा चायं मूलार्थः ॥ अविद्ययेश्वरेच्छया रचितं कल्पितं यल्लोके निरर्थकमविद्यमानविषयकं गन्धर्वनगरादिज्ञानं तत्सन्तो यस्मिन्यदीयरूपेषु धर्मेषु च प्रतीतं नानात्वमिव नानात्वप्रतीतिमिव । तद्दृष्टान्तेनेति यावत् । पश्यन्ति । तद्वदिदं भ्रमरूपमिति जानन्तीत्यर्थः । सोऽयमिति पूर्वार्धेनान्वयः । तथा चाविद्यमानविषयकगन्धर्वनगरादिज्ञानस्य भ्रमत्वे भगवद्रूपनानात्वप्रतीतेर्दृष्टान्तपूर्वकतया तत्ज्ञानिभिरुपादानात्तस्य भ्रमत्वं निश्चितमिति ज्ञातव्यम् । अन्यथा दृष्टान्ततया उपादानासंभवादित्याशयः ॥ २० ॥

**अयं भुवो मण्डलमोदयाद्रेर्गोप्तैकवीरो नरदेवनाथः ।**
**आस्थाय जैत्रं रथमात्तचापः पर्यस्यते दक्षिणतो यथाऽर्कः ॥ २१ ॥**

**प्रकाशिका** – पुनस्तद्गुणानाहुः ॥ अयमिति । आउदयाद्रेरुदयपर्वतपर्यन्तं गोप्ता गोपयिष्यति । तदर्थं दक्षिणतः पर्यस्यते पर्यटिष्यति प्रदक्षिणं करिष्यतीत्यर्थः ॥ २१ ॥

**तस्मै नृपालाः किल तत्र तत्र बलिं हरिष्यन्ति सलोकपालाः ।**
**मंस्यन्ति एषां स्त्रिय आदिराजं चक्रायुधं तद्यश उच्चरन्त्यः ॥ २२ ॥**

**अयं महीं गां दुदुहेऽधिराजः प्रजापतिर्वृत्तिकरः प्रजानाम् ।**
**यो लीलयाऽद्रीन् स्वशरासकोट्या भिन्दन् समां गामकरोद् यथेन्द्रः ॥ २३ ॥**

**प्रकाशिका** – तस्मै तथा प्रदक्षिणं कुर्वते । मंस्यन्ति ज्ञास्यन्ति । उच्चरन्त्यः कीर्त्यंयंत्यः ॥ २२,२३ ॥

**विस्फूर्जयन्नाजगवं धनुः स्वं यदाऽचरत् क्ष्मामविषह्य आजौ ।**
**तदा निलिल्युर्दिशि दिश्यसन्तो लाङ्गूलमुद्यम्य यथा मृगेन्द्रः ॥ २४ ॥**

**प्रकाशिका** – लांगूलं पुच्छमुद्यम्य यथा मृगेन्द्रश्चरति । तथा धनुर्विस्फूर्जयन् यदा क्ष्मामचरस्तत्तदा निलिल्युः । निलीना इत्यन्वयः ॥ २४ ॥

**एषोऽश्वमेधाञ्छतमाजहार सरस्वती प्रादुरभूद्धि यत्र ।**
**अहार्षीद् यस्य हयं पुरन्दरः शतक्रतुश्चरमे वर्तमाने ॥ २५ ॥**

**प्रकाशिका** – प्रादुरभावि प्रादुरभूत् । तत्राहार्षीदित्यनेनास्य प्रतिभटः शतक्रतुरेव नान्य इति द्योतनाय कथितमिति ज्ञातव्यम् ॥ २५ ॥

**एष स्वसद्मोपवने समेत्य सनत्कुमारं भगवन्तमेकम् ।**
**आराध्य भक्त्याऽलभतामलं तत् ज्ञानं यतो ब्रह्म परं वदन्ति ॥ २६ ॥**

**प्रकाशिका** – पृथुमेव लक्षीकृत्याहुः ॥ एष इति । यतो ज्ञानात्परं ब्रह्म प्रत्यक्षं भवतीति वदन्ति योगिनस्तत् ॥ २६ ॥

**तत्र तत्र गिरस्तास्ता इति विश्रुतविक्रमः ।**
**श्रोष्यत्यात्माश्रिता गाथाः पृथुः पृथुपराक्रमः ॥ २७ ॥**

**प्रकाशिका** – तद्भविष्यत्कथातीतत्वेन कथं कथ्यत इत्यत्रोच्यते ॥ तत्रेति । विश्रुतविक्रम आत्माश्रिताः स्वविषयास्त्रिभिः षड्भिश्चरणैरुपलक्षिता यशोनिबन्धाः ॥ २७ ॥

**दिशो विजित्याप्रतिरुद्धचक्रः स्वतेजसोत्पाटितलोकशल्यः ।**
**एवं सुरेन्द्रैरनुगीयमानो महानुभावो भविता पतिर्भुवः ॥ २८ ॥**

**प्रकाशिका** – अप्रतिरुद्धचक्रोऽप्रतिहतपराक्रमः । उपगीयमानो महानुभावो यस्य ॥ २८ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे षोडशोऽध्यायः ॥ १६ ॥

## अथ सप्तदशोऽध्यायः ।

**मैत्रेय उवाच–**

**एवं स भगवान् वैन्यः ख्यापितो गुणकर्मभिः ।**
**छन्दयामास तान् कामैः प्रतिपूज्याभिनन्द्य च ॥ १ ॥**

**ब्राह्मणप्रमुखान् वर्णान् भृत्यामात्यपुरोधसः ।**
**पौरान् जानपदान् श्रेणीः प्रकृतीः समपूजयत् ॥ २ ॥**

**तात्पर्यम् – 'राज्ञा समानवयसः श्रेणयस्त्वङ्गरक्षका' इत्यभिधानम् ॥ २ ॥**

**प्रकाशिका –** ॥ हरिः ॐ ॥ श्रेणीरित्यस्य तैलकतांबूलकादीनिति व्याख्यानम-प्रामाणिकमित्याशयेन प्रमाणेनैव तदर्थमाह ॥ राज्ञेति । तुशब्दोऽवधारणार्थः । तेनानभिमतार्थ-निरासः । तथा च श्रेणीः स्वसमानवयसोऽगरक्षकानिति व्याख्येयमिति भावः ॥ २ ॥

**विदुर उवाच–**

**कस्माद् दधार गोरूपं धरित्री बहुरूपिणी ।**
**यां दुदोह पृथुस्तत्र को वत्सो दोहनं च किम् ॥ ३ ॥**

**प्रकाशिका –** दोहनं पात्रम् ॥ ३ ॥

**प्रकृत्या विषमा देवी कृता तेन समा कथम् ।**
**तस्य मेध्यं हयं देवः कस्य हेतोरपाहरत् ॥ ४ ॥**

**सनत्कुमाराद् भगवतो ब्रह्मन् ब्रह्मविदुत्तमात् ।**
**लब्ध्वा ज्ञानं सविज्ञानं राजर्षिः कां गतिं गतः ॥ ५ ॥**

**प्रकाशिका –** मेध्यं यज्ञार्हम् ॥ ४,५ ॥

**यच्चान्यदपि कृष्णस्य ब्रह्मन् भगवतः प्रभोः ।**
**श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम् ॥ ६ ॥**

**तात्पर्यम् – पूर्वतनानां कथासम्बन्धेन हरेर्यशः ॥ ६ ॥**

**प्रकाशिका –** कृष्णस्य हरेः सुष्ठु श्रवो यस्य कृष्णस्य । पूर्वदेहः पृथुदेहस्तत्कथाश्रयमिति प्रतीतिवारणाय पूर्वदेहकथाश्रयमित्यस्य विवक्षितमर्थमाह ॥ पूर्वतनानामिति । श्रव इत्यस्यार्थः

यश इति । तथा च पूर्वो देहो येषां ते पूर्वदेहाः पुरातना अतीतराजानस्तत्कथाश्रयं तत्कथासंबद्धं श्रवो यश इति व्याख्यानं सूचयति ॥ ६ ॥

**भक्ताय मेऽनुरक्ताय तव चाधोक्षजस्य च ।**
**वक्तुमर्हसि योऽदुह्यद् वैन्यरूपेण गामिमाम् ॥ ७ ॥**

**प्रकाशिका** – तव चाधोक्षजस्य च भक्ताय । अदुह्यद्दुग्धवान् । गां भूमिम् ॥ ७ ॥

**श्रीशुक उवाच** –

**चोदितो विदुरेणैवं वासुदेवकथां प्रति ।**
**प्रशस्य तं प्रीतमना मैत्रेयः प्रत्यभाषत ॥ ८ ॥**

**प्रकाशिका** – त्वयाऽहं यथा चोदित एवं विदुरेणेति ॥ ८ ॥

**मैत्रेय उवाच**–

**यदाऽभिषिक्तः पृथुरङ्ग विप्रैरामन्त्रितो जनतायाश्च पालः ।**
**प्रजा निरन्ने क्षितिपृष्ठ एत्य क्षुत्क्षामदेहाः पतिमभ्यवोचन् ॥ ९ ॥**

**प्रकाशिका** – हे अङ्ग । यदा जनतायास्त्वं पाल इत्यामन्त्रितो नियुक्तश्च तदा क्षितिपृष्ठे क्षितितले निरन्ने भोजनपदार्थरहिते सति क्षुत्क्षामाः क्षीणा देहा यासां ताः प्रजापतिं पृथुमेत्याब्रुवन् ॥ ९ ॥

**प्रजा ऊचुः** –

**वयं राजन् जाठरेणाभितप्ता यथाऽग्निना कोटरस्थेन वृक्षः ।**
**त्वामद्य याताः शरणं शरण्यं यः शाधि नो वृत्तिकरः पतिर्नः ॥ १० ॥**
**तन्नो भवानर्हति रातवेऽन्नं क्षुधाऽर्दितानां नरदेवदेव ।**
**यावन्न नङ्क्ष्यामह उज्झितान्ना वार्तापतिस्त्वं किल लोकपालः ॥ ११ ॥**

**प्रकाशिका** – जाठरेण जठरसंबन्धिनाऽग्निना । कोटरं वृक्षविवरम् । यस्त्वं नोऽस्माकं वृत्तिकरः पतिर्यस्मादतो नोऽस्मान् शाधि । एवं कर्तव्यमित्यनुशिक्षस्व ॥ १०,११ ॥

**मैत्रेय उवाच**–

**पृथुः प्रजानां करुणं निशम्य परिदेवितम् ।**
**दीर्घं दध्यौ कुरुश्रेष्ठ निमित्तं सोऽन्वपद्यत ॥ १२ ॥**

पृथिव्यौषधिबीजानि निगीर्णान्यसति शास्तरि ।
तदहं देहिनां वृत्तिमात्मयोगेन साधये ॥ १३ ॥

**प्रकाशिका** – करुणं कृपाजनकम् । परिवेदितं विज्ञापितम् । निमित्तमन्नाभावस्य कारणमन्वपद्यत ज्ञातवान् ॥ १२,१३ ॥

इति व्यवसितो बुद्ध्या प्रगृहीतशरासनः ।
संदधे विशिखं भूमौ क्रुद्धस्त्रिपुरहा यथा ॥ १४ ॥

**प्रकाशिका** – इति व्यवसितः पृथिव्यामोषधीनां बीजानि निगीर्णान्यतो निरन्नेयमिति निश्चययुक्तः सन् । विशिखं बाणम् । त्रिपुरहा रुद्रः ॥ १४ ॥

प्रवेपमाना धरणी निशम्योदायुधं च तम् ।
गौः सत्यपाद्रवद् भीता मृगीव मृगयोर्द्रुतम् ॥ १५ ॥

तामेवान्वव्रजद् वैन्यः कुपितोऽत्यरुणेक्षणः ।
शरं धनुषि संधाय यत्र यत्र पलायति ॥ १६ ॥

**प्रकाशिका** – वेपृ कंपन इति धातुः । गौः सती गोरूपा । मृगुयुर्लुब्धको व्याघ्रो वा । तस्माद्भीता मृगीव ॥ १५,१६ ॥

सा दिशो विदिशो देवी रोदसी चान्तरं तयोः ।
धावती तत्र तत्रैनं ददर्शानूद्यतायुधम् ॥ १७ ॥

लोके नाविन्दत त्राणं वैन्यान्मृत्योरिव प्रजाः ।
त्रस्ता तदा निववृते हृदयेन विदूयता ॥ १८ ॥

अवोचाथ महाभागं धर्मज्ञाऽपन्नवत्सल ।
त्राहि मामपि भूतानां पालनेऽवस्थितो भवान् ॥ १९ ॥

**प्रकाशिका** – रोदसी द्यावापृथिव्यौ तयोरन्तरमंतरिक्षम् ॥ १७-१९ ॥

स त्वं जिघांससे कस्माद् दीनामकृतकिल्बिषाम् ।
अहनिष्यत् कथं योषां धर्मज्ञ इति यो मतः ॥ २० ॥

**प्रहरन्ति न वै स्त्रीषु कृतागःस्वपि जन्तवः ।**
**किमुत त्वद्विधा राजन् करुणा दीनवत्सलाः ॥ २१ ॥**

**प्रकाशिका –** यो धर्मज्ञ इति मतः स भवान्योषां स्त्रियं मां कथमहनिष्यद्धनिष्यति । एष्यत्तु निश्चितं यत्तु तदतीतत्वेन भण्यत इति वचनात् ॥ २०,२१ ॥

**मां निहत्याजरां नावं यत्र विश्वं प्रतिष्ठितम् ।**
**आत्मानं च प्रजाश्चेमाः कथमंभसि धास्यसि ॥ २२ ॥**

**प्रकाशिका –** अजरां नूतनामिव स्थिताम् । दृढमिति यावत् । धास्यसि धारयिष्यसि ॥ २२ ॥

**पृथुरुवाच –**

**वसुधे त्वां वधिष्यामि मच्छासनपराङ्मुखीम् ।**
**भागं बर्हिषि या वृङ्क्ते न तनोषि च नो वसु ॥ २३ ॥**

**प्रकाशिका –** या भवती बर्हिषि यज्ञे भूःस्वाहेति हुतं भागं हविर्वृंक्ते वृणोति सा त्वं वसु धान्यादिरूपम् ॥ २३ ॥

**यवसं जग्ध्यनुदिनं नैव दोग्ध्यौधसं पयः ।**
**तस्यामेवं हि दुष्टायां दण्डो नात्र न शस्यते ॥ २४ ॥**

**प्रकाशिका –** गोरूपां मां कथं हनिष्यसीत्यपेक्षायामाह ॥ यवसमिति । या गौर्यवसं तृणं जग्धि अत्ति । औधसमूधसि विद्यमानं पयो नैव दोग्धि पादप्रहारादिना या दोग्धॄन्पीडयति तस्यां गवि दण्डोऽत्र लोके न शस्यत इति न । किन्तु शस्यत एवेत्यर्थः । तथा च हविर्लक्षणं यवसं त्वमत्सि त्वत्स्थितं धान्यादिलक्षणं पयश्च न मुंचसि । अतो गोरूपाया अपि तव वध उचित एवेत्याशयः ॥ २४ ॥

**त्वं खल्वौषधिबीजानि प्राक् सृष्टानि स्वयम्भुवा ।**
**न मुञ्चस्यात्मरुद्धानि मामवज्ञाय मन्दधीः ॥ २५ ॥**

**प्रकाशिका –** मय्यसत्वादेव न मुंचामीत्यत आह ॥ त्वं खल्विति । खल्विति प्रमाणप्रसिद्धिं द्योतयति । तथा च ब्रह्मणा सृष्टान्यौषधबीजानि त्वयि सन्तीति प्रमाणप्रसिद्धमित्यर्थः । आत्मनि स्वदेहे । मामवज्ञाय । अस्मिन् भूपाले सति न मुंचामीति दुराग्रहबुद्धिरवज्ञा ॥ २५ ॥

**अमीषां क्षुत्परीतानामार्तानां परिदेवितम् ।**
**शमयिष्यामि तद्बाणैर्भिन्नायास्तव मेदसा ॥ २६ ॥**

**प्रकाशिका** – मद्वधे सर्वथाऽन्नं न स्यात्तथा च केन प्रजानां दुःखशान्तिं करिष्यसीत्यत आह ॥ अमीषामिति । परिवेदितं परिवेदनयाऽवगतं दुःखम् । मेदसा मांसविशेषेण ॥ २६ ॥

**पुमान् योषिदुत क्लीब आत्मसंभावनोऽधमः ।**
**भूतेषु निरनुक्रोशो नृपाणां तद्वधो वरः ॥ २७ ॥**

**प्रकाशिका** – यदुक्तं योषां कथं हनिष्यसीति तत्राह ॥ पुमानिति । वरः श्रेष्ठो न पापकारीत्यर्थः ॥ २७ ॥

**त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः ।**
**आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥ २८ ॥**

**एवं मन्युमयीं मूर्तिं कृतान्तमिव बिभ्रतम् ।**
**प्रणता प्राञ्जलिः प्राह मही संजातवेपथुः ॥ २९ ॥**

**प्रकाशिका** – यच्चोक्तं प्रजाश्चेमाः कथमंभसि धास्यतीति तत्राह ॥ त्वामिति । तिलशस्तिल-प्रमाणानि शकलानि नीत्वा कृत्वा । मायागामित्यनेन हत्यापापमपि नेति सूचयति । आत्मयोगबलेन स्वसामर्थ्येन ॥ २८,२९ ॥

**धरण्युवाच –**

**नमः परस्मै पुरुषाय मायया विन्यस्तनानातनवे गुणात्मने ।**
**नमः स्वरूपानुभवेन निर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये ॥ ३० ॥**

**तात्पर्यम् – 'ब्रह्मादिजीवदेहास्तु मायादेहाः प्रकीर्तिता' इति वाराहे ॥ ३० ॥**

**प्रकाशिका** – पृथ्वाविष्टो हरिरेवेदं करोतीति ज्ञात्वा धरा तं स्तौति ॥ नम इत्यादिना । अत्र मायातनव इत्यस्य प्रकृतमर्थं प्रमाणेनैवाह ॥ ब्रह्मादीति । न तु कल्पिता इति तुशब्दार्थः । मायादेहाः जडप्रकृतिनिर्मितदेहा इत्यर्थः । तथा च माययेच्छया विन्यस्ता रचिता नानातनवः प्रकृतिनिर्मितब्रह्मादिदेहा येनेति मूलार्थ इति भावः । निर्धूता दूरीकृता द्रव्यं देहगेहादिकं क्रिया

तद्विषयो व्यापारः कारकाणीन्द्रियादीनि तेषु विभ्रमोऽहंकारममकाराभिमानस्तन्निमित्ता ऊर्मयो रागद्वेषादयश्च यस्मिंस्तस्मै ॥ ३० ॥

**येनाहमात्मीयतनुर्विनिर्मिता धात्रा यतोऽयं गुणसर्गसंग्रहः ।**
**स एव मां हन्तुमुदायुधः स्वराडुपस्थितोऽन्यं शरणं कमाश्रये ॥ ३१ ॥**

**प्रकाशिका –** यः पिता सर्वस्वामी स एव हन्तुमुद्यतश्चेत्कुतो गन्तव्यमहो कष्टमित्याशयेनाह ॥ येनाहमिति । येन विधात्रा जगत्सर्जकेन हरिणाऽऽत्मीयतनुः स्वशरीरत्वेन निर्मिता । यस्य पृथिवी शरीरमिति श्रुतेः । यतो यस्मिन् गुणसर्गस्य सत्त्वादिगुणजातदेहस्य प्राणिसमूहस्य सङ्ग्रहो धारणं भवति स एव स्वराट् स्वतन्त्रः ॥ ३१ ॥

**य एतदादावसृजच्चराचरं स्वमाययाऽऽत्माश्रययाऽवितर्क्यया ।**
**तयैव सोऽयं किल गोप्तुमुद्यतः कथं नु मां धर्मपरो जिघांसति ॥ ३२ ॥**

**प्रकाशिका –** इदानीं जगत्पालने प्रवृत्तस्य सर्वथा मद्वधो नोचित इत्याह ॥ य एतदादाविति । स्वमायया स्वेच्छयाऽऽत्माश्रयया बन्धकतया जीवविषयया वितर्कया विविधतर्काविषययानु इदानीं गोप्तुमुद्यतः । किलेति श्रुतिमत्र प्रमाणयति ॥ ३२ ॥

**नूनं तवेशस्य समीहितं जनैः स्वमायया दुर्जरयाऽकृतात्मभिः ।**
**न लक्ष्यते यस्त्वकरोदकारयद् योऽनेक एकः परतः स ईश्वरः ॥ ३३ ॥**

**तात्पर्यम् – स परतः ईश्वर इत्याक्षेपः ॥ ३३ ॥**

**प्रकाशिका –** ननु ब्रह्मादिरिवायमपि स्वोत्तमानुग्रहादीश्वरश्चेत्किमनेनेत्यपेक्षायामाह ॥ नूनमिति। समीहितं चेष्टितम् । तन्मायया तदीयबन्धकशक्त्या अकृतात्मभिः अजितमनस्कैः । दुर्जरया मायया । यः स्वतन्त्रः स्वयमकरोत् ब्रह्मादिभिरकारयच्च यः । अनेकः एकश्च परतः स ईश्वर इति । अस्य न स्वत इत्यन्यथाप्रतीतिवारणायाभिप्रेतमर्थमाह ॥ स परत ईश्वर इत्याक्षेप इति । काका। आक्षेपार्थतया योज्यमित्यर्थः । तथा च स एवंविधमाहात्म्योपेतो हरिः किं परतः स्वोत्तमात्तदनुग्रहादीश्वरो नैव किन्तु स्वत एव तदुत्तमस्यान्यस्याभावादिति मूलार्थ इति भावः ॥ ३३ ॥

**सर्गादि योऽस्यानुरुणद्धि शक्तिभिर्द्रव्यक्रियाकारकचेतनात्मभिः ।**
**तस्मै समुन्नद्धविरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे ॥ ३४ ॥**

**तात्पर्यम् – 'विरुद्धशक्तयो यस्य नित्या युगपदेव च । तस्मै नमो भगवते विष्णवे सर्वजिष्णव' इति च ॥ ३४ ॥**

**प्रकाशिका –** अयमेव सर्वेश्वर इत्युपपादयता नतानां न भीतिरित्याशयेन तं नमति ॥ सर्गादीति । अस्य जगतः सर्गादि सृष्ट्याद्यष्टकं योऽनुरुणद्धि योग्यतानुसारेण करोति । द्रव्याणि भूतानि क्रिया कारकाणि ज्ञानेन्द्रियाणि चेतनाः तदभिमानिनो जीवाः तदात्मभिः शक्यत्वाच्छक्तिनामभिः सहकारिभिः । एकस्य कथं विरुद्धविचित्रानेककार्यकर्तृत्वमित्यत आह ॥ समुन्नद्धविरुद्धशक्तय इति । समुन्नद्धाः सम्यगुत्कृष्टा लोकदृष्ट्या विरुद्धाः शक्तयो यस्य तस्मै । वेधसे विरुद्धानेककार्यकर्त्रेऽत एव परस्मै सर्वोत्तमपुरुषाय नम इत्यर्थः । अत्र वेत्रबीजानां भर्जनेन कदलीकाण्डजनकत्वशक्तिवद्भगवच्छक्तीनामन्यजन्यत्वशंकां कार्यक्रमानुसारेण कथं यौगपद्य-मित्याशङ्कां च परिहर्तुं प्रमाणसंवादमाह ॥ विरुद्धेति । युगपद्विरुद्धशक्तयोऽत एव नित्याश्च भगवतेऽघटितघटकैश्वर्यसंपन्नाय । तथा चाघटितघटकैश्वर्यबलाल्लोकदृष्ट्या विरुद्धा अपि शक्तयो युगपदेव नित्याश्च यस्य सन्ति तस्मै नम इति मूलाशय इति भावः ॥ ३४ ॥

**स वै भवानात्मविनिर्मितं जगद् भूतेन्द्रियान्तःकरणात्मकं विभो ।**
**संस्थापयिष्यन्नज मां रसातलादभ्युज्जहाराम्भस आदिसूकरः ॥ ३५ ॥**

**प्रकाशिका –** पूर्वं सर्वभूतधारणाय रसातलान्मामुद्धृत्य तस्यां मयि प्रजारक्षणे प्रवृत्तस्य तव मद्वधो नोचित इति सकरुणमाह ॥ स वा इति द्वाभ्याम् । स वा इत्यनेन य एतदादाव-सृजच्चराचरमित्यादिनोक्तः स्रष्टा परामृश्यते । हे अज । यः सृष्टवान्स एव भवान् आत्मना स्वेन निर्मितं भूतेन्द्रियान्तःकरणात्मकं जगत्सम्यक् स्थापयिष्यन् आदिसूकरो भूत्वा रसातलादंभसो मा मामभ्युज्जहारोद्धृतवान् ॥ ३५ ॥

**अपामुपस्थे मयि नाव्यवस्थिताः प्रजा भवानद्य रिरक्षिषुः किल ।**
**स वीरमूर्तिः समभूद् धराधरो यो मां पयस्युग्रशरो जिघांसति ॥ ३६ ॥**

**प्रकाशिका –** स एव धराधरो वराहः । अपामुपस्थे उपरि स्थिते मयि मल्लक्षणायां नावि स्थिताः प्रजा रिरिक्षिषू रक्षितुमिच्छुः । वीरे पृथौ प्रविष्टा राजराजमूर्तिर्यस्य समभूत् । य एवं भूतः स त्वं पयसि तादर्थ्ये औषध्यादिरूपक्षीरार्थं मां जिघांससीदं विचित्रमीत्यर्थः ॥ ३६ ॥

**नूनं जनैरीहितमीश्वराणामस्मद्विधैस्तुद्गुणसर्गमायया ।**
**न ज्ञायते मोहितचित्तवृत्तिभिस्तेभ्यो नमो वीरयशस्करेभ्यः ॥ ३७ ॥**

**प्रकाशिका** – इदानीं पृथुमेव लक्षीकृत्य समर्थानां चेष्टितं दुर्ज्ञेयमिति सामन्यतो वदन्ती प्रार्थनापूर्वकं तं नमति ॥ नूनमिति । अस्मद्विधैर्जनैरीश्वराणां भवादृशानां समर्थानामीहितं चेष्टितं न ज्ञायते । कथंभूतैः । तेषामीश्वराणां गुणानामैश्वर्यादीनां सर्गो यया सा तथा सा च मायेश्वरेच्छा तया मोहितानि चित्तवर्त्मानि मनोवृत्तयो येषां तैरित्यर्थः । वीरयशस्करेभ्य इत्यनेन यथा वीराणां यशोवर्धनं भवति तथा चेष्टतां न तु यथेष्टमिति प्रार्थना कृतेति ज्ञातव्या ॥ ३७ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे सप्तदशोऽध्यायः ॥

## अथाष्टादशोऽध्यायः ।

**मैत्रेय उवाच–**

**इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम् ।**
**पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना ॥ १ ॥**

**प्रकाशिका –** ॥ हरिः ॐ ॥ आत्मना स्वेनैवात्मानं मनः संस्तभ्य स्थिरीकृत्य ॥ १ ॥

**सन्नियच्छ विभो मन्युं विबोध श्रावितं च मे ।**
**सर्वतः सारमादत्ते यथा मधुकरो बुधः ॥ २ ॥**

**प्रकाशिका –** श्रावितं विज्ञापितम् । मद्वाक्ये आदरः कर्तव्य इत्याशयेनाह ॥ सर्वत इति ॥ २ ॥

**अस्मिंल्लोकेऽथवाऽमुष्मिन् मुनिभिस्तत्त्वदर्शिभिः ।**
**दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये ॥ ३ ॥**

**प्रकाशिका –** मयि जीर्णा औषधीरुपायेन गृहाणेति वक्तुमुपायेनैव सर्वं सिद्ध्यति नान्यथेति तावदाह ॥ अस्मिन्निति त्रिभिः । पुंसां श्रेयसः पुरुषार्थस्य सिद्धये प्राप्त्यै अस्मिन् लोके कृष्यादयोऽमुष्मिन् लोकेऽग्निहोत्रादयो योगा उपाया दृष्टाः प्रयुक्ता अनुष्ठिताश्च ॥ ३ ॥

**तानातिष्ठति यः सम्यगुपायान् पूर्वदर्शितान् ।**
**अपरः श्रद्धयोपेत उपायान् विन्दतेऽञ्जसा ॥ ४ ॥**

**प्रकाशिका –** पूर्वैर्दर्शितान् । अपरोऽर्वाचीनः ॥ ४ ॥

**ताननादृत्य योऽविद्वानर्थानारभते स्वयम् ।**
**तस्य व्यभिचरन्त्यर्थाः प्रारब्धाश्च पुनः पुनः ॥ ५ ॥**

**प्रकाशिका –** व्यभिचरन्ति न सिद्ध्यन्ति ॥ ५ ॥

**पुरा सृष्टाश्चौषधयो ब्राह्मणाय विशां पते ।**
**भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः ॥ ६ ॥**

**प्रकाशिका –** इदानीं सहेतुकमुपायमाह ॥ पुरेति षड्भिः ॥ ६ ॥

**अपालिता नादृतास्ता भवद्भिर्लोकपालकैः ।**
**चौरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमौषधीः ॥ ७ ॥**

**प्रकाशिका** – भवद्भिर्भवादृशैरपालिताश्चोराद्यनिवारणात् । अनादृता यज्ञादिप्रवृत्त्यभावात् । यज्ञार्थे उत्तरत्र यदा सन्तो राजानो भविष्यन्ति तदा पुनर्यज्ञप्रवृत्त्यर्थमग्रसं गिलितवती ॥ ७ ॥

**नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा ।**
**तत्र दृष्टेन योगेन भवानादातुमर्हति ॥ ८ ॥**

**प्रकाशिका** – तर्हि ता इदानीं देहीत्यत आह ॥ नूनमिति । क्षीणा जीर्णाः क्षीररूपेण परिणता इत्यर्थः । तत्र तस्मिन्विषये । दृष्टेन शास्त्रदृष्टेन योगेनोपायेन ॥ ८ ॥

**वत्सं कल्पय मे वीर येनाहं वत्सला तव ।**
**धोक्ष्ये क्षीरमयान् कामाननुरूपं च दोहनम् ॥ ९ ॥**

**प्रकाशिका** – तमेव शास्त्रदृष्टमुपायं दर्शयति ॥ वत्सं कल्पयेति । वत्सं दोहनं पात्रं दोग्धारं चोपकल्पय । वत्सला वत्सप्रिया । अनुरूपं तत्तद्योग्यं दोहनं दोहक्रियाविशेषम् । धोक्ष्ये पूरयिष्यामि ॥ ९ ॥

**दोग्धारं च महाबाहो भूतानां भूतभावन ।**
**अन्नमीप्सितमूर्जस्वद् भगवान् वाञ्छते यदि ॥ १० ॥**

**प्रकाशिका** – भूतानामीप्सितमन्नमूर्जस्वद्बलप्रदम् ॥ १० ॥

**समां च कुरु मां राजन् देववृष्टं यथा पयः ।**
**अपर्तावपि भद्रं ते उपावर्तेत मां विभो ॥ ११ ॥**

**प्रकाशिका** – अपर्तावप्यपगतेऽपि वर्षर्तौ यथा मे सर्वतः समं पय उपावर्तेत तथा मां समां कुरु ॥ ११ ॥

**इति प्रियहितं वाक्यं भुव आदाय भूपतिः ।**
**तथा चकार सर्वत्र सारमाददते बुधाः ॥ १२ ॥**

**प्रकाशिका** – प्रियहितं श्रोतृणां सुखं प्रियं पथ्यम् । पूर्वं तस्यैव क्रुद्ध इदानीं तद्वाक्यं कथं गृहीतवानित्यत आह ॥ सर्वत्रेति । सारग्राहित्वं बुधानां स्वभाव इति भावः ॥ १२ ॥

**वत्सं कृत्वा मनुं पाणावदुहत् सकलोषधीः ।**
**ततोऽपरे यथाकामं दुदुहुः पृथुभाविताम् ॥ १३ ॥**

**प्रकाशिका** – मनुं स्वायंभुवम् । पाणौ स्वपाणिलक्षणे पात्रे । स्वयं पृथुरौषधीः क्षीररूपम् । यत्र ये दोग्धारस्तेषां श्रेष्ठा वत्सा भवन्ति । तेषु पृथिव्या वात्सल्यात् । गोरूपायाः पृथिव्याः स्वप्रियवत्सयोगे यत्क्षीरं निःसरति । तत्पश्चात्तत्तदीप्सितफलाकारेण परिणतं भवतीति द्रष्टव्यम् । अत एव क्षीरमयान्कामानित्युक्तम् । क्षीरविकारानित्यर्थः । पृथुभावितां पृथुना संभावितां गोरूपां पृथिवीम् ॥ १३ ॥

**ऋषयो दुदुहुर्देवीमिन्द्रियेष्वथ सत्तमाः ।**
**वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं शुचि ॥ १४ ॥**

**प्रकाशिका** – अपर इत्युक्तमेव विवृणोति ॥ ऋषय इति । देवीं धरां वाङ्मनःश्रोत्राणां वेदधारकत्वादितरेन्द्रियाणां शुद्धिसंपादिकत्वादिन्द्रियाणां च पात्रत्वमिति ज्ञातव्यम् । छन्दोमयं वेदमयं वेदवाक्योपादनम् । क्रमस्य जन्यत्वान्न कुचोद्यावकाशः ॥ १४ ॥

**कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् ।**
**हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः ॥ १५ ॥**

**तात्पर्यम् – 'गुणाः स्वरूपभूताश्च बाह्याश्चेति द्विधा मताः । स्वरूपभूता व्यज्यन्ते हरेर्बाह्यान् दुहुः पर' इति ब्राह्मे ॥ १५ ॥**

**प्रकाशिका** – सोमं सोमलतारसम् । न केवलमेतावत् । किन्तु तत्साध्यं वीर्यं पराक्रमशक्ति-मोजोऽवष्टंभशक्तिं बलं शारीरमिति गुणरूपं च पयोऽदूदुहन् । अत्र सुराणां पृथिवीदोहनानन्तरं वीर्यादिगुणप्राप्तिरुच्यते । सा न स्वरूपभूतगुणविषया किन्तु बाह्यदेहनिमित्तकगुणविषयैवेति प्रमाणेनैव दर्शयति ॥ गुणा इति । वीर्यादयो गुणा इत्यर्थः । हरेर्हरिप्रसादाद्व्यज्यन्ते मुक्ताविति शेषः । बाह्यान् बहुगुणरूपं पयो दुदुहुः । सुरा इति शेषः ॥ १५ ॥

**दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम् ।**
**विधाय दुदुहुः क्षीरमयःपात्रे सुरासवम् ॥ १६ ॥**

**तात्पर्यम् – 'प्रतिमन्वन्तरं प्रायः प्रह्लादाद्या बभूविर' इति च ॥ १६ ॥**

**प्रकाशिका** – अयःपात्रे अयोमयपात्रे सुरासवं सुराख्यमासवं मधु । अत्र स्वायंभुवमन्वन्तर-कालीनपृथुसमये वैवस्वतमन्वन्तरसमयोत्पन्नप्रह्लादस्य कथमवस्थानमित्याशङ्कां प्रमाणेनैव परिहरति ॥ प्रतिमन्वन्तरमिति । तथा च स्वायंभुवमनुकालेऽपि प्रह्लादस्योत्पन्नत्वान्नोक्त-शङ्कावकाश इत्याशयः ॥ १६ ॥

**गन्धर्वाप्सरसोऽधुक्षन् पात्रे पद्ममये पयः ।**
**वत्सं विश्वावसुं कृत्वा गान्धर्वं मधु सौभगम् ॥ १७ ॥**

**प्रकाशिका** – गांधर्वं गायनं मधु श्रवणसुखकरं सौभगं सौभाग्यं च ॥ १७ ॥

**वत्सेन पितरोऽर्यम्णा कव्यं क्षीरमधुक्षत ।**
**आमपात्रे महाभाग श्रद्धया श्राद्धदेवताः ॥ १८ ॥**

**प्रकाशिका** – कव्यं पित्रन्नात्मकम् । आमपात्रेऽपक्वमृण्मयपात्रेऽधुक्षत दुदुहुः ॥ १८ ॥

**प्रकल्प्य वत्सं कपिलं सिद्धाः संकल्पनामयीम् ।**
**सिद्धिं नभसि विद्यां च ये च विद्याधरादयः ॥ १९ ॥**

**प्रकाशिका** – संकल्पनामयीं संकल्पमात्रेणाभीष्टसिद्धिप्रदामणिमादिसिद्धिम् । ये विद्याधरादयस्ते च मे वत्सं कल्पयित्वा नभसि विद्यां खेचरत्वादिविद्यारूपामधुक्षत ॥ १९ ॥

**अन्ये च मायिनो मायामन्तर्धानगतात्मना ।**
**मयं प्रकल्प्य वत्सत्वे दुदुहुर्धारणामयीम् ॥ २० ॥**

**प्रकाशिका** – अन्तर्धानगतात्मनाऽन्तर्धानेऽदृश्यत्वे गतात्मनाऽदृश्यत्वविषयकेन मनसा धारणामयीं चिन्तामात्रसाध्यां मायां मायासृष्टिं सिद्धादिष्वप्यामपात्र इत्युक्तमेव पात्रमनुवर्तनीयम् ॥ २० ॥

**यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः ।**
**भूतेशवत्सा दुदुहुः कपाले क्षतजासवम् ॥ २१ ॥**

**प्रकाशिका** – पिशिताशना मांसभक्षकाः । भूतेशो रुद्रो वत्सो येषां ते तथा । क्षतजं रुधिरमेवासवं मधु ॥ २१ ॥

**तथाऽहयो दन्दशूकाः सर्पा नागाश्च तक्षकम् ।**
**वत्सं विधाय दुदुहुर्बिलपात्रे विषं पयः ॥ २२ ॥**

**प्रकाशिका** – अहयो निष्फणाः । दंदशूकास्तद्विशेषाः । सर्पाः सफणाः । त एव कद्रुसन्ततिजाता नागाः । बिलपात्रे मुखलक्षणपात्रे ॥ २२ ॥

**पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम् ।**
**अरण्यपात्रे चाधुक्षन् मृगेन्द्रेण च दँष्ट्रिणः ॥ २३ ॥**

**प्रकाशिका** – यवसं तृणं गोवृषं नन्दिकेश्वरं मृगेन्द्रेण सिंहेन वत्सेन दंष्ट्रिणः ॥ २३ ॥

**क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वकलेवरे ।**
**सुपर्णवत्सा विहगाश्चरं चाचरमेव च ॥ २४ ॥**

**प्रकाशिका** – क्रव्यादा मांसभक्षकाः प्राणिनः क्रव्यं मांसरूपं पयः स्वकलेवरे पात्रं दुदुहुरित्यन्वयः । चरं कीटाद्यचरं फलमूलादिकम् ॥ २४ ॥

**वटवत्सा वनस्पतयः पृथग्रसमयं पयः ।**
**गिरयो हिमवद्वत्सा नानाधातून् स्वसानुषु ॥ २५ ॥**

**प्रकाशिका** – पृथक् तिक्तादिभेदेन भिन्नम् ॥ २५ ॥

**सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रं पृथक् पृथक् ।**
**सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताम् ॥ २६ ॥**

**प्रकाशिका** – स्वजातिमुख्येन स्वमुख्येन ॥ २६ ॥

**एवं पृथ्वादयः पृथ्वीमदुहन् स्वन्नमात्मनः ।**
**दोहवत्सादिभेदेन क्षीरभेदं कुरुद्वह ॥ २७ ॥**

**प्रकाशिका** – पृथ्वादय इत्यत्रादिशब्देन ऋष्यादेर्ग्रहणम् । वत्सादीत्यादिपदेन दोग्धृग्रहणम् । स्वन्नमभीष्टमन्नम् । क्षीरभेदं क्षीरपरिणामरूपं दोहपात्रम् ॥ २७ ॥

**ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः ।**
**दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः ॥ २८ ॥**

**प्रकाशिका** – इमां पृथिवीम् ॥ २८ ॥

**चूर्णयन् स्वधनुःकोट्या गिरिकूटानि राजराट् ।**
**भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः ॥ २९ ॥**

**प्रकाशिका** – गिरिकूटानि गिरिशृङ्गाणि ॥ २९ ॥

**अथास्मिन् भगवान् वैन्यः प्रजानां वृत्तिदः पिता ।**
**निवासान् कल्पयाञ्चक्रे तत्र तत्र यथार्हतः ॥ ३० ॥**

**प्रकाशिका** – निवासानावासस्थानानि ॥ ३० ॥

**ग्रामान् पुरः पत्तनानि दुर्गाणि विविधानि च ।**
**घोषान् व्रजांश्च शिबिरान् नगरान् खेटखर्वटान् ॥ ३१ ॥**

**तात्पर्यम्** – **'गोष्ठं घोष इति प्रोक्तो व्रजस्तत्पालसंस्थितिरि'त्यभिधानम् ॥ ३१ ॥**

**प्रकाशिका** – ग्रामा बहुजनसंकीर्णाः अट्टादिशून्याः पुरः हाटकादिमत्यः राजराजाश्रयाः ता एव महत्यः पत्तनानि दुर्गाणि गन्तुमशक्यान्यौदकपर्वतादिस्थानानि । घोषान्व्रजांश्चेत्यनयोरर्थ-भेदं प्रमाणेनैव दर्शयति ॥ गोष्ठमिति । गोष्ठं घोष इति प्रोक्तः । तत्पालानां गोपालानां संस्थितिर्यस्मिन्देशे स देशो व्रज इति प्रोक्त इत्यर्थः । तथा च घोषान् गवां स्थानानि व्रजान् गोपालावासस्थानानि चेति मूलं व्याख्येयमिति भावः । शिबिरान् सेनानिवासस्थानानि नगरान्वैश्यनिवासस्थानानि । मृगयूनामावासस्थानं खेटः । यस्मिन्देशे आदित्यादिवारविशेषे वणिजां योगः खर्वटः । वस्त्रविक्रयस्थानं वा । एतां कल्पयांचक्र इति पूर्वेणान्वयः ॥ ३१ ॥

**प्राक् पृथोरिह नैवैषा पुरग्रामादिकल्पना ।**
**यथासुखं वसन्ति स्म तत्र तत्राकुतोभयाः ॥ ३२ ॥**

**प्रकाशिका** – वसन्ति । प्रजा इति शेषः ॥ ३२ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे अष्टादशोऽध्यायः ॥

## अथ एकोनविंशोऽध्यायः ।

**मैत्रेय उवाच–**

**अथादीक्षत राजर्षिर्हयमेधशतेन सः ।**
**ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती ॥ १ ॥**

**प्रकाशिका –** ॥ हरिः ॐ ॥ हयमेधशतेन निमित्तेनादीक्षत दीक्षितोऽभूत् । शताश्वमेध-संकल्पमकरोदित्यर्थः । ब्रह्मावर्ते सरस्वतीदृषद्वयोरन्तरं देवनिर्मितम् । ब्रह्मावर्तं मानवन्तं विदुर्देशं विचक्षणा इति प्रमाणप्रसिद्धेः प्राचीमैन्द्रीदिशमुद्दिश्य स्यंदमाना ॥ १ ॥

**तदभिप्रेत्य भगवान् कर्मातिशयमात्मनः ।**
**शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम् ॥ २ ॥**

**प्रकाशिका –** आत्मनः स्वस्य कर्मातिशेतेत्यतिशयं स्वकृतक्रतुशतापेक्षयाऽतिशयोपेत-मभिप्रेत्य ज्ञात्वा तत्पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे ॥ २ ॥

**यत्र यज्ञपतिः साक्षाद् भगवान् हरिरीश्वरः ।**
**अन्वाहूयत सर्वात्मा सर्वलोकगुरुः प्रभुः ॥ ३ ॥**
**अन्वितौ ब्रह्मशर्वाभ्यां लोकपालैः सहानुगैः ।**
**उपगीयमानो गन्धर्वैर्मुनिभिश्चाप्सरोगणैः ॥ ४ ॥**

**प्रकाशिका –** अतिशयमेव दर्शयति ॥ यत्रेति सप्तभिः । सर्वात्मा सर्वव्यापी । अन्वाहूयत प्रत्यक्षेणादृश्यत ॥ ३,४ ॥

**सिद्धा विद्याधरा दैत्या दानवा गुह्यकादयः ।**
**सुनन्दनन्दप्रमुखाः पार्षदप्रवरा हरेः ॥ ५ ॥**

**प्रकाशिका –** सिद्धादयश्च तं हरिमन्वयुरित्युत्तरेणान्वयः ॥ ५ ॥

**कपिलो नारदो दत्तो योगेशाः सनकादयः ।**
**तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः ॥ ६ ॥**

**प्रकाशिका –** भागवता इति विशेषणाद्दैत्यदानवाश्च भगवद्भक्ता एवात्र विवक्षिता इति सूचयति ॥ ६ ॥

**यत्र धर्मदुघा भूमिः सर्वकामदुघा मही ।**
**दोग्धि स्माभीप्सितानर्थान् यजमानस्य भारत ॥ ७ ॥**

**प्रकाशिका** – धर्मदुघा यज्ञोपयुक्तपदार्थदोग्ध्री । न केवलमेतावत् । किन्तु सर्वकामदुघा ॥ ७ ॥

**ऊहुः सर्वरसान् नद्यः क्षीरदध्यन्नगोरसान् ।**
**तरवो भूरिवर्ष्माणः प्रासूयन्त मधुच्युतः ॥ ८ ॥**

**सिन्धवो रत्ननिकरान् गिरयोऽन्नं चतुर्विधम् ।**
**उपायनान्युपाजह्रुः सर्वे लोकाः सपालकाः ॥ ९ ॥**

**प्रकाशिका** – ऊहुर्वहन्ति स्म । सर्वरसान् द्राक्षादिसर्वफलरसान्मधुरादीन्वा क्षीरं च दधिचान्नं पायसादिरूपं गोरसो घृतं तक्रं च तान् । तरवः प्रासूयन्त । कथंभूताः । भूरीणि विस्तृतानि वर्ष्माणि शरीराणि येषां ते तथा । मधच्युतोऽमृतस्राविणः । भक्ष्यं भोज्यं लेह्यं पेयं चेति चतुर्विधम् ॥ ८,९ ॥

**इति चाधोक्षजेशस्य पृथोर्यज्ञमहोदयम् ।**
**असूयन् भगवानिन्द्रः प्रतिघातमचीकरत् ॥ १० ॥**

**प्रकाशिका** – अधोक्षज ईशो नाथो यस्य तस्य यज्ञमहोदयं यज्ञमहोत्सवमसूयन् असहमानः प्रतिघातं विघ्नम् ॥ १० ॥

**चरमेणाश्वमेधेन यजमाने यजुष्पतिम् ।**
**वैन्ये यज्ञपशुं स्पर्धन्नपोवाह तिरोहितः ॥ ११ ॥**

**प्रकाशिका** – चरमेणांत्येन यजुष्पतिं सर्ववेदपालकं विष्णुं यजमाने सति स्पर्धन्स्पर्धमानस्तिरोहितः सन् अपोवाहापहृतवान् ॥ ११ ॥

**तमत्रिर्भगवानैक्षत् त्वरमाणं विहायसा ।**
**अमुक्तमिव पाषण्डं योऽधर्मे धर्मविभ्रमः ॥ १२ ॥**

**अत्रिणा चोदितो हन्तुं पृथुपुत्रो महारथः ।**
**अन्वधावत संक्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ १३ ॥**

**प्रकाशिका** – विहायसाऽऽकाशमार्गेण त्वरमाणं धावन्तं पाषण्डं पाखण्डरूपममुक्तम् । नञ्द्वयेन नित्यगृहीतमिव स्थितम् । कोऽसौ पाखण्ड इत्यत आह ॥ अधर्म इति । अधर्मे धर्मोऽयमिति विभ्रमो भ्रान्तिर्यस्मात्स तथोक्तः ॥ १२,१३ ॥

**तं तादृशाकृतिं वीक्ष्य मेनेऽधर्मशरीरिणम् ।**
**जटिलं भस्मना छन्नं तस्मै बाणं न मुञ्चति ॥ १४ ॥**

**पापान्निवृत्तं वै भूयो हन्तवेऽत्रिरचोदयत् ।**
**जहि यज्ञहनं तात महेन्द्रं विबुधाधिपम् ॥ १५ ॥**

**प्रकाशिका** – अधर्मशरीरिणं पापदेहिनं मेने इत्यन्वयः । न मुंचति न मुमोच ॥ १४,१५ ॥

**एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा ।**
**अन्वधावदतिक्रुद्धो रावणं गृध्रराडिव ॥ १६ ॥**

**प्रकाशिका** – गृध्रराट् जटायुः ॥ १६ ॥

**सोऽश्वं रूपं च तद्धित्वा तस्थावन्तर्हितः स्वराट् ।**
**धीरः स्वपशुमादाय पितुर्यज्ञमुपेयिवान् ॥ १७ ॥**

**तत् तस्य चाद्भुतं कर्म विलक्ष्य परमर्षयः ।**
**नामधेयं ददुस्तस्मै विजिताश्व इति प्रभो ॥ १८ ॥**

तात्पर्यम् – **'देवाः शक्तास्तु मोहाय दर्शयेयुरशक्तवत् । ऋषीणां चैव राज्ञां च नहि ते देवतासमाः । आज्ञया वा हरेः क्वापि कार्यतो वा क्वचित्क्वचिदि'ति गारुडे ॥ 'प्रणिपातादिकं देवैर्ऋष्यादिषु जनार्दने । क्रियतेऽतो न तेषां हि तेजोभङ्गः कथञ्चन । अत्युत्तमानामवरे तेजोभङ्गो न विद्यते । यथा नराणां तिर्यक्षु प्रायः साम्ये हि स स्मृत' इति स्कान्दे ॥ १७ ॥**

**प्रकाशिका** – स इन्द्रोऽश्वं यज्ञपशुं तद्रूपं पाखण्डरूपं च हित्वांऽतर्हितः सन् तत्स्थौ । अत्रेन्द्रस्य पृथुपुत्रापेक्षयाऽशक्तता प्रतीयतेऽतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ देवा इति । तुशब्दोऽप्यर्थः । ऋषीणां राज्ञां च सकाशात् । कुत एवं तात्पर्यं वक्तव्यमित्यत उक्तम् ॥ न हीति । यस्मात्ते ऋष्यादयो देवतासमा नैव । कुत उत्तमा इत्याशयः । नन्वेवमधमेष्वत्युत्तमैर्देवैरशक्त्यादिप्रदर्शने तेषां तेजोभङ्गः प्राप्त इत्याशङ्कापरिहाराय प्रमाणं पठति ॥ प्रणिपातादिकमिति । आदिपदेनाशक्तिप्रदर्शनं ग्राह्यम् । द्वितीयादिपदेन राजादेर्ग्रहणम् ।

जनार्दने। ऋष्याद्यन्तर्गतहरिमुद्दिश्येत्यर्थः । तेषां देवानाम् । कुत इत्यत आह ॥ अत्युत्तमानामिति । अवरे नीचतया लोकप्रसिद्धे विषये प्रणिपातादिना तेजोभङ्गो न विद्यते । तत्र हरिमात्रोद्देश्यत्वस्य सर्वैर्निश्चेतुं शक्यत्वादित्याशयः । अत्र दृष्टान्तमाह ॥ यथेति । तिर्यक्षु गवादिषु प्रणिपातादिना तेजोभङ्गो न विद्यते तथैवेति । तर्हि कुत्र भवतीत्यपेक्षायामाह ॥ प्राय इति । स तेजोभङ्गः परस्परद्वेषिणोः साम्ये सति स तेजोभङ्गः स्मृतः । हीत्यत्रानुभवं प्रमाणयति। द्वेषाद्यभावे स नास्तीत्याशयेन प्राय इत्युक्तम् । प्रणिपातग्रहणं स्पृशन्तं पादयोः प्रेम्णेति वक्ष्यमाणेन्द्रकृतप्राणामस्यापि न तत्तेजोभङ्गकारित्वमिति प्रदर्शनाय ॥ १७,१८ ॥

**उपसृज्य तमस्तीव्रं जहाराश्वं पुनर्हरिः ।**
**चषालयूपयोश्छन्नो हिरण्यरशनं विभुः ॥ १९ ॥**
**अत्रिः संदर्शयामास त्वरमाणं विहायसा ।**
**कपालखट्वाङ्गधरं वीरो नैनमबोधत ॥ २० ॥**
**अत्रिणा चोदितस्तस्मै सन्दधे विशिखं रुषा ।**
**सोऽश्वं रूपं च तद्धित्वा तस्थावन्तर्हितः स्वराट् ॥ २१ ॥**

**प्रकाशिका** – उपसृज्य सृष्ट्वा । हरिरिन्द्रः । चषालो यूपकटक इत्यभिधानात् । दारुनिर्मित-यूपवलयश्चषालश्चषालयूपयोरन्तरे मध्ये छन्नः सन् हिरण्येन निर्मिता रशना काञ्ची यस्य तमश्वम्। विभुः समर्थः ॥ १९,२०,२१ ॥

**वीरश्चाश्वमुपादाय पितृयज्ञमथाव्रजत् ।**
**तदवद्यं हरे रूपं जगृहुर्ज्ञानदुर्बलाः ॥ २२ ॥**

**प्रकाशिका** – हरेरिन्द्रस्य । ज्ञानदुर्बला अज्ञाः । अवद्यं निन्दितम् ॥ २२ ॥

**यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया ।**
**तानि पापस्य षण्डानि लिङ्गं षण्डमिहोच्यते ॥ २३ ॥**
**एवमिन्द्रे हरत्यश्वं वैन्ययज्ञजिघांसया ।**
**तद्गृहीतविसृष्टेषु पाषण्डेषु मतिर्नृणाम् ॥ २४ ॥**

**प्रकाशिका** – इन्द्रगृहीतरूपेषु पाषण्डशब्दं निर्वक्ति ॥ यानीति । षण्डंशब्दार्थं स्वयमेवाह ॥ लिङ्गमिति । इहास्मिन्नवसरे । तथा च पाशशब्दः पापपरः । नामैकदेशे नामग्रहणमिति वचनात्। तस्य षण्डं लिङ्गं ज्ञापकं रूपं पाषण्डमिति निरुक्तमिति ज्ञातव्यम् ॥ २३,२४ ॥

**धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु ।**
**प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ॥ २५ ॥**
**तदभिज्ञाय भगवान् पृथुः पृथुपराक्रमः ।**
**इन्द्राय कुपितो बाणमादत्तोद्यतकार्मुकः ॥ २६ ॥**

**तात्पर्यम् – 'धर्मोपमस्त्वधर्मोऽयमुपधर्मः स उच्यत' इति हरिवंशेषु ॥ २५ ॥**

**प्रकाशिका** – तेनादौ गृहीतेषु पश्चाद्विसृष्टेषु धर्म इति मतिः सज्जन्त इत्यन्वयः । कथं भूतेषूपधर्मेषु । अत्रोपधर्मशब्दस्य प्रकृतमर्थं प्रमाणेनैव दर्शयति ॥ धर्मोपम इति । तुशब्दोऽवधारणे। धर्मोपम एव धर्मवत्प्रतीयमान एव यो धर्मः स इत्यर्थः । तथा च वस्तुतोऽधर्मेषु धर्मोपमतया प्रतीयमानेष्वित्युपधर्मेष्विति भावः । तानि रूपाणि दर्शयति ॥ नग्नेति। नग्ना जैनादयः । रक्तपटा बौद्धाः आदिशब्दात्कापालिकादीनां ग्रहणम् । भ्रान्त्या पेशलेष्वापाततो रम्येषु वाग्मिषु हेतूक्तिचतुरेषु ॥ २५,२६ ॥

**तमृत्विजः शक्रवधाभिसन्धितं विचक्ष्य दुष्प्रेक्ष्यमसह्यरंहसा ।**
**निवारयामासुरहो महामते न युज्यतेऽत्रान्यवधोऽप्रचोदितात् ॥ २७ ॥**

**प्रकाशिका** – शक्रवधेऽभिसन्धितं कृताभिप्रायम् । अप्रचोदिताद्वध्यतयाऽविहितात् । अत्रान्यस्य वधो न युज्यते । अप्रयोजित इति पाठे यत इति शेषः । यजमानेनान्यवध्यो न कार्य इति चोदनाविहितत्वादित्यर्थः ॥ २७ ॥

**वयं मरुत्वन्तमिहार्थनाशनं ह्वयामहे त्वच्छ्रवसा हतत्विषम् ।**
**अयातयामोपहवैस्तमग्नये प्रसह्य राजन् जुहवाम तेऽहितम् ॥ २८ ॥**

**प्रकाशिका** – तर्हि वैरिनिवारणं कथं स्यादित्यत आहुः ॥ वयमिति । मरुत्वंतमिन्द्रमयातयामा अगतसाराश्च ते उपवहाश्चाव्हानमन्त्राश्च तैर्जुहवाम । अनन्तरं ते तवाहितमग्नये जुहुवाम होष्यामः । अर्थनाशनं यज्ञाख्यप्रयोजनद्रुहम् ॥ २८ ॥

**इत्यामन्त्र्य क्रतुपतिं विदुरास्यर्त्विजो रुषा ।**
**स्रुड्न्यस्तं जुह्वतोऽभ्येत्य स्वयंभूः प्रत्यषेधत ॥ २९ ॥**

**प्रकाशिका** – क्रतुपतिं पृथुम् । मन्त्रबलेन स्रुड्न्यस्तं स्रुचि स्थापितमिन्द्रं जुव्हतोऽस्य पृथोः संबन्धिनो ऋत्विजोऽभ्येत्येत्यन्वयः ॥ २९ ॥

**न वध्यो भवतामिन्द्रो यद् यज्ञो भगवत्तनुः ।**
**तं जिघांसत यज्ञेन यस्येष्टास्तनवः सुराः ॥ ३० ॥**

**प्रकाशिका** – प्रतिषेधकारणमेवाह ॥ न वध्य इति । कुतो न वध्य इत्यत उक्तम् ॥ यद्यज्ञ इति। यद्यस्माद्भगवतो हरेरिन्द्रस्य तनुरिव तनुप्रतीकः । यज्ञेनेष्टाः सुराश्च यस्येन्द्रस्य तनवः तस्मात्तं न जिघांसत । तद्धिंसायां यज्ञप्रवृत्तिरेव न स्यादित्याशयः ॥ ३० ॥

**तदिदं पश्यत महद् धर्मव्यतिकरं द्विजाः ।**
**इन्द्रेणानुष्ठितं राज्ञः कर्मैतद्धि जिघांसया ॥ ३१ ॥**

**प्रकाशिका** – इतःपरं तेन सख्यमेव संपाद्यमन्यथा पुनः पाषण्डान्स्रक्ष्यतीत्याशयेनाह ॥ तदिदमिति । महतां संबन्धिनो धर्मस्य व्यतिकरो व्यत्यासो यस्मिंस्तद्राज्ञ एतत्कर्मजिघांसयेन्द्रेणानुष्ठितमिदं तत्संप्रदायाल्लोके प्रवृत्तं च पाषण्डं पश्यत ॥ ३१ ॥

**पृथुकीर्तिः पृथो भूयास्त्वं ह्येकोनशतक्रतुः ।**
**अलं ते क्रतुभिः शिष्टैर्यद् भवान् मोक्षधर्मवित् ॥ ३२ ॥**

**प्रकाशिका** – सख्यसंपादनमेव कथं भविष्यतीत्याशङ्कायां चरमयज्ञाकरणेनैवेत्याशयेन पृथुं प्रति वक्ति ॥ पृथुकीर्तिरिति । कर्मैतद्धिजिघांसया हे पृथो । त्वमेको न शतक्रतुरिति पृथुकीर्तिः प्रख्यातकीर्तिर्भूया इत्यन्वयः । एकोनत्वेऽपि तव कीर्तिर्भूयसी भविष्यतीति भावः । तर्हि मद्योग्यानन्दार्विभावलक्षणा मुक्तिः कथं स्यादित्यत आह ॥ अलमिति । ते त्वया स्विष्टैः कृतुभिः एकोनशतैरेव ते स्वरूपं अलं पूर्णं भविष्यति । अधिकयत्नेन तव दोषश्च स्यादित्याशयेनाह ॥ यद्भवानिति । स्वस्वरूपयोग्यमुक्त्यर्थमधिको यत्नो न कार्य इति धर्मविदित्यर्थः ॥ ३२ ॥

**नैवात्मने महेन्द्राय रोषमाहर्तुमर्हसि ।**
**उभावपि हि भद्रं ते उत्तमश्लोकविग्रहौ ॥ ३३ ॥**

**प्रकाशिका** – स्वोत्तमद्रोहोऽपि तव नोचित इत्याशयेनाह ॥ नैवेति । आत्मने स्वामिने । अनेनेन्द्र उत्तम इति सूचयति । रोषं द्वेषमाहर्तुं संपादयितुम् । उभयोरपि हरिविशेषावेशस्योक्तत्वात्परस्परं द्वेषो न युक्त इत्याशयेनाह ॥ उभावपीति । तस्माद्द्वेषपरित्यागेन ते भद्रं भविष्यति ॥ ३३ ॥

**मास्मिन् महाराज कृथाः स्म चिन्तां निशामयास्मद्वच आदृतात्मा ।**
**यद् ध्यायतो दैवहतं तु कर्तुं मनोऽतिकष्टं विशते तमोऽन्धम् ॥ ३४ ॥**

**प्रकाशिका** – एवमुक्तेऽप्यारब्धक्रतुसमाप्तिर्न जातेति चिन्तयन्तं राजानं प्रत्याह ॥ माऽस्मिन्निति । अस्मिंश्चरमयज्ञविषये न समाप्त इति चिन्ता मा कृथाः । निशामय शृणु । यद्यस्माद्दैवहतं कार्यं तत्कर्तुमुपायं ध्यायतः पुंसो मनोऽतिकष्टमन्धमन्धयतीत्यन्धं तमो मोहं विशते। तस्माच्चिन्तां मा कृथाः ॥ ३४ ॥

**क्रतुर्विरमतामेष देवेषु दुरवग्रहः ।**
**धर्मव्यतिकरो यत्र पाषण्डैरिन्द्रनिर्मितैः ॥ ३५ ॥**

**प्रकाशिका** – तस्माद्दैवहतमयं यज्ञकर्तुमाग्रहस्त्याज्य इत्याह ॥ क्रतुरिति । यतः क्रतोर्देवेषु तव दुरवग्रहो भविष्यति । एष यज्ञकरणे तव धर्मविलोपश्च स्यादित्याह ॥ धर्मव्यतिकर इति । यत्र क्रतुकरणे धर्मस्य व्यतिकरो व्यत्यासः । लोप इति यावत् । भविष्यति ॥ ३५ ॥

**एभिरिन्द्रोपसंसृष्टैः पाखण्डैर्हारिभिर्जनम् ।**
**ह्रियमाणं विचक्ष्वैतद् यस्ते यज्ञध्रुगश्वमुट् ॥ ३६ ॥**

**प्रकाशिका** – वर्तमानमपि पश्येत्याह ॥ एभिरिति । हारिभिर्मनोहारिभिर्ह्रियमाणं संगृह्यमाणमेतत्कर्म विचक्ष्व पश्य । कोऽसाविन्द्र इत्यत उक्तम् ॥ य इति । यज्ञं द्रुह्यतीति यज्ञध्रुक्। अश्वं मुष्णातीत्यश्वमुट् स इन्द्र इत्यर्थः ॥ ३६ ॥

**भवान् परित्रातुमिहावतीर्णो धर्मं च नानासमयानुरूपम् ।**
**वेनापचारादवलुप्तमद्य तद्देहतो विष्णुकलाऽसि वैन्य ॥ ३७ ॥**

**प्रकाशिका** – अस्तु धर्मनाशस्तेन मम किमनिष्टमित्यत आह ॥ भवानीति । नानासमयानुरूपं नानाशास्त्रानुसारिणं वेनापचाराद्वेनकृतादन्यायादवलुप्तं नष्टम् । तस्य वेनस्य देहतः । विष्णुकलाऽसि विष्ण्वाविष्टविभिन्नांशोऽसि अनेन विष्णोः पालकत्वात्तदाविष्टस्य तवापि धर्मपालकत्वमुचितमिति सूचयति ॥ ३७ ॥

**स त्वं विमृश्याभिभवं प्रजापतेः सङ्कल्पितं विश्वसृजोऽतिपीपृहि ।**
**ऐन्द्रीं च मायामुपधर्ममातरं प्रचण्डपाखण्डपथं प्रभो जहि ॥ ३८ ॥**

**प्रकाशिका** – मम सर्वप्रजापतित्वाद्विश्वसृष्टत्वाच्च मदभीष्टं त्वया कार्यमन्यथा मम तिरस्कारस्त्वया कृतः स्यादित्याशयेनाह ॥ स त्वमिति । यो धर्मत्राणायावतीर्णः स त्वं प्रजापतेर्ममाभिभवं तिरस्कारम् । मद्वचनाकरणमिति शेषः । विमृश्य विचार्येन्द्र एव शतक्रतुर्नान्य इति विचार्य विश्वसृजो विष्णोर्मम वासं कल्पितं मदभीष्टमतिपीपृह्यत्यन्तं पूरय । पृ पालन-पूरणयोरिति धातुः । प्रचण्डपाषण्डस्य पन्थानं मार्गभूतामैन्द्रीमिन्द्रनिर्मिताम् । उपधर्मस्य धर्ववत्प्रतीयमानस्याधर्मस्य मातरं जनयित्रीं मायां च जहि । तन्नाशकं सद्धर्मं प्रवर्तयेत्याशयः ॥३८॥

**मैत्रेय उवाच–**

**इत्थं स लोकगुरूणा समादिष्टो विशांपतिः ।**
**तथाच कृतवान् सख्यं मघोनाऽपि च सन्दधे ॥ ३९ ॥**

**प्रकाशिका** – आद्यश्चशब्दोऽवधारणे । तथैव कृत्वा यज्ञगृहं हित्वा वात्सल्यं स्नेहं च कृत्वा मघोनाऽपि इन्द्रेणापि । स्वानिष्टकरणे उद्यतेनापीत्यपिशब्दार्थः । सन्दधे सन्धानं कृतवान् ॥३९॥

**कृतावभृथ्यस्नानाय पृथवे भूरिकर्मणे ।**
**वरान् ददुस्ते वरदा ये तद्बर्हिषि तर्पिताः ॥ ४० ॥**
**विप्राः सत्याशिषस्तुष्टाः श्रद्धया लब्धदक्षिणाः ।**
**आशिषो युयुजुः क्षत्तरादिराजाय सत्कृताः ॥ ४१ ॥**

**प्रकाशिका** – यज्ञान्तोऽवभृतस्तत्संबन्धिस्नानमावभृथ्यं कृतमावभृथ्यं येन स तथोक्तस्तस्मै तर्पिता देवा इति शेषः ॥ ४०,४१ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे एकोनविंशोऽध्यायः ॥ १४ ॥

## अथ विंशोऽध्यायः ।

**मैत्रेय उवाच –**

**भगवांश्चापि वैकुण्ठः साकं मघवता विभुः ।**
**यज्ञैर्यज्ञपतिः स्विष्टो यज्ञभुक् तमभाषत ॥ १ ॥**

**प्रकाशिका** – ॥ हरिः ॐ ॥ मघवतेन्द्रेण साकं सह वर्तमानः ॥ १ ॥

**श्रीभगवानुवाच –**

**एष ते ह्यकार्षी भङ्गं हयमेधशतस्य ह ।**
**क्षमापयत आत्मानममुष्य क्षन्तुमर्हसि ॥ २ ॥**

**प्रकाशिका** – आत्मानं त्वां क्षमापयतः क्षमां कारयतः । अमुष्येन्द्रस्य क्षन्तुमर्हस्यात्मानं त्वयि स्थितं मामिति वा ॥ २ ॥

**सुधियः साधवो लोके नरदेव नरोत्तम ।**
**नाभिद्रुह्यन्ति भूतेभ्यो यर्ह्यनात्मा कलेवरम् ॥ ३ ॥**

**प्रकाशिका** – अक्षमा न साधूनां गुण इत्याशयेनाह ॥ सुधिय इति । तत्र निमित्तमाह ॥ यर्हीति । यर्हि यस्मात्कलेवरं शरीरमनात्मा जडं तस्मात्तदभिमानेन भूतानि नाभिद्रुह्यन्ति ॥ ३ ॥

**पुरुषा यदि मुह्यन्ति त्वादृशा देवमायया ।**
**श्रम एव परं जातो दीर्घया वृद्धसेवया ॥ ४ ॥**

**प्रकाशिका** – इतोऽप्यभ्यस्तशास्त्राणामक्षमा नोचितेत्याह ॥ पुरुषा इति । मुह्यन्ति देहाभिमानेन स्वाननुकूलानि भूतानि द्रुह्यन्ति । वृद्धसेवया तज्जनितशास्त्राभ्यासेन ॥ ४ ॥

**अत एव इमं विद्वानविद्याकामकर्मभिः ।**
**आरब्धमिति नैवास्मिन् प्रतिबुद्धो न सज्जते ॥ ५ ॥**

**प्रकाशिका** – प्रतिबुद्धो ज्ञानी । अस्मिन्नस्वाभाविके काये नानुषज्जते । भूतद्रोहकरमभिमानं न करोतीत्यर्थः ॥ ५ ॥

**असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे ।**
**अपत्ये द्रविणे दारे कः कुर्यान्ममतां बुधः ॥ ६ ॥**

**प्रकाशिका** – ननु शरीराभिमानत्यागेन तत्प्रयुक्तभूतद्रोहाभावेऽपि गृहापत्याद्यभिमानप्रयुक्तो भूतद्रोहः स्यादेवेत्यत आह ॥ असंसक्त इति । गृहाद्यभिमाने शरीराद्यभिमानस्य हेतुत्वात्तदभावे गृहाद्यभिमानो निर्मूलो नोत्पत्स्यत इति भावः ॥ ६ ॥

**एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः ।**
**सर्वगोऽनावृतः साक्षी निरात्माऽनात्मनः परः ॥ ७ ॥**

**तात्पर्यम् – 'अन्येषामावृतो विष्णुः स्वस्यानावृत एव च । 'आत्मा सर्वस्य जगतस्तस्यात्माऽन्यो न विद्यते । सुषुप्तवच्च निर्दुःखो जाग्रद्वच्च प्रवृत्तिमान् । अनन्यसदृशत्वाच्च केवलोऽसौ हरिः स्मृत' इति तन्त्रसारे । 'आत्मनैवावगम्य-त्वाद्धरिरेषः सुषुप्तवत् । केवलत्वेन विज्ञेयो मुक्तिस्तद्वद्दुःखते'त्यध्यात्मे ॥ ७ ॥**

**प्रकाशिका** – शरीरादावभिमानत्यागोऽपि भगवत्स्वरूपज्ञानेनैव स्यादित्याशयेन भगवत्स्वरूपमुपदिशति ॥ एक इति । एकः स्वगतभेदशून्यः शुद्धो जन्मादिदोषदूरः । स्वयं-ज्योतिर्न परप्रकाश्यो निर्गुणः सत्त्वादिगुणविकारविधुरः । गुणाश्रयो ज्ञाननन्दादिगुणाश्रयः । सर्वगोऽनावृत इत्यादौ सर्वग इत्यनेन तत्तद्देहाद्यावृतत्वमनावृत इत्यनेन कथं विरुद्धमनावृतत्व-मुच्यते । एवं निरात्मेत्यनेन जडत्वमुक्त्वा पुनरात्मेत्यात्मत्वं कथं विरुद्धमुच्यते । कश्च कैवल्य-शब्दार्थः । सुषुप्तं तन्निदर्शनमित्यत्र दार्ष्टान्तिकं च किमित्यपेक्षायां तत्सर्वं प्रमाणेनैवोप-पादयति ॥ अन्येषामिति । सर्वग इत्यस्य तात्पर्यम् ॥ अन्येषामिति । आवृत एवेति संबन्धः । आत्मेत्यस्यार्थप्रदर्शनम् ॥ आत्मा सर्वस्येति । निरात्मेत्यस्यार्थकथनम् ॥ तस्येति । आत्मा स्वामी । तथा च प्रमाणैर्निवारित आत्मा स्वामी यस्येति तदर्थः । न त्वचेतन इत्यतो न विरोध इति भावः । सुषुप्तं तदिति निदर्शनस्य दार्ष्टान्तिकमाह ॥ सुषुप्तवच्च निर्दुःखश्चेति । अनेन सुषुप्तशब्दः सुप्तजीवपर इति सूचयति । निर्दुःख इति कैवल्यशब्दार्थप्रदर्शनम् । तथा च तस्य भगवतः कैवल्यं निर्दुःखत्वं धर्मः । तत्तत्र सुषुप्तं सुप्तजीवजातं दर्शनमिति मूलं योज्यमिति भावः । सुषुप्तमित्येतदुपलक्षणम् । जाग्रदित्यपि ग्राह्यम् । तथा च कैवल्यं स्वातन्त्र्येण प्रवृत्तिमत्त्वं तस्य धर्मस्तत्र जाग्रज्जीवो निदर्शनमित्यपि मूलार्थमभिप्रेत्योक्तम् ॥ जाग्रद्वच्च प्रवृत्तिमानिति । कैवल्यशब्दस्यार्थान्तरमप्याह ॥ अनन्येति । अत्र चशब्देन निर्दुःख इत्यादिपूर्वोक्तमपि कैवल्यशब्दार्थप्रदर्शनपरमिति सूचयति । अत्रापि सुषुप्तनिदर्शनं विवक्षितमिति ज्ञेयम् । प्रमाणान्तरेण कैवल्यमित्यर्धस्य तात्पर्यं प्रकारान्तरेण दर्शयति ॥ आत्मनैवेति । एष हरिः केवलत्वेन केवलशब्दार्थत्वेन विज्ञेयः । कुत इत्यत उक्तम् ॥ सुषुप्तवदिति । सुषुप्तवदात्मनैव

स्वरूपज्ञानेनैवावगम्यत्वादिति । तथा च कैवल्यं स्वस्वरूपज्ञानेनैवावगम्यत्वं तस्य धर्मः । तत्र सुषुप्तदर्शनम् । सुषुप्त्यवस्थायां जीवस्वरूपज्ञानेनैवावगम्यत्वस्यैतावन्तं कालं सुखमहम-स्वाप्समित्युत्तरकालीनपरामर्शान्यथाऽनुपपत्त्या सिद्धार्थत्वादिति मूलार्थ इति भावः । अत्र सुषुप्तशब्दो मुक्तिपरतयाऽपि विवक्षितस्तस्य च मुक्तिपरत्वं सुप्तिवाचकशब्दानां मुक्तिपरत्वस्य शास्त्रे सिद्धत्वादित्यभिप्रेत्य कैवल्यमित्यर्धस्य तात्पर्यमाह ।। मुक्तिरिति । सुषुप्तशब्दवाच्येति शेषः । कैवल्यशब्दार्थप्रदर्शनम् ।। अदुःखतेति । तथा च कैवल्यं निर्दुःखत्वं तस्य धर्मः । तत्तत्र सुषुप्तं मुक्तिर्निदर्शनमिति मूलं योज्यमिति भावः । आत्मनो जीवराशेः पर उत्तमः ।। ७ ।।

**देहाद्यपार्थास्तद्धर्मा न स्युस्तद्द्रष्टुरात्मनः ।**
**कैवल्यं तस्य वै धर्मः सुषुप्तं तन्निदर्शनम् ।। ८ ।।**

**प्रकाशिका** – नन्विदमयुक्तम् । जीववद्देहादिमत्वेन तद्धर्मजननादिमत्वेन च कृष्णरामादिरूपे प्रतीयमानत्वादित्यत आह ।। देहादीति । जडदेहादयोऽपार्था अपगतप्रयोजनाः । अतो न तस्य सन्तीति शेषः । तर्हि कथमस्मदादिदेहे तस्यावस्थानमित्यत उक्तम् ।। न स्युस्तद्द्रष्टुरिति । केवलं साक्षितया शरीरादिकं पश्यत आत्मनः परमात्मन इति । तथा च रामकृष्णादिदेहा न जडरूपा अवाप्तसमस्तकामतया तत्साध्यप्रयोजनाभावात् । अस्मदादिदेहेषु च तटस्थ एव तद्द्रष्टा नियाम-कतयाऽस्त्यतो न जडदेहादिसंबन्धस्तस्य नापि तद्धर्मा जडदेहधर्मा जननादयस्तस्य स्युरित्यर्थः । अत आत्मनः पर इत्युक्तमुपपन्नमित्याशयः । तर्हि कस्तस्य धर्म इत्यपेक्षायामाह ।। कैवल्यमिति । व्याख्यातमेतत् ।। ८ ।।

**य एवं सन्तमात्मानमात्मस्थं वेद पूरुषः ।**
**नाज्यते प्रकृतिस्थोऽपि तद्गुणैः समवस्थितः ।। ९ ।।**

**प्रकाशिका** – यदर्थं भगवत्स्वरूपमुपदिष्टं तदिदानीमाह ।। य एवमिति । यः पुरुष एवं सन्तमेवं भूतमात्मानं परमात्मानं वेद । स प्रकृतिस्थोऽपि तत्कार्यदेहस्थोऽपि तद्गुणैः शरीरगुणैः सुखदुःखादिभिर्नाज्यते न लिप्यते । यतः समवस्थितोऽभिमानत्यागेनावस्थितः । तथा चोक्तज्ञानेन शरीराभिमानत्यागो भवति । ततश्च तद्धर्मालेप इत्याशयः ।। ९ ।।

**यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयाऽन्वितः ।**
**भजते शनकैस्तस्य मनो राजन् प्रसीदति ।। १० ।।**

**प्रकाशिका** – मनःशुद्धिरप्यभिमानत्यागकारणमित्यभिप्रेत्य मनःशुद्धिजनकमुपदिशति ।। य इति । प्रसीदति शुद्धं भवति ।। १० ।।

**परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः ।**
**शान्तिं मे समवस्थानं ब्रह्म कैवल्यमश्नुते ॥ ११ ॥**

**प्रकाशिका** – ननूक्तविधानेन जाताभ्याममभिमानत्यागमनःशुद्धिभ्यां च किं प्रयोजनमित्यत आह ॥ परित्यक्तेति । परित्यक्तगुणो विषयाभिमानशून्यः उक्तरीत्या विशदाशयः शुद्धान्तःकरणः सन् । सम्यक् समीचीनं ब्रह्म तद्विषयकं दर्शनं यस्य स तथा । ब्रह्मापरोक्षज्ञानी भवतीत्यर्थः । तेनापि किमित्यत उक्तम् ॥ शान्तिमिति । मे मत्प्रसादाच्छान्तिमश्नुत इति । का शान्तिरित्यतो ब्रह्मप्राप्तिरेवेत्याह ॥ समवस्थानमिति । सम्यक् स्वरूपाविर्भावेनावस्थानं यस्मात्तत्तथा । स्वरूपाविर्भावकरं कैवल्यं निर्दुःखं ब्रह्माश्नुते ॥ ११ ॥

**उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम् ।**
**कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम् ॥ १२ ॥**

**तात्पर्यम्** – **'हरिरक्लिष्टकारित्वादुदासीन इतीर्यत' इति च ॥ १२ ॥**

**प्रकाशिका** – मोक्षार्थमेवमपि ब्रह्म ज्ञातव्यमित्याह ॥ उदासीनमिति । अत्रोदासीनमित्यनेन कर्तृत्वाभाव एवोच्यत इति भाति । अतोऽत्र तात्पर्यं प्रमाणेनैव दर्शयति ॥ हरिरिति । तथा च द्रव्यज्ञानक्रियात्मनां भूतज्ञानकर्मेन्द्रियात्मकानां देहानामध्यक्षमधिपतिं तथाऽप्युदासीनमिव स्थितम् । अक्लिष्टकारित्वात् । इमं पूर्वोक्तगुणमात्मानं यो वेद स उक्तरीत्या शोभनं स्वस्वरूपं परं ब्रह्म चाप्नोति ॥ १२ ॥

**भिन्नस्य लिङ्गस्य गुणप्रवाहं द्रव्यक्रियाकारकचेतनात्मनः ।**
**दृष्ट्वा सुसंपत्सु विपत्सु सूरयो न विक्रियन्ते मयि बद्धसौहृदाः ॥ १३ ॥**

**तात्पर्यम्** – **'जीवाद्भिन्नस्य मनसो गुणाः सत्वादयो मताः । तज्ज्ञात्वा न विकुर्वीत स्वस्वरूपं मनस्तथे'ति षाड्गुण्ये ॥ १३ ॥**

**प्रकाशिका** – न केवलमुक्तविधब्रह्मज्ञानेनैवाभिमानत्यागः किन्तु कारणान्तरमपि तत्रास्तीशयेनाह ॥ भिन्नस्येति । अस्य श्लोकस्य विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ जीवादिति । भिन्नस्येतज्जीवाद्भिन्नस्येति व्याख्यातम् । लिङ्गस्येत्यस्यार्थः ॥ मनस इति । गुणप्रवाहमित्यस्य तात्पर्यम् ॥ गुणा इति । दृष्ट्वा न विक्रीयन्त इत्यस्य तात्पर्यं तत्ज्ञात्वा न विकुर्वीतेति । चेतनात्मन इत्यस्य तात्पर्यम् ॥ स्वस्वरूपमिति । ज्ञात्वेत्यस्यानुकर्षणार्थस्तथा शब्दः ॥ तथा

चायमर्थः ॥ द्रव्यक्रियाकारकचेतनात्मनो द्रव्यक्रियाकारकात्मनश्चेतनात्मनश्चेति व्याख्येयम् । तथा जीवाद्भिन्नस्य द्रव्यक्रियाकारकात्मनो भूतकर्मज्ञानेन्द्रियात्मकलिङ्गशरीररूपस्याचेतनस्य चेतनात्मनः स्वस्वरूपात्मकस्य लिङ्गस्य लीनं पदार्थजातं गमयतीति लिङ्गं तस्य मनसः चेतनाचेतनात्मकमनस इति यावत् । सकाशाद्गुणप्रवाहं सत्त्वादिगुणविकारप्रवाहरूपं संसारं दृष्ट्वा ज्ञात्वा प्रत्यक्षासु संपत्सु विपत्सु च प्राप्तासु न विक्रियन्ते जातोऽहं मृतोऽहमित्यादिविकारं न प्राप्नुवन्ति । के । सूरयः । अत्र हेतुगर्भविशेषणमाह ॥ मयीति । मयि बद्धं दृढीकृतं सौहृदं प्रेम येषां ते तथा । दृढभक्तिमन्त इत्यर्थः । तथा चेतनाचेतनभेदेन द्विविधं मन एव सत्त्वादि-गुणप्रवाहरूपसंसारकारणरूपमिति तन्निवृत्तौ ज्ञानं भक्तिश्चेति कारणद्वयमत्र निरूपितमिति ज्ञातव्यम् ॥ १३ ॥

**समः समानोत्तममध्यमाधमः सुखे च दुःखे च जितेन्द्रियाशयः ।**
**मयोपक्लृप्ताखिलसत्त्वसंयुतो विधत्स्व धीराखिललोकरक्षणम् ॥ १४ ॥**

**प्रकाशिका** – मोक्षसाधनान्तराणि दर्शयन् स्वधर्मेणेत्युक्तं स्वधर्मं राज्ञ उपदिशति ॥ सम इति। सुखे दुःखे च समो निर्विकार इति द्वंद्वसहिष्णुत्वम् । स्वस्वयोग्यतानुसारेण समाना उत्तममध्यमाधमा यस्य । अनेन सर्वत्र समबुद्धित्वम् । जितेन्द्रियाशय इत्यनेनेन्द्रियजयश्चेत्येतानि साधनान्यत्रोक्तानीति ज्ञातव्यम् । स्वधर्मं दर्शयति ॥ अखिललोकरक्षणं विधत्स्वेति । कथमेकेन मया तत्कर्तुं शक्यमित्यपेक्षायामाह ॥ मयेति । मयोपक्लृप्ताः संपादिता ये सत्त्वा द्विजाग्र्यादयः प्राणिनस्तैः संयुत इत्यर्थः ॥ १४ ॥

**श्रेयः प्रजापालनमेव राज्ञो यत् सांपराये सुकृतं षष्ठमंशम् ।**
**अतोऽन्यथा हृतपुण्यः प्रजानामरक्षिता करहारोऽघमत्ति ॥ १५ ॥**

**प्रकाशिका** – ननु लोकरक्षणं दण्डादिसापेक्षम् । अतस्तत्त्यक्त्वाऽन्यद्विधेयमित्यत आह ॥ श्रेय इति । यद्यस्मात्सांपराये मोक्षे स्वर्गे वा प्रजाकृतात्सुकृतं विभज्य षष्ठमांशमत्ति तस्मात् विपक्षे बाधकमाह ॥ अतोऽन्यथेति । प्रजादिभिर्हृतं पुण्यं यस्य सः । प्रजानामघं पापमत्ति भुंक्ते । अतोऽन्यथेत्यस्य विवरणम् ॥ करहारः सन्नरक्षितेति । दण्डादियुक्तमपीदं राज्ञस्तव मोक्ष-साधनतया वेदविहितमिति भावः ॥ १५ ॥

**एवं द्विजाग्र्यानुमतानुवृत्तो धर्मे प्रजानां च समोऽविताऽस्याः ।**
**ह्रस्वेन कालेन गृहोपयातान् द्रष्टासि सिद्धाननुरक्तलोकः ॥ १६ ॥**

**प्रकाशिका** – योग्यताभिज्ञगुरूपदिष्टज्ञानमेव सर्वेषां मोक्षसाधनतया प्रसिद्धमतः किं प्रजारक्षणेनेत्याशङ्कायां राज्ञां प्रजारक्षणरूपकर्मणैव तादृशगुरुप्राप्तिरपि भवतीत्याशयेनाह ॥ एवमिति । द्विजाग्र्याणामनुमतश्चासावनुवृत्तश्च परंपराप्राप्तो यो धर्मः स एव प्रधानो ययोस्तौ धर्मप्रधानौ धर्मप्रधानावन्यतमावन्यावर्थकामौ यस्य सः । धर्म एव प्रधानः । अर्थकामौ तु प्रासंगिकौ यस्येत्यर्थः । एवं भूतः सन् अस्याः पृथिव्या अविता रक्षिता चेत्सिद्धान्सनकादीन् अनुरक्तो लोको यस्मिन् ॥ १६ ॥

**वरं च मत् कंचन मानवेन्द्र वृणीष्व तेऽहं गुणशीलयन्त्रितः ।**
**नाहं मखैर्वै सुलभस्तपोभिर्योगेन वा यः समवृत्तवर्ती ॥ १७ ॥**

**प्रकाशिका** – साक्षात्कृतो वैकुण्ठोऽपि कश्चनवरं नादादिति लोकापवादं परिहरति ॥ वरं चेति । मत् मत्तो गुणैर्भक्त्यादिभिः शीलेन स्वत्स्वभावेन यन्त्रितो वशीकृतो योगेनाष्टाङ्गलक्षणेन समं तत्तद्योग्यतानुसारेण विकृतं वृत्तं वर्तनं येषां ते समवृत्ताः समदर्शिनः पुरुषास्तेषु वर्तितं शीलमस्येति समवृत्तवर्ती यद्यस्मात्तस्मान्नाहं मखादिना सुलभः स्यां किन्तु गुर्वादिषु संवृद्धभक्त्यैवेत्यर्थः ॥ १७ ॥

**मैत्रेय उवाच–**

**स इत्थं लोकगुरुणा विष्वक्सेनेन विश्वजित् ।**
**अनुशासित आदेशं शिरसा जगृहे हरेः ॥ १८ ॥**

**प्रकाशिका** – विश्वजित्समस्तजेता राजा ॥ १८ ॥

**स्पृशन्तं पादयोः शीर्ष्णा व्रीडन्तं स्वेन कर्मणा ।**
**शतक्रतुं परिष्वज्य विद्वेषं विससर्ज ह ॥ १९ ॥**

**तात्पर्यम् – 'आयासदुःखव्रीडादीन्प्रायशः सुखिनोऽपि तु । नियमादृषिभूतेषु मोहाया-दर्शयन्सुरा' इति ब्रह्मतर्के ।**

**'अपक्वभक्तियुक्ता ये न तेषां विष्णुदर्शनम् । प्रायो भवति दुःखस्य त्वभावः प्रायशो भवेदि'ति प्रकाशसंहितायाम् ॥ १९ ॥**

**प्रकाशिका** – क्षमापयितुं पादयोः स्पृशन्तं स्वेन स्वीयेन कर्मणाऽश्वापहरणरूपेण व्रीडंतम् । प्रेम्णा परिष्वज्य । अत्र तात्पर्यं यद्यपि पूर्वाध्याये देवाः शक्ताश्चेत्यादिना प्रमाणं दर्शितं तथापि

दाढर्याय प्रमाणान्तरेणापि दर्शयति ॥ आयासेति । आदिशब्देन प्रणामादिग्रहणम् । सुरा नियमात् । तारतम्यनियममपेक्ष्य ऋष्यादिभ्यो विशेषेण सुखिनोऽपि ऋषिभूतेषु च विषयेष्वाया-सादीन्प्रायशो मोहायादर्शयन्नित्यन्वयः । आज्ञया वा हरेः क्वापि इति वचनेन हर्याज्ञादिनाऽपि तत्प्रदर्शनावगमात्प्रायश इत्युक्तम् । नन्वपरोक्षज्ञानिनो जीवन्मुक्तस्य पृथोः कथं द्वेषप्रसक्तिः । कथं च यज्ञासमाप्तिनिमित्तदुःखप्रसक्तिर्येन द्वेषं विससर्ज हेति वचनं ब्रह्मणस्तद्दुःख शान्तिपरिहारप्रकारोपदेशश्चमूले सङ्गतं स्यात् । इत्यतो जीवन्मुक्तानामपि दुःखादिप्रसक्तिं प्रमाणेनैव दर्शयति ॥ अपक्वेति । अपक्वभक्त्या युक्ता जीवन्मुक्ता ऋषिभूपादय एतेषां प्रायो बाहुल्येन ब्रह्मदर्शनं न भवति । प्रायशः प्रारब्धकर्मणा तिरोहितं ब्रह्मदर्शनं यत्नेन कदाचिदेवाविर्भवतीत्यर्थः । अनेन पक्वभक्तीनां देवानां प्रायो ब्रह्मदर्शनं भवतीति सूचयति । तेषां बाहुल्येन ब्रह्मदर्शनं भवति । कदाचित्प्रारब्धकर्मणा तिरोधानमिति मन्तव्यम् । तुशब्दो हेत्वर्थः । अतो दुःखस्याभावोऽपि प्रायशो भवेदित्यर्थः । दुःखशब्दो द्वेषादेरप्युपलक्षकः । तथा च पृथोर्भूपस्य कदाचिद्यत्नेन ब्रह्मदर्शने जाते तस्मिन्समये आनन्दभरितस्य दुःखद्वेषाद्यभावेऽपि प्रारब्धकर्मणा तिरोधानसमये द्वेषादिप्रसक्तिरस्त्येवेति भावः ॥ १९ ॥

**भगवानपि विश्वात्मा पृथुनोपहृतार्हणः ।**
**समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः ॥ २० ॥**

**तात्पर्यम् –** **'जगत्समस्तं विश्वं च निखिलं पूर्णमुच्यत' इत्यभिधानम् ॥ २० ॥**

**प्रकाशिका –** मूले विश्वात्मेत्येतज्जगदभिन्न इति प्रतीतिवारणाय प्रमाणेनैव विश्वशब्दार्थमाह ॥ जगदिति । जगदादिशब्दैः पूर्णमुच्यत इत्यर्थः । तथा च गुणपूर्णदेह इति विश्वात्मेत्यस्यार्थः इत्यर्थः । समुज्जिहानया प्रार्थनया प्रवर्धमानया ॥ २० ॥

**प्रस्थानाभिमुखोऽप्येनमनुग्रहविलम्बितः ।**
**पश्यन् पद्मपलाशाक्षो न प्रतस्थे सुहृत् सताम् ॥ २१ ॥**

**प्रकाशिका –** प्रस्थानं प्रयाणम् । यात्रा प्रयाणं प्रस्थानमित्यभिधानम् । अनुग्रहेण विलंबितः सन् प्रयाणं न कृतवान् । पद्मपत्रवद्विस्तृताक्षः ॥ २१ ॥

**स आदिराजो रचिताञ्जलिर्हरिं विलोकितुं नाशकदश्रुलोचनः ।**
**न किंचनोवाच स बाष्पविक्लवो हृदोपगुह्यामुमथ व्यवस्थितः ॥ २२ ॥**

**प्रकाशिका** – एवं भगवतः कृपोत्कर्षमुक्त्वेदानीं पृथोर्भक्त्युद्रेकमाह ॥ स इति द्वाभ्याम् । अमुं हरिं हृदोपगुह्य ध्यात्वा व्यवस्थितः ॥ २२ ॥

**अथाभिमृज्याश्रुकणान् विलोकयन्नतृप्तदृग्गोचरमाह पूरुषम् ।**
**पदा स्पृशन्तं क्षितिमंस उन्नते विन्यस्तहस्ताग्रमुरङ्गविद्विषः ॥ २३ ॥**

**प्रकाशिका** – अश्रुकणान्नेत्रजलबिन्दून् अतृप्तयोर्दृशयोर्गोचरं विषयम् । पदा क्षितिं स्पृशन्तं स्वानुग्रहाय भूम्यामवस्थितमुरंगविद्विषो गरुडस्यांसे विन्यस्तहस्ताग्रम् ॥ २३ ॥

**पृथुरुवाच –**

**वरान् विभो त्वद् वरदेश्वराद् बुधः कथं वृणीते गुणविक्रियात्मनाम् ।**
**ये नारकाणामपि सन्ति चैहिकाः तानीश कैवल्यपतेर्वृणीत कः ॥ २४ ॥**

**प्रकाशिका** – वरं वृणीष्वेति यदुक्तं तदसहमान आह ॥ वरानिति । त्वत् त्वत्तो वरदानां ब्रह्मादीनामीश्वराद्बुधो ज्ञानी कथं वृणीते न कथमपि । ये त्वया दीयमाना ऐहिकार्था गुणैर्विषयैर्विक्रिया विकारो यस्य स तथा । एवं भूतात्मा मनो येषां तेषां नारकाणां नरकस्थानामपि सन्ति । बुधत्वादहमपि तान्न वृण इत्याह ॥ तानीशेति ॥ चशब्दोऽवधारणे । अहमपीत्यर्थो वा ॥ २४ ॥

**न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणाम्बुजासवम् ।**
**महत्तमान्तर्हृदयान्मुखच्युतं विधत्स्व कर्णामृतमेष मे वरः ॥ २५ ॥**

**प्रकाशिका** – त्वच्चरणकथाश्रवणमेव मया वरणीयं न तु तद्रहितकैवल्यमपीत्याशयेनाह ॥ न कामय इति । महत्तमानामन्तर्हृदयान्मुखद्वारेण च्युतं निःसृतं युष्मच्चरणाम्बुजयोराश्रितं यदासवं मकरन्दतुल्यं यशः कथा ग्रथितम् । तच्छ्रवणमिति यावत् । अत एव कर्णयोरमृतवत्सुखकरं यत्र कैवल्ये नास्ति तदप्यहं क्वचित्कदाचिदपि न कामये । तस्मात्तदेव विधत्स्व । पुनरन्यदपि वरं वरयेत्यपेक्षायामाह ॥ एष इति । एष एव मे मया वरणीयो वर इत्यर्थः ॥ २५ ॥

**स उत्तमश्लोकमहन्मुखच्युतो भवत्पदाम्भोजसुधाकणानिलः ।**
**स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः ॥ २६ ॥**

**प्रकाशिका** – किं यशाःश्रवणेनापि साध्यं फलं येन तदेव त्वया प्रार्थ्यत इत्यपेक्षायां तत्साध्यं फलं दर्शयन्नुक्तमेव विशदयति ॥ स इति । महन्मुखच्युतो महतां मुखद्वारेण च्युतः । हे

उत्तमश्लोक । भगवत्पदांभोजयोराश्रिताया: कथासुधाया: कणो लेशस्तत्संबन्धी योऽनिल: स एव दूरादपि किंचिच्छ्रवणमित्यर्थ: । विस्मृतं तत्त्ववर्त्म यैस्तेषां कुयोगिनां पुन: स्मृतिं तत्त्वज्ञानं वितरति विस्तारयति । अतो नोऽस्माकमन्यवरैरलं ॥ २६ ॥

**यशः शिवं सुश्रव आर्यसङ्गमे यदृच्छया चोपशृणोति ते सकृत् ।**
**कथं गुणज्ञो विरमेद् विना पशुं श्रीर्यत् प्रवव्रे गुणसंग्रहेच्छया ॥ २७ ॥**

**प्रकाशिका –** ननु मत्कथा त्वया बहुशः श्रुताऽस्त्यत: किं तद्वरेणेत्यत आह ॥ यश इति । हे सुश्रव: शोभनकीर्ते । आर्याणां तत्त्वज्ञानिनां संगमे यदृच्छया प्रसङ्गत: प्राप्तं ते तव यश:श्रियम् । कथारूपेण ग्रथितमिति शेष: । भक्त्योपशृणोति स गुणज्ञ: सारज्ञ: पुरुष: पशुमज्ञमृते कथमस्माद्विरमेदित्यन्वय: । अत्र निमित्तमाह ॥ श्रीरिति । यद्यशआदिगुणानां भगवत्संबन्धिनां संग्रह: सं समीचीनो ग्रह उपदेशो यस्मादिति स गुणसङ्ग्रहस्तदिच्छया लाकानां भगवद्गुणोप-देशेच्छया प्रवव्र इत्यर्थ: ॥ २७ ॥

**अथाभजं त्वाऽखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः ।**
**अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात् कृतस्त्वच्चरणैकतानयोः ॥ २८ ॥**

**प्रकाशिका –** अथ तस्मादभजं भजामि । पद्मकरेव श्रीरिव यज्ञविषये यथेन्द्रेण कलिर्जात एवं त्वद्भजनविषये रमया सह कलहो मम सर्वथा न भविष्यतीत्याह ॥ अप्यावयोरिति । हे अखण्डेश । जगत्यां यद्यपि कर्मण्येकपतिभजनरूपे एकेन क्रियमाणेऽपरस्य तद्भजकस्य जन्तोर्वैशसं विरोध: कलह: स्यादेव । अपि तथाऽप्येकमेव पतिं स्पर्धत इच्छत इत्येकपरिस्पृधौ तयोस्त्वच्चरणावेवैकतनौ मुख्याश्रयौ ययोस्तौ तयोरावयो: श्रियो मम च कलि: कलह: कृतो न स्यात् । तस्या हरिवद्भक्तवत्सलत्वादित्याशय: ॥ २८ ॥

**जन्तोर्जगत्यां जगदीश वैशसं स्यादेव यत् कर्मणि नः समीहितम् ।**
**करोषि फल्ग्वप्युरु दीनवत्सल स्व एव धिष्ण्येऽभिरतस्य किं तया ॥ २९ ॥**

**तात्पर्यम् – 'धिष्ण्यं तेजश्च सामर्थ्यं महिमा धाम चोच्यत' इत्यभिधानम् ॥ अल्पपुण्यत्वान्न मद्भक्तियोग्य इति न मन्तव्यम् । यत: फल्ग्वप्युरु करोषि वात्सल्यात् । विना वात्सल्यं श्रियाऽपि किं तव ॥ २९ ॥**

**प्रकाशिका –** न: समीहितमित्युत्तरग्रन्थस्य पूर्वेण संगत्यप्रतीतेस्तामाह ॥ अल्पपुण्यत्वा-दिति । भक्तियोग्यो भजनयोग्य: । त्वमिति शेष: । न वक्तव्यमित्यनन्तरमित्याह न:

समीहितमित्यादिनेति शेषः । यदित्यस्यावृत्तिमभिप्रेत्योक्तम् ॥ यत इति । दीनवत्सलेति संबोधनं हेतुगर्भमित्याशयेनोक्तम् ॥ वात्सल्यादिति । या महतीं सेवां करोति श्रीस्तस्यामपि महती प्रीतिर्वात्सल्यप्रयुक्तैव न तत्सेवामहत्वप्रयुक्तेति दर्शयितुं स्व एव धिष्ण्येऽभिरतस्य किं तयेति मूलं प्रवृत्तम् । तत्रापेक्षितं पूरयन् किं तयेत्यस्य विवक्षितं तात्पर्यमाह ॥ विनेति । तयेत्यस्यार्थः श्रियेति । धिष्ण्यशब्दस्य प्रकृतयोग्यमर्थं प्रमाणेनैव दर्शयति ॥ धिष्ण्यं तेज इति । महिमा धिष्ण्यादिभिः शब्दैरुच्यत इत्यर्थः । अस्याभिधानस्य किं तवेत्यनन्तरं वक्तव्यत्वेऽपि पूर्वमुदाहरणं विश्वशब्दार्थाभिधानकथनप्रसङ्गात्कृतम् ॥ ततश्चायं यन्त्रः समीहितमित्यादेरर्थः ॥ हे दीनवत्सल। त्वं यद्यतो नोऽस्माकं समीहितं चेष्टितं भजनं फल्ग्वप्युरु करोषि भक्तेषु वात्सल्यात्। सत्यं लोके महद्भिः सेव्ये राजादौ नाल्पकस्य भजनाधिकारस्तथाऽपि न त्वं लौकिकराजादिरिव । यतो भक्तकृते भजनेऽल्पत्वं तुच्छीकृत्य तदीयां भक्तिमेव निरीक्ष्य तुष्टो भवसि । अतोऽल्पकस्यापि मम त्वद्भजने योग्यताऽस्तीत्याशयः । त्वदीयभजनेऽल्पत्वं तुच्छीकृतमिति कथं ज्ञायत इति चेद्यतो या महतीं सेवां करोति श्रीस्तस्यामपि तव महती प्रीतिर्वात्सल्यप्रयुक्तैव न सेवामहत्वप्रयुक्तेत्याह ॥ स्व एवेति । स्व एव स्वरूपभूत एव धिष्ण्ये महिम्न्यभिरतस्य । स्वरमणस्येति यावत् । तव तयाऽपि श्रियाऽपि वात्सल्यं विना सेवामहत्वेन साध्यं प्रयोजनं किं न किमपि । तथा च त्वद्भजनयोग्यतायामल्पपुण्यत्वादिकं न प्रयोजकं किन्तु भक्तिरेव तत्प्रयोजिकेत्याशयः ॥ २९ ॥

**भजन्त्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम् ।**
**भवत्पदानुस्मरणादृते सतां निमित्तमन्यद् भगवन् न विद्महे ॥ ३० ॥**

**तात्पर्यम् – अथान्यच्च । अतः वात्सल्यादेव ॥ ३० ॥**

**प्रकाशिका** – त्वद्भजनयोग्यतायां भक्तिरेव प्रयोजिका न महत्पुण्यत्वादिकमित्यत्र युक्त्यन्तरमाह ॥ भजन्तीति । अथशब्दस्यानन्तर्याद्यर्थत्वेऽसंगतिमालोच्य सङ्गतमर्थं दर्शयति ॥ अथेति । अन्यच्च प्रमाणमत्रोच्यत इत्यथशब्दस्यार्थ इत्यर्थः । स्व एव धिष्ण्येऽभिरतस्येत्यादि-नोक्तयुक्तिसमुच्चयार्थश्चकारः । अत एवेत्यनेन परामृश्यं हेतुं दर्शयति ॥ अत इति ॥ ततश्चायं श्लोकार्थः ॥ अथ किं च साधवो निष्कामा अत एव तव भक्तेषु वात्सल्यादेव त्वां भजन्ति । अन्यथा सेवामहत्त्वस्यैव प्रयोजकत्वे तन्न स्यादित्याशयः । कथंभूतं त्वाम् । व्युदस्तो दूरीकृतो मायागुणानां सत्त्वादीनां भ्रमो विलासः । विकार इति यावत् । तस्योदयं कार्यं येन । ननु ते निष्कामाः किमर्थं त्वां भजन्तीत्यपेक्षायामाह ॥ भवत्पदेति । निमित्तमुद्देश्यं फलम् । अतस्त्वत्स्मरणमेव तेषामावश्यकमेवेत्याशयः ॥ ३० ॥

**मन्ये गिरं ते जगतां विमोहिनीं वरं वृणीष्वेति भजन्तमात्थ यत् ।**
**वाचा नु तन्त्या यदि ते जनोऽसितः कथं पुनः कर्म करोति मोहितः ॥३१॥**

**प्रकाशिका** – नन्वेवं वरं वृणीष्वेति कथं भगवतोक्तमित्यपेक्षायां मोक्षस्य दौर्लभ्यात्तादृशवाचा प्रलोभनं तस्य स्वभाव एवेत्याशयेनाह ॥ मन्य इति । न केवलं वरं वृणीष्वेति वाचैव विमोहयसि किन्तु स्वर्गकामो यजेतेत्यादिरूपया वेदवाचाऽपीत्याह ॥ वाचेति । वेदवाग्रूपया तंत्या यदि जनोऽसितोऽबद्धःस्यात्तर्हि पुनः फलैर्विमोहितः सन् कथं कर्म करोति । फलेच्छया पुनः पुनर्वेदविहितकर्मकरणं न स्यादिति यावत् । वर्तते च तत् । तस्मादुक्तरूपवेदवाचा मोहित इत्यवगम्यत इत्यर्थः ॥ ३१ ॥

**त्वन्माययाऽद्धा जगदीश खण्डितो यदन्यदाशास्त ऋतात्मनोऽबुधः ।**
**यथा चरेद् बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितम् ॥ ३२ ॥**

**प्रकाशिका** – अनादित एव त्वदीयबन्धकशक्त्या मोहितस्य पुनर्वरं वृणीष्वेति मोहनं मृत-मारणमेवेत्याशयेनाह ॥ त्वन्माययेति । अद्धाऽनादिकालमारभ्याबुधो जनो ऋतात्मनो विकार-शून्यस्य हरेः सकाशादन्यत्स्वर्गादिकमाशास्त इति यस्मात्तस्मादेष त्वन्मायया बन्धकशक्त्या खण्डितस्त्वद्भजनाद्वियोजितस्तं प्रत्येतादृशवचनं कृपालोस्तव नोचितमिति शेषः । तस्मा-दस्मद्धितमेव त्वया कार्यमित्याह ॥ यथेति । स्वयमविज्ञापित एव समीहितुं चेष्टितुमर्हसि ॥३२॥

**श्रीभगवानुवाच –**

**साधु तेऽवसितं राजन्नाशास्ते न यदाशिषः ।**
**स्वर्गापवर्गनरकान् समं पश्यति मत्परः ॥ ३३ ॥**

**प्रकाशिका** – आशिषो भवान् नाशास्त इति यद्यस्मात्तस्मात्ते त्वयाऽवसितं निश्चितं साधु । तत्किमित्यत आह ॥ स्वर्गेति । अपवर्गोऽपि भक्तिफलत्वेन दीयमानो हेयत्वेन स्वर्गादिसमं पश्यतीत्यर्थः । तथा च भगवानेव पुरुषार्थस्तदतिरिक्तं हेयमिति व्यवस्थितिरनेन दर्शितमिति ज्ञातव्यम् ॥ ३३ ॥

**प्रीतोऽहं ते महाराज रोषं दुस्त्यजमत्यजः ।**
**श्रद्दधानो मदादेशं तन्मह्यं परमार्हणम् ॥ ३४ ॥**

मैत्रेय उवाच–

इति वैन्यस्य राजर्षेः प्रतिनन्द्यार्थवद् वचः ।
पूजितोऽनुगृहीत्वैनं गन्तुं चक्रेऽच्युतो मतिम् ॥ ३५ ॥
देवर्षिपितृगन्धर्वसिद्धचारणपन्नगाः ।
किन्नराप्सरसोऽमर्त्याः खगा भूतान्यनेकशः ॥ ३६ ॥

प्रकाशिका – तत् मदादेशकारणम् ॥ ३४,३५,३६ ॥

यज्ञेश्वरधिया राज्ञा वाग्वित्ताञ्जलिभक्तितः ।
सभाजिता ययुः सर्वे वैकुण्ठानुगतास्ततः ॥ ३७ ॥
भगवानपि राजर्षेः सोपाध्यायस्य पश्यतः ।
हरन्निव मनोऽमुष्य स्वधाम प्रत्यगात् प्रभुः ॥ ३८ ॥

तात्पर्यम् – 'भूतेषु हरिरित्येव हर्यर्पणधिया तथा । सर्वभूतेषु च हरेः पूजा कार्याऽऽत्मवेदिभिरि'ति पाद्मे ॥ ३७ ॥

प्रकाशिका – यज्ञेश्वरधियेत्यस्य विवेक्षितमर्थं प्रमाणेनैव दर्शयति ॥ भूतेष्विति । सर्वभूतेषु च हरेः पूजा कार्या । चशब्दः पृथुकृतप्रणामादिसमुच्चायकः । कया बुद्ध्या भूतेषु हरिर्नियामकतयाऽस्तीति धिया । एवशब्दो न भूतान्येव हरिरिति धियेत्यर्थः । अनेन यज्ञेश्वरो हरिः सदैव ऋष्यादिषु संनिहितः पूज्य इति धिया । तथा च स्वस्मिन्नपि यज्ञेश्वरधियेति मूलार्थ इति भावः । प्रकारान्तरेणापि तद्व्याख्याति ॥ हर्यर्पणेति । तथाशब्दः पूर्वोक्तसमुच्चायकः । हर्यर्पणधिया मयि स्थित्वा हरिरेव कारयितेति धियेत्यर्थः इति मूलव्याख्यानं सूचयति ॥ ततश्चायं श्लोकार्थः ॥ उक्तरीत्या यज्ञेश्वरधिया वाक्चित्तांजलिभिर्भक्तितः सभाजिताः पार्षदाश्च । ततः स्थानात् ॥ ३७,३८ ॥

अदृष्टाय नमस्कृत्य स्वस्य संदर्शितात्मने ।
वासुदेवाय देवानां देवाय स्वपुरं ययौ ॥ ३९ ॥

प्रकाशिका – अदृष्टाय चक्षोरविषयाय स्वस्य संदर्शितात्मने साक्षात्कारितस्वरूपाय तस्मै ॥ ३९ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे विंशोऽध्यायः ॥ २० ॥

## अथैकविंशोऽध्यायः ।

**मैत्रेय उवाच–**

**मौक्तिकैः कुसुमस्रग्भिर्दुकूलैः स्वर्णतोरणैः ।**
**महासुरभिभिर्धूपैर्मण्डितं तत्र तत्र वै ॥ १ ॥**

**प्रकाशिका –** ॥ हरिः ॐ ॥ तत्पुरं वर्णयति ॥ मौक्तिकैरिति त्रिभिः ॥ १ ॥

**चन्दनागुरुतोयार्द्ररथ्याचत्वरमार्गवत् ।**
**पुष्पाक्षतफलैस्तोयैर्लाजैरर्चिभिरर्चितम् ॥ २ ॥**

**प्रकाशिका –** चन्दनागुरुयुक्ततोयैरार्द्रा रथ्या चत्वरमार्गा अस्मिन्सन्तीति तत्तथोक्तम् । तोयैः शुद्धोदकैः । अर्चिभिर्दीपज्वालाभिरर्चितमलङ्कृतम् ॥ २ ॥

**संवृतैः कदलीस्तम्भैः पूगपोतैः परिष्कृतम् ।**
**तरुपल्लवमालाभिः सर्वतः समलंकृतम् ॥ ३ ॥**

**प्रकाशिका –** पूगपोतैः क्रमुकांकुरैः परिष्कृतमलङ्कृतम् ॥ ३ ॥

**प्रजास्तं दीपबलिभिः संभृताशेषमङ्गलैः ।**
**अभीयुर्मृष्टकन्याश्च मृष्टकुण्डलमण्डिताः ॥ ४ ॥**

**प्रकाशिका –** संभृतानि संपादितान्यशेषाणि मङ्गलानि दध्यादीनि तैश्च सहाभीयुः । मृष्टाः शुद्धाः ॥ ४ ॥

**शङ्खदुन्दुभिघोषेण ब्रह्मघोषेण चर्त्विजाम् ।**
**विवेश भवनं वीरः स्तूयमानो गतस्मयः ॥ ५ ॥**

**प्रकाशिका –** भूयः पुरप्रवेशानन्तरं गतस्मयो गर्वरहितः ॥ ५ ॥

**पूजितः पूजयामास तत्र तत्र महायशाः ।**
**पौरान् जानपदांस्तांस्तान् प्रीतः प्रियवरप्रदः ॥ ६ ॥**

**प्रकाशिका –** प्रियानभीष्टान्वरान्ददातीति प्रियवरप्रदः ॥ ६ ॥

**स एवमादीन्यनवद्यचेष्टितः कर्माणि भूयांसि महन्महत्तमः ।**
**कुर्वन् शशासावनिमण्डलं यशः स्फीतं निधायारुरुहे परं पदम् ॥ ७ ॥**

**प्रकाशिका** – भूयांसि महान्ति । स्फीतं पुष्टम् । निधाय । लोक इति शेषः ॥ ७ ॥

**सूत उवाच–**

**श्रुत्वाऽऽदिराजस्य यशो विजृम्भितं गुणैरशेषैर्गुणवत्सभाजितम् ।**
**क्षत्ता महाभागवतः सदस्पते कौशारविं प्राह गुरुं समर्चयन् ॥ ८ ॥**

**प्रकाशिका** – अशेषैर्गुणैर्विजृंभितमूर्जितं गुणवद्भिः पुरुषैः सभाजितं सत्कृतं गृणन्तम् । हे सदसस्पते राजन् ॥ ८ ॥

**विदुर उवाच–**

**सोऽभिषिक्तः पृथुर्विप्रैर्लब्धाशेषसुरार्हणः ।**
**बिभ्रच्च वैष्णवं तेजो बाह्वोर्याभ्यां दुदोह गाम् ॥ ९ ॥**

**प्रकाशिका** – लब्धान्यशेषसुरैः कृतान्यर्हणानि येन स तथा । याभ्यां दुदोह तयोर्बाह्वोर्वैष्णवं तेजो विभ्रद्यः सोऽभिषिक्तः ॥ ९ ॥

**को न्वस्य कीर्तिं न शृणोत्यभिज्ञो यद्विक्रमोच्छिष्टमशेषभूपाः ।**
**लोकाः सपाला उपजीवन्ति काममद्यापि तन्मे वद कर्म शुद्धम् ॥ १० ॥**

**तात्पर्यम्** – **'देवेभ्य ऋषयो भूपाश्चोच्यन्ते शक्तिमत्तया । कचित्कचिन्मोहनार्थं कादाचित्काच्च हेतुत' इति नारदीये ॥ १० ॥**

**प्रकाशिका** – अस्य कीर्तिं को न शृणोतीत्यन्वयः । यस्य विक्रमः पृथिवीदोहने तस्योच्छिष्टमुच्छिष्टतुल्यं कामं स्वाभीष्टम् । तत्तस्मात्तस्य कर्म पुनर्वद । अत्र सपाला जीवन्तीत्यस्य योग्यं तात्पर्यं प्रमाणेनैव दर्शयति ॥ देवभ्य इति । कादाचित्काद्धर्यविशरूपात् । तथा च सपाला इति वचनमसुरजनमोहनाय वा पृथौ हर्यविशमपेक्ष्य वा प्रवृत्तमतो न विरोध । इति भावः ॥ १० ॥

**मैत्रेय उवाच–**

**गङ्गायमुनयोर्नद्योरन्तरा क्षेत्रमावसन् ।**
**आरब्धानेव बुभुजे भोगान् पुण्यजिहासया ॥ ११ ॥**

**प्रकाशिका** – आरब्धानेव प्रारब्धकर्मप्राप्तानेव । न संचितप्राप्तानित्येवकारार्थः । तानपि पुण्यजिहासया पुण्यक्षपणेच्छयैव न सुखार्थम् ॥ ११ ॥

**सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृक् ।**
**अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥ १२ ॥**

**प्रकाशिका** – अस्खलितोऽप्रतिहत आदेश आज्ञा यस्य । सप्तद्वीपेष्वेक एव दण्डं धारयतीति स तथा । सर्वत्रेत्यस्यापवादमाह ॥ अन्यत्रेति । अच्युतस्य गोत्रं नाम जाप्यं येषां वैष्णवानां तेभ्यश्चान्यत्र ॥ १२ ॥

**एकदाऽऽसीन्महासत्रदीक्षा तत्र दिवौकसाम् ।**
**समाजो ब्रह्मर्षीणां च देवर्षीणां च सत्तम ॥ १३ ॥**

**प्रकाशिका** – समाजो मेलनम् ॥ १३ ॥

**तस्मिन्नर्हत्सु सर्वेषु स्वर्चितेषु यथार्हतः ।**
**उत्थितः स सदोमध्ये ताराणामुडुराडिव ॥ १४ ॥**

**प्रकाशिका** – अर्हत्सु पूज्येषु । उत्थितः सन् । उडुराट् चन्द्रः । स राजा समन्ततश्चतुर्दिक्षु । उपविष्टानैक्षतेत्युत्तरेणान्वयः ॥ १४ ॥

**प्रांशुः पीनायतभुजो गौरः कञ्जारुणेक्षणः ।**
**सुनासः सुमुखः सौम्यः पीनांसः सुद्विजस्मितः ॥ १५ ॥**

**प्रकाशिका** – प्रांशुरुन्नतः पीनावायतौ भुजौ यस्य । शोभना द्विजा दन्ताः स्मितं च यस्य । गौरो निर्मलः ॥ १५ ॥

**व्यूढवक्षा बृहच्छ्रोणिर्वलीवल्गुतरोदरः ।**
**आवर्तनाभिरोजस्वी काञ्चनोरुरुदग्रवाक् ॥ १६ ॥**

**प्रकाशिका** – व्यूढं विस्तीर्णं वक्षो यस्य बलीभी रेखाभिरतिशयेन वल्गु सुन्दरमुदरं यस्यावर्तवन्निम्ननाभिर्यस्य काञ्चनवदुज्वलावुरू यस्य सः । उदग्रवागुन्नतवाक् । उदग्रपादिति पाठे उन्नताग्रौ पादौ यस्येत्यर्थः ॥ १६ ॥

**सूक्ष्मवक्रासितस्निग्धमूर्धजः कम्बुकन्धरः ।**
**महाधने दुकूलाग्र्ये परिधायोपधाय च ॥ १७ ॥**

**प्रकाशिका** – सूक्ष्माश्च ते वक्राश्चासिता नीलाश्च स्निग्धाश्च मूर्धजाः केशा यस्य । कंबुवत्त्रिरेखांकितशंखवत्कंधरो यस्य स तथा । उपाधायोत्तरीकृत्य ॥ १७ ॥

**व्यञ्जिताशेषगात्रश्रीर्नियमे न्यस्तभूषणः ।**
**कृष्णाजिनधरः श्रीमान् कुशपाणिः कृतोचितः ॥ १८ ॥**

**प्रकाशिका** – नियमे यज्ञनियमविषये न्यस्तानित्यक्तानि भूषणानि येन सः । अत एव तैरनावृतत्वाद्व्यञ्जिताशेषगात्रेषु श्रीः स्वाभाविकी शोभा येन । कृतान्युचितानि कर्माणि येन ॥ १८ ॥

**शिशिरस्निग्धताराक्षः तानैक्षत समन्ततः ।**
**ऊचिवानिदमुर्वीशः सदस्यान् हर्षयन्निव ।**
**चारु चित्रपदं श्लक्ष्णं हृद्यं गूढमविक्लवम् ॥ १९ ॥**

**प्रकाशिका** – शिशिरे सन्तापहरे स्निग्धे च तारे कनीनिकेऽक्षिणी यस्य । चारुणि चित्राणि पदानि यस्मिंस्तत्तथा । श्लक्ष्णं मधुरम् । हृद्यं हृदयप्रियम् । गूढमर्थतो गंभीरमविक्लवमकातरम् । अस्खलितमिति यावत् । वचनमिति शेषः ॥ १९ ॥

**पृथुरुवाच –**

**सभ्याः शृणुत भद्रं वः साधवो य इहागताः ।**
**सत्सु जिज्ञासुभिर्धर्ममावेद्यं स्वमनीषितम् ॥ २० ॥**

**प्रकाशिका** – वक्तव्यवचने औद्धत्यपरिहाराय स्वविनयं दर्शयति ॥ धर्ममिति । धर्मं जिज्ञासुभिर्ज्ञातुकामैः पुरुषैः स्वमनीषितं सत्सुयोग्येष्वावेद्यं वक्तव्यं वक्ष्यमाणवाक्यैर्धर्मजिज्ञासैव क्रियते न युष्मान्प्रति धर्मवचनमिति भावः ॥ २० ॥

**अहं दण्डधरो धात्रा प्रजानामिह योजितः ।**
**रक्षिता वृत्तिदस्तेषु सेतुषु स्थापिता पृथक् ॥ २१ ॥**

**प्रकाशिका** – स्वमनीषितमेवाह ॥ अहमिति । दण्डधरः शिक्षकोऽहं धात्रा हरिणा प्रजापालनादौ योजितः । पृथक् सेतुषु स्थापिता स्थापयिता ॥ २१ ॥

**तस्य मे तदनुष्ठानाद् यदाहुर्ब्रह्मवादिनः ।**
**लोकाः स्युः कामसंदोहा यस्य तुष्यति दिष्टदृक् ॥ २२ ॥**

**प्रकाशिका** – एवं प्रजाशिक्षणेन तव किं फलमित्यपेक्षायामाह ॥ तस्य म इति । दिष्टदृक्कर्मसाक्षी हरिः । यस्य प्रजारक्षणेन तुष्यति । तस्य ब्रह्मवादिनो वेदवादिनो यद्यान् लोकानाहुः । तदनुष्ठानात्प्रजारक्षणकरणात्ते लोका मे स्युः । कथंभूताः । कामानां सम्यग्दोहः पूरणं येषु ॥ २२ ॥

**य उद्धरेत् करं राजा प्रजा धर्मेष्वशिक्षयन् ।**
**प्रजानां शमलं भुङ्क्ते भागं च स्वं जहाति सः ॥ २३ ॥**

**प्रकाशिका** – अन्यथा बाधकमप्याह ॥ य उद्धरेदिति । भागं षष्ठांशं पुण्यम् ॥ २३ ॥

**तत् प्रजा भर्तृपिण्डार्थं स्वार्थमप्यनसूयवः ।**
**कुरुताधोक्षजधियं तर्हि मेऽनुग्रहः कृतः ॥ २४ ॥**

**प्रकाशिका** – तत् तस्मात् प्रजाशिक्षणेन मम परलोकसद्भावात् । हे प्रजाः । यद्यनसूयवो यूयं भर्तृपिण्डार्थं भर्तुर्मम षष्ठांशरूपभागलाभाय । स्वार्थमेवाधोक्षजे हरौ धियं कुरुत । तर्हि मेऽनुग्रहः कृतो भवेदित्यर्थः ॥ २४ ॥

**यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः ।**
**कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत् प्रेत्य तत् फलम् ॥ २५ ॥**

**प्रकाशिका** – सभ्यानुद्दिश्याह ॥ यूयमिति । हे पितृदेवर्षयः । तन्मयोपदिष्टम् । अनुमोदनेन किमस्माकं फलमित्यत उक्तम् ॥ अनुज्ञातुरिति । कर्तुर्यत्प्रेत्य फलं तच्छास्तुः शिक्षयितुरनुज्ञातु-रनुमोदितुश्च तुल्यं स्वयोग्यतासदृशम् । तदनुसारेणेति यावत् । भवतीत्यर्थः ॥ २५ ॥

**अस्ति यज्ञपतिर्नाम केषांचिदिह सत्तमाः ।**
**इहामुत्र च लक्ष्यन्ते ज्योत्स्नावत्यः क्वचिद् भुवः ॥ २६ ॥**

**तात्पर्यम्** – **'प्रकाशवद्भुवो देवा मानुषाश्चापि केचने'ति वाराहे ॥ २६ ॥**

**प्रकाशिका** – ननु जीवव्यतिरिक्तेश्वर एव नास्तीति त्वत्पित्रा वेनेन मतं प्रवर्तितमतः कथमधोक्षजधियमित्युक्तमित्याशङ्कायां जीवव्यतिरिक्तेश्वरसद्भावे प्रमाणं दर्शयति ॥ अस्तीति ।

यज्ञपतिर्यज्ञादिकर्मफलदाता विष्णुरस्तीति नामप्रसिद्धम् । इह लोके केषाञ्चिद्व्यासादीनाम् । मत इति शेषः । हे द्विजसत्तमा अतिशयेन सन्तः । तत्र प्रमाणं दर्शयितुमुक्तम् ॥ ज्योत्स्नेति । तत्र ज्योत्स्नावत्यो भुव इत्यस्य प्रकृतसंगतमर्थं प्रमाणेनैव दर्शयति ॥ प्रकाशवदिति । चापिशब्दौ परस्परसमुच्चये । देवाश्च केचन मानुषा अपीति । तथा चेह भूलोके क्वचित्प्रदेशेऽमुत्र स्वर्गादौ च ज्योत्स्नावत्यः प्रकाशवत्यो भुवो योग्यतानुसारेण पूर्णाः सर्वे देवाः केचन मानुषाश्च लक्ष्यन्ते । शास्त्रेण प्रत्यक्षेण चेति शेषः । ततश्च ज्योत्स्नावत्त्वादिरूपफलदाता विष्णुः स्वीकार्यः अन्यथेतरेषामविद्यमानं ज्योत्स्नावत्त्वादिकं तेषामेव कुतोऽत एतादृशफलान्यथाऽनुपपत्तिरेवेश्वरे मानमिति भावः ॥ २६ ॥

**मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः ।**
**प्रियव्रतस्य राजर्षेरङ्गस्यास्मत्पितुः पितुः ॥ २७ ॥**

**प्रकाशिका** – तानेव ज्योत्स्नावद्भूशब्दवाच्यान् लेशतो दर्शयति ॥ मनोरिति । स्वायंभुवस्येत्यर्थः ॥ २७ ॥

**ईदृशानामथान्येषामजस्य च भवस्य च ।**
**प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृतः ॥ २८ ॥**

**प्रकाशिका** – अजस्य ब्रह्मणो भवस्य रुद्रस्येदं पदद्वयमशेषदेवोपलक्षकम् । गदाभृतो विष्णोः सकाशात्कृत्यं ज्योत्स्नावत्त्वादिकमस्ति ॥ २८ ॥

**राज्यस्वर्गापवर्गाणां प्रायेणैकात्महेतुना ।**
**दौहित्रादीनृते मृत्योः शोच्यान् धर्मविमोहितान् ॥ २९ ॥**

**तात्पर्यम्** – **'एकात्मा हरिरुद्दिष्टः प्रधानत्वात्समस्तत' इति च ॥ प्राय इत्यवधारणाक्षेपः । 'प्रायःपदं स्यात्प्राचुर्ये चाक्षेपात्मावधारणे । अर्थतोऽवधृतिः क्षेपो मुखाक्षेपोऽवधारणमि'ति च ॥ २९ ॥**

**प्रकाशिका** – ननु देवादीनामुक्तफलं प्रधानकर्मादिनैव भविष्यतीत्यपेक्षायामाह ॥ राज्येति । अत्रैकात्मेत्यस्य प्रकृतसङ्गतमर्थं प्रमाणेनैव दर्शयति ॥ एकात्मेति । सर्वजगत्प्रधानत्वादेकात्मशब्देन हरिरुच्यत इत्यर्थः । प्राय इत्यस्यापि प्राचुर्यार्थत्वे कदाचिद्धेतुत्वाभावोऽस्तीति प्रतीयतेऽतोऽत्र योग्यमर्थं दर्शयति ॥ प्राय इति । प्राय इति पदं बाहुल्यार्थाक्षेपावधारणयोर्मध्ये

यदाक्षेपरूपमवधारणं तद्वाचकमित्यर्थः । अत्र प्रमाणं पठति ॥ प्रायः पदमिति । आक्षेपात्मेति विशेषेण व्यावर्त्यमवधारणं दर्शयन्नात्मरूपावधारणस्वरूपमाह ॥ अर्थत इति । अर्थाद्यत्रावधृतिरवधारणमन्ययोगव्यवच्छेदो बोध्यते तदवधारणमाक्षेप उच्यत इत्यर्थः । यथाऽस्मिन् ग्रामेऽयं पण्डित इति वचनेनार्थादन्यो न पण्डित इति ज्ञायते । मुखेत्यविभक्तिको निर्देशः । तथा च मुखादवधारणवाचकात् । एवशब्दाद्यदवधारणमुक्तरूपं साक्षात्प्रतीयते तदवधारणमाक्षेपरूपमित्यर्थः । इदं च पार्थ एव धनुर्धर इत्यादौ प्रसिद्धम् । तथा च प्रायःपदं साक्षादेवकारवाच्येऽन्ययोगव्यवच्छेदपक्षे आक्षेपरूपात्मकावधारणे वर्तते । तद्व्यावृत्त्यर्थ-मवधारणाक्षेप इत्युक्तं भवति । ततश्च राज्यादीनां प्रायेणान्याधीनत्वमन्तरेणैकात्मनः समस्तात्प्रधानस्य हरेर्हेतुता कारणत्वमस्ति । प्रधानकालकर्मादीनामस्वतन्त्राणां न तथा हेतुतेत्याशयः ॥

पूर्वं केषाञ्चिदित्युक्त्याऽन्येषां नास्तीति सूचितम् । तानन्यान्दर्शयति ॥ दौहित्रादीनिति । मृत्योर्दौहित्रो वेनः । आदिशब्देन मणिमदादयो ग्राह्याः । तानृते केषाञ्चित्ज्ञानिनां मते हरिरस्तीत्यन्वयः ॥ २९ ॥

**यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः ।**
**सद्यः क्षिणोत्यन्वहमेधती सती यथा पदाङ्गुष्ठविनिःसृता सरित् ॥ ३० ॥**

**प्रकाशिका** – एवं सर्वजगदुत्तमं हरिं प्रसाध्येदानीं तद्भजनं विधातुमादौ श्लोकद्वयेन क्रमेण जायमानं भजनफलं तावदाह ॥ यत्पादेति ॥ ३० ॥

**विनिर्धुताशेषमनोमलः पुमानसङ्गविज्ञानविशेषवीर्यवान् ।**
**यदङ्घ्रिमूले कृतकेतनः पुनर्न संसृतिं क्लेशवहां प्रपद्यते ॥ ३१ ॥**

**प्रकाशिका** – असङ्गो वैराग्यं विज्ञानविशेषोऽपरोक्षज्ञानं तल्लक्षणवीर्यवान् । यस्यांघ्रिमूले वैकुण्ठे कृतकेतनः कृताश्रयःसन् ॥ ३१ ॥

**तमेव यूयं भजतात्मवृत्तिभिर्मनोवचः कायगुणैः स्वकर्मभिः ।**
**अमायिनः कामदुघाङ्घ्रिपङ्कजं यथाधिकारावसितार्थसिद्धये ॥ ३२ ॥**

**प्रकाशिका** – एवं रूच्युत्पादनाय फलमुक्त्वेदानीं तद्भजनं विधत्ते ॥ तमेवेति । एतादृशफलप्रदमेव । आत्मवृत्तिभिः परमात्मनिष्ठैः । तद्विषयकैरिति यावत् ।

मनोवचःकायगुणैर्ध्यानस्तुतिपरिचर्यारूपैः । कार्यैः स्वविहितकर्मभिश्च । अमायिनो निष्कपटाः सन्तः । उक्तमेव फलं विशदयति ।। यथेति । अधिकारो योग्यता । यथाधिकारं योग्यतामनतिक्रम्यावसिता निश्चिताऽर्थसिद्धिरानन्दप्राप्तिस्तस्यै ।। ३२ ।।

**असाविहानेकगुणाध्वरैः सता पृथग्विधैर्द्रव्यगुणक्रियोक्तिभिः ।**
**सम्पद्यतेऽर्थाशयलिङ्गनामभिर्विशुद्धविज्ञानघनस्वरूपतः ।। ३३ ।।**

**तात्पर्यम् – सम्पद्यते प्राप्यते ।। ३३ ।।**

**प्रकाशिका –** स्वकर्मभिरित्युक्तकर्माणि दर्शयंस्तत्साध्यं फलं विवृणोति ।। असाविति । इह कर्मभूमावसौ यः पूर्वोक्तः परमात्मा सतामधिकारिणामनेकगुणा येषां तैरध्वरैः संपाद्यत इत्यन्वयः । अनेकगुणानेवाह ।। द्रव्येति । द्रव्यं पुरोडाशादि गुणो वसन्तकालादिः क्रिया ऋत्विग्व्यापारा उक्तयो मन्त्रास्ताभिरर्थाः स्वर्गादिरूपाणि प्रयोजनान्याशयः संकल्पो लिङ्गान्यश्वमेधादिचिह्नानि नामान्यश्वमेधादीनि तैश्च पृथग्विधैः परस्परविलक्षणैरित्यध्वराणां विशेषणम् । किं कृत्वा । विशुद्धविज्ञानघनं निर्मलविशेषज्ञाननिबिडं भगवत्स्वरूपं विज्ञाय । अत्र संपद्यत इत्यस्य ज्ञायत इति व्याख्याननिरासायार्थमाह ।। संपद्यत इति । मुक्तैः प्राप्यत इत्यर्थः । ततश्च नानाविधैर्यज्ञैः स्वान्तर्यामिणो हरेर्ज्ञानं संपाद्य भगवत्प्राप्तिरूपां मुक्तिं प्राप्नोतीत्याशयः ।। ३३ ।।

**प्रधानकालाशयकर्मसङ्ग्रहः शरीरशेषं प्रतिपद्य चेतनः ।**
**क्रियाफलत्वेन विभुर्विभाव्यते यथाऽनलो दारुषु तद्गुणात्मकः ।। ३४ ।।**

**तात्पर्यम् – प्रधानादीन् गृहीत्वा जीवं प्राप्य पुण्यकर्मभिर्ज्ञायते । यथा गुणवदिन्धनेऽग्निर्मथनादिना ।। ३४ ।।**

**प्रकाशिका –** पूर्वं ज्योत्स्नावत्त्वादिरूपकर्मफलवैचित्र्यान्यथाऽनुपपत्त्या तद्धेतुत्वेन हरिरेव ज्ञायते न प्रधानादीत्युक्तं तदेव विशदयति ।। प्रधानेति । अप्रतिपत्तिविप्रतिपत्तिनिरासायैतच्छ्लोकतात्पर्यं दर्शयति ।। प्रधानादीनिति । गृहीत्वेत्यनेन संगृह्णातीति सङ्ग्रह इति व्युत्पत्तिं सूचयति । शरीरशेषमित्यस्यार्थः ।। जीवमिति । प्रतिपद्येत्यस्यार्थः ।। प्राप्येति । क्रियाफलत्वेनेत्यस्यार्थः ।। पुण्यकर्मभिरिति । उपलक्षणमेतत् । पुण्यापुण्यकर्मफलैरित्यर्थः । विभाव्यत इत्यस्यार्थः ।। ज्ञायत इति । विचारेण दातृतयेति शेषः । तद्गुणात्मक इति वचनानुसारेण दारुष्वित्यस्य गुणवदिंधन इति व्याख्यानं कृतम् । दार्ष्टान्तिके हरिव्यञ्जको विचार उक्तः ।

तत्स्थानीयं दृष्टान्तेऽग्निव्यञ्जकं किमित्यपेक्षायामध्याहार्यं दर्शयति ॥ मथनादिनेति । आदिपदेन सूर्यकान्तादिमणिसंबन्धसङ्ग्रहः ॥ ततश्चायं श्लोकार्थः ॥ प्रधानं प्रकृतिः कालः फलपाचक आशयोऽन्तःकरणं कर्मादृष्टान्तानि सङ्गृह्णातीति सङ्ग्रहः । एतानि गृहीत्वेति यावत् । अनेन प्रधानादीनामस्वातन्त्र्यमुक्तमिति ज्ञातव्यम् । युक्तेषु सर्वेषु शरीरमेव शिष्यत इति शेषमङ्गं यस्य सः । शरीरशेषो जीवस्तं प्रतिपद्य प्राप्य । अनेन शरीरयुक्तं जीवं प्राप्य तत्तच्छरीरगुणभूतं परिमाणवान् भवतीत्यर्थ उक्तो भवति । चेतनः सर्वज्ञः । क्रियाफलत्वेन क्रियाणामदृष्टानां फलं यस्मात्स तथा तस्य भावस्तत्त्वं तेन रूपेण कर्मफलदातृत्वेन पुण्यकर्मभिः पुरुषैर्विभाव्यते विचारेण ज्ञायते । प्रधानादीनामिव नास्यास्वातन्त्र्यमिति प्रदर्शनाय विभुः समर्थ इत्युक्तम् । शरीरान्तर्गतस्य शरीरगुणपरिमाणवत्त्वे कर्मफलविचाररूपमथनेन ज्ञेयत्वे च दृष्टान्तमाह ॥ यथेति यथा दारुष्वश्वत्थादिकाष्ठेषु विद्यमानोऽनलो मथनादिना तद्गुणात्मकः काष्ठगुणस्थौल्यादि-सदृशस्थौल्यादिमान्ज्ञायते तथैवेति ॥ ३४ ॥

**अहो बतामी वितरन्त्यनुग्रहं हरिं गुरुं यज्ञभुजामधीश्वरम् ।**
**स्वधर्मयोगेन यजन्ति मामका निरन्तरं क्षोणितले धृतव्रताः ॥ ३५ ॥**

**प्रकाशिका** – तदेवं भगवद्भजनेऽप्रवृत्तान्प्रवृत्तियुक्तान्कृत्वा तत्र स्वत एव प्रवृत्तानां प्रवृत्तिमभिनन्दनेन दृढयति ॥ अहो इति । वितरन्ति कुर्वन्ति । तेन मम षष्ठांशपुण्यलाभादिति भावः । इज्यत्वोपपादनाय गुरुमित्यादिविशेषणद्वयम् । स्वधर्मयोगेन स्वधर्मलक्षणोपायेन मामका मत्प्रजाः ॥ ३५ ॥

**मा जातु तेजः प्रभवेन्महर्द्धिभिस्तितिक्षया तपसा विद्यया च ।**
**देदीप्यमानेऽजितदेवतानां कुले स्वयं राजकुले द्विजानाम् ॥ ३६ ॥**

**प्रकाशिका** – एवं सामान्यतः प्रजाः शिक्षयित्वेदानीं राज्ञ एव शिक्षयति ॥ मा जात्विति । राजकुले विद्यमानाभिर्महर्षिभिः समुत्थितं यत्प्राप्तं तेजः सामर्थ्यं तदजितो भगवान्देवता येषां तेषां द्विजन्मनां कुले विषये जातु कदाचिदपि मा प्रभवेत्तदनिष्टकरणाय समर्थं न भवेदित्यर्थः । कथं भूते । तितिक्षादिभिर्देदीप्यमाने । अनेन स्वानिष्टकर्तृनाशेन तस्य सामर्थ्यमस्तीति ज्ञातव्यम् ॥ ३६ ॥

**ब्रह्मण्यदेवः पुरुषः पुरातनो नित्यं हरिर्यच्चरणाभिवन्दनात् ।**
**अवाप लक्ष्मीमनपायिनीं यशो जगत्पवित्रं च महत्तमाग्रणीः ॥ ३७ ॥**

**तात्पर्यम् – हरिरिन्द्रो यच्चरणाभिवन्दनादनपायिनीं लक्ष्मीमाप । सोऽपि विष्णुर्ब्राह्मणप्रियः । 'यत्प्रसादेन देवेन्द्रो वेदोदितयशा अभूत् । सोऽपि विष्णुरमेयात्मा सदा ब्राह्मणवत्सल' इति हरिवंशेषु ॥ ३७ ॥**

**प्रकाशिका** – न केवलं ब्रह्मकुलानिष्टं न कार्यमिति । किन्तु तत्र भक्तिरपि कार्येति कैमुत्येनाह ॥ ब्रह्मण्यदेव इति । अत्र हरिर्नारायणो येषां ब्राह्मणानां चरणाभिवन्दनादनपायिनीं लक्ष्मीं यशश्चावापेत्यन्यथाप्रतीतिवारणायाबाधितां योजनां दर्शयति ॥ हरिरिन्द्र इति । अर्कमर्कटमण्डूकविष्णुवासववायवः । तुरंगसिंहशीतांशुर्यमाश्च हरयो दशेति वचनादिति भावः । अनपायिनीं बहुकालस्थायिनीं लक्ष्मीं संपदम् । यच्छब्दस्य तच्छब्दसापेक्षत्वात्स इत्युक्तम् । पुरातनः पुरुष इत्यस्य व्याख्यानम् ॥ विष्णुरिति । ब्रह्मण्येत्यस्यार्थः ॥ ब्राह्मणप्रिय इति । उक्तैव योजनेत्यत्र नियामकं समाख्याप्रमाणं पठति ॥ यत्प्रसादेनेति । अनेन यच्चरणाभिवंदनादित्ये-तदुक्तार्थम् । हरिरित्यस्यार्थकथनम् ॥ देवेन्द्र इति । जगत्पवित्रमित्यस्यार्थः ॥ वेदोदितेति । सोऽपीत्यनेन मूलेऽपिशब्दोऽध्याहार्य इति सूचयति । महत्तमाग्रणीरित्यस्य तात्पर्यम् ॥ अमेयात्मेति । नित्यं ब्रह्मण्यदेव इत्यस्य व्याख्यानम् ॥ सदा ब्राह्मणेति ॥ ततश्चायमर्थः ॥ हरिरिन्द्रो नित्यं यस्य चरणाभिवन्दनादनपायिनीं बहुकालस्थायिनीं लक्ष्मीं संपदं जगत्पवित्रकरं यशश्चावाप । स महत्तमाग्रणीर्महतामिन्द्रादीनां सकाशादुत्तमा ब्रह्मादयस्तेषामग्रणीः श्रेष्ठः पुरातनः पुरुषो विष्णुरपि नित्यं ब्रह्मण्यदेवो ब्राह्मणवत्सलः क्रीडादिगुणयुक्तश्च । ब्राह्मणवत्सलत्वं क्रीडामात्रमिति द्योतयितुं देव इत्युक्तम् । अनेनेतरै राजादिभिर्ब्राह्मणवत्सलै-र्भाव्यमिति किं वाच्यमिति वाक्यशेषः ॥ ३७ ॥

**यत्सेवयाऽशेषगुणाश्रयः स्वराट् विप्रप्रियस्तुष्यति काममीश्वरः ।**
**तदेव तद्धर्मपरैर्विनीतैः सर्वात्मना ब्रह्मकुलं निषेव्यताम् ॥ ३८ ॥**

**प्रकाशिका** – क्षत्रियाणां ब्राह्मणकुलसेवया विष्णुप्रीतिजनकत्वात्तदवश्यं तैः सेव्यमित्याह ॥ यत्सेवयेति । स्वराट् स्वतन्त्र ईश्वरः क्षत्रियाणां ब्राह्मणकुलसेवया कामं यथा स्यात्तथा तुष्यति । कुत इत्यत उक्तम् ॥ विप्रप्रिय इति । तदेव ब्राह्मणकुलमेव तद्धर्मपरैर्विष्णुप्रीतिकरधर्मानुष्ठानपरैः । सर्वात्मना सर्वप्रकारेण ॥ ३८ ॥

**पुमाल्लभेताप्यतिवेलमात्मनः प्रसादतोऽत्यन्तशमं स्वतः स्वयम् ।**
**यन्नित्यसम्बन्धनिषेवया ततः परं किमत्रास्ति सुखं हविर्भुजाम् ॥ ३९ ॥**

**तात्पर्यम् – तस्मान्मोक्षसुखात्परं हविर्भुजां देवानामप्यत्र संसारेऽस्ति किम् ? ॥ ३९ ॥**

**प्रकाशिका –** ननु विष्णुप्रीत्या किं प्रयोजनमित्यपेक्षायां स्वस्वरूपसुखानुभवरूपमोक्षलाभ इत्याशयेनाह ॥ पुमानिति । अतिवेलं शीघ्रमात्मनः परमात्मनः प्रसादादत्यन्तशमं केवल-सुखानुभवरूपमोक्षं लभेत । अपिशब्दस्योत्तरार्धेनान्वयः । देहेन्द्रियाद्यभावत्कथं तत्र सुखानुभव इत्यत उक्तम् ॥ स्वयं स्वरूपभूतमिति । अस्वरूपत्वमपि स्वरूपत्वेनोपचर्यत इति नेत्याह ॥ स्वत इति । वस्तुत इत्यर्थः । यस्य ब्रह्मकुलस्य नित्यसंबन्धेन निषेवया लभेत । तद्ब्रह्मकुलं निषेव्यता-मिति पूर्वेणान्वयः । ननु मोक्षसुखलाभेनापि किमित्यपेक्षायां न तस्मादन्यः पुरुषार्थोऽस्तीत्याह ॥ तत इति । अत्र तत इत्यस्य परामर्शं दर्शयन्किमत्र हविर्भुजामिति पदं प्रकृतसंगततया व्याख्याति ॥ तस्मादिति । तत इत्यस्यार्थः ॥ तस्मादिति । मोक्षसुखादत्यन्तशममित्यत्र प्रकृतात्परमुत्तमं देवानामपीत्यनेनापिशब्दस्यात्र संबन्ध इत्युक्तं भवति । अस्ति किं नास्त्येवेत्यर्थः । अतोऽत्राल्पाधिकारिणां मोक्षसुखमेव परमप्रयोजनं न तेन संपाद्यमन्यदस्तीति भावः ॥ ३९ ॥

**अश्नात्यनन्तः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख इज्यनामभिः ।**
**न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यवर्यगुः ॥ ४० ॥**

**तात्पर्यम् – पारमहंस्यवर्या गावो यस्य ॥ ४० ॥**

**प्रकाशिका –** इतो ब्रह्मकुलसेवा हरिप्रीतिजनकेत्याशयेनाह ॥ अश्नातीति । अनन्तपदमशनेन प्रीतोऽनन्तफलप्रद इति सूचनाय । भगवत्तत्त्वकोविदैः पुरुषैर्ब्राह्मणेषु विशेषेण हरिसंनिहितत्वं जानद्भिः पुरुषैर्यस्य ब्रह्मकुलस्य मुखे श्रद्धया हुतं दत्तमन्नादिकं यथाऽनन्तोऽश्नाति तदशनेन प्रीतोऽनन्तफलदो भवति । तथा हुताशने वह्नाविज्यानां देवानां नामभिरिन्द्राय स्वाहेत्यादिमन्त्रैः श्रद्धया हुतं हविरादिकं नाश्नाति । तस्य नीचत्वोपपादनाय चेतनया बहिष्कृतेऽचेतन इत्युक्तम् । तद्ब्रह्मकुलमिति पूर्वेणान्वयः । ब्राह्मणानामुत्तमाधिष्ठानत्वमुपपादयितुं पारमहंस्यवर्यगुरित्यनन्त-विशेषणमुक्तम् । तदप्रतीत्या व्याख्याति ॥ पारमहंस्येति । तथा च पारमहंस्येत्यत्र स्वार्थे ष्यञ् प्रत्ययः । परमहंसैर्वर्या वरणीया विचार्या गावो वेदादिरूपा वाचः प्रतिपादिका यस्य स तथेति मूलार्थ उक्त इति ज्ञातव्यम् । हरिप्रतिपादकवेदादिविचारशीलत्वाद्ब्राह्मणरूपाधिष्ठानमुत्तम-मित्याशयः । ब्राह्मणेति वक्तव्ये पारमहंस्येति वचनं ब्राह्मणेष्वपि परमहंसानामुत्तमत्वज्ञापनाय ॥ ४० ॥

**यद् ब्रह्म नित्यं विरजं सनातनं श्रद्धातपोमङ्गलमौनसंयमैः ।**
**समाधिना बिभ्रदिहार्थसिद्धये यत्रेदमादर्श इवावभासते ॥ ४१ ॥**

**प्रकाशिका** – न केवलं परमहंसा एवोत्तमाः किन्तु हरिध्यानपरास्तदपरोक्षज्ञानवन्तश्च सर्वेऽपीत्याह ॥ यद्ब्रह्मेति । यद्ब्रह्मकुलम् । ब्रह्म गुणपूर्णं नित्यं बिभ्रद्भिर्भर्ति । तद्ब्रह्मकुलमिति पूर्वेणान्वयः । कथंभूतं ब्रह्म । विरजं पारतन्त्र्यादिदोषदूरं सनातनं सर्वदैकप्रकारम् । पशुरपि बिभर्तीत्यत उक्तम् ॥ समाधिनेति । अप्रयत्नध्यानेनेत्यर्थः । तत्र कारणमाह ॥ श्रद्धातप इत्यादि । मङ्गलं विहिताचरणं निषिद्धवर्जनं च । प्रशस्ताचरणं नित्यमप्रशस्तस्य वर्जनम् । एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिरिति वचनात् । मौनं व्यर्थवचनक्रियासंत्यागः । संयममिन्द्रिय-नियमनम् । एतैर्जातेन समाधिना । अर्थस्य मोक्षस्य सिद्ध्ये प्राप्त्यै । यत्र समाधौ सतीदं ब्रह्मादर्शे दर्पणे इव चित्तेऽवभासतेऽपरोक्षतया ज्ञायत इत्यर्थः । तेन समाधिना विभ्रदित्यन्वयः ॥ ४१ ॥

**तेषामहं पादसरोजरेणुमार्या वहेयाधिकिरीट आयुः ।**
**यं नित्यदा बिभ्रत आशुपापं नश्यत्यमुं सर्वगुणा भजन्ति ॥ ४२ ॥**

**प्रकाशिका** – एवं ब्रह्मकुलं प्रशस्य तन्निषेवणं राजादिभिः कार्यमित्युक्त्वेदानीं राज्ञो मम तत्पादसेवा यावज्जीवं स्यादित्याशयेनाह ॥ तेषामिति । तेषां ब्राह्मणानाम् । हे आर्याः । आयुर्यावज्जीवम् । अधिकिरीटं मुकुटस्योपरि । वहेयेति प्रार्थनायां लिङ् । यं रेणुम् । अमुं यावज्जीवं ब्राह्मणसेवकं भजन्ति प्राप्नुवन्ति ॥ ४२ ॥

**गुणालयं शीलधनं कृतज्ञं श्रद्धाश्रयं संवृणते नु संपदः ।**
**प्रसीदतां ब्रह्मकुलं गवां च जनार्दनः सानुचरश्च मह्यम् ॥ ४३ ॥**

**प्रकाशिका** – तेनापि किमित्यत आह ॥ गुणालयमिति । गुणालयत्वादिविशिष्टं संपदः संवृणत इत्यन्वयः । संवृणुत इति पाठे संवृण्वत इति व्याख्येयम् । उक्तमुपसंहरति ॥ प्रसीदतामिति । तस्मादिति शेषः । गवां च कुलमित्यनेन गोकुलमपि निषेव्यतामिति पूर्वेण ग्राह्यमिति सूचयति । अथवा । गवां वेदादिवाचां कुलमित्यर्थः । पारमहंस्यवर्यगुरिति तासां प्रकृतत्वान्महत्तमाग्रणीरिति सानुचरो जनार्दनश्च प्रकृत इत्यवधेयम् ॥ ४३ ॥

**मैत्रय उवाच–**

**इति ब्रुवाणं नृपतिं पितृदेवद्विजातयः ।**
**तुष्टुवुर्हृष्टमनसः साधुवादेन साधवः ॥ ४४ ॥**

**प्रकाशिका** – साधुवादेन निर्दोषवाक्येन ॥ ४४ ॥

पुत्रेण जयते लोक इति सत्यवती श्रुतिः ।
ब्रह्मदण्डहतः पापो यद् वेनोऽत्यतरत् तमः ॥ ४५ ॥

तात्पर्यम् – 'वेनस्थो राजसो जीवः पृथुना स्वर्गतिं गतः । स्वयं तु तम एवाप सात्विकः पृथुतामगादि'ति ब्रह्माण्डे ॥ ४५ ॥

प्रकाशिका – साधुवादमेवाह ॥ पुत्रेणेति षड्भिः । जयते प्राप्नोति । यस्मात्पापो वेनो ब्रह्मदण्डहतो ब्राह्मणशापेन दग्धोऽपि तमो नित्यमनित्यं च नरकमत्यतरदतिक्रम्यागच्छत् । स्वर्गमिति शेषः । तस्मात्श्रुतिः । शश्वत्पुत्रेण पितरोऽत्यायन् बहुलं तम इति श्रुतिः । सत्यवती सत्यार्थवतीति संबन्धः । अत्र भगवन्निन्दया वेनो द्विजैस्तमसि पातित इति वचनात्कथं वेनस्य स्वर्गप्राप्तिरुच्यत इत्याशङ्कां त्र्यंशो वेनः समुद्दिष्ट इति प्रमाणोदाहरणेन पूर्वं परिहृतामपि पुनः प्रमाणान्तरेण परिहरति ॥ वेनस्थ इति । वेनस्थो वेनदेहे प्रविष्टः राजसो पृथुना स्वर्गतिं गतः । स्वयमतितामसस्तम एव नित्यनरकमेव । सात्त्विको जीवो वेनस्थ इति वर्तते । तुशब्दश्च-शब्दार्थः । तेन तामसो वेनस्थो जीवो निषादतामगादिति लभ्यते । अतो न कोऽपि विरोध इति भावः ॥ ४५ ॥

हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ।
विविक्षुरत्यगात् सूनोः प्रह्लादस्यानुभावतः ॥ ४६ ॥

प्रकाशिका – श्रुतेः सत्यार्थत्वे ज्ञापकान्तरमप्याह ॥ हिरण्यकशिपुरिति । यस्मादिति वर्तते । तमोविवक्षुरपि प्रवेशसंभावनाविषयोऽपि तमोऽतिक्रम्यागात् । ऊर्ध्वलोकमिति शेषः । तस्मादपि श्रुतिः सत्यवतीत्यन्वयः ॥ ४६ ॥

वीरवर्य पितः पृथ्व्याः समः संजीव शाश्वतीः ।
यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्तरि ॥ ४७ ॥

प्रकाशिका – हे पृथ्व्याः पितः ॥ ४७ ॥

अहो वयं ह्यद्य पवित्रकीर्ते त्वयैव नाथेन मुकुन्दनाथाः ।
यदुत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां व्यनक्षि ॥ ४८ ॥

तात्पर्यम् – अहो वयमित्यादि तत्स्थपरमेश्वरापेक्षया । 'यो ब्रह्मक्षत्रमाविश्ये'ति वचनात् ॥ ४८ ॥

**प्रकाशिका –** मुकुन्दनाथाः स्मः । अत्र पृथोर्मुकुन्दाभेदप्रतीतिवारणाय विवक्षितं तात्पर्यं दर्शयति ।। अहो वयमित्यादीति । आदिपदेनाध्यायसमाप्तिपर्यन्तस्य ग्रहणम् । पृथुस्थपरमेश्वरा-पेक्षया । योज्यमिति शेषः । कुतः इत्यतोऽत्रोत्तरवाक्यं साधकं पठति ।। यो ब्रह्मक्षत्रमिति । तथा च हे पवित्रकीर्ते पृथ्वाविष्टराजराजरूपहरे । त्वयैव नाथेनेत्यादिरूपा योजना द्रष्टव्या । व्यनक्षि व्यक्तां करोषि ।। ४८ ।।

**नात्यन्तिकमिदं नाथ तव जीव्यानुशासनम् ।**
**प्रजानुरागो महतां प्रकृतिः करुणात्मनाम् ।। ४९ ।।**

**प्रकाशिका –** तवाजीव्यानां भृत्यानां आ अनुशासनं नात्यन्तिकं नात्यन्तमपूर्वं नाश्चर्यकर-मित्यर्थः । अत एव क्वचिन्नात्यद्भुतमित्यपि पाठः । प्रकृतिः स्वभावः ।। ४९ ।।

**अद्य नस्तमसः पारस्त्वयोपासादितः प्रभो ।**
**भ्राम्यतां नष्टदृष्टीनां कर्मभिर्दैवसंज्ञितैः ।। ५० ।।**

**प्रकाशिका –** उपसादितः प्रापितः । कर्मभिरदृष्टैर्भ्राम्यतामेकत्रानवस्थितानाम् । दैवं भ्रामक-मिति ग्रन्थान्तरविरोधपरिहारायोक्तम् ।। देवसंज्ञितैरिति । तथा च तत्र दैवशब्देनादृष्टमेव ग्राह्यमिति भावः ।। ५० ।।

**नमो विवृद्धसत्वाय पुरुषाय महीयसे ।**
**यो ब्रह्मक्षत्रमाविश्य बिभर्तीदं स्वतेजसा ।। ५१ ।।**

**प्रकाशिका –** यो विष्णुः क्षत्रं क्षत्रियं पृथुमावेश्येदं ब्रह्म ब्रह्मकुलं स्वतेजसा बिभर्ति तस्मा इति साधुवादेन तुष्टुवुरित्यन्वयः ।। ५१ ।।

इति श्रीमद्भागवते चतुर्थस्कन्धे एकविंशोऽध्यायः ।। २१ ।।

# अथ द्वाविंशोऽध्यायः ।

**मैत्रेय उवाच–**

**जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम् ।**
**तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः ॥ १ ॥**

**तांस्तु सिद्धेश्वरान् राजा व्योम्नोऽवतरतोऽर्चिषा ।**
**लोकानपापान् कुर्वन्त्या सानुगोऽचष्ट लक्षितान् ॥ २ ॥**

**प्रकाशिका** – ॥ हरिः ॐ ॥ अर्चिषा लक्षितान्सनकादय इति ज्ञापितान् । अचष्टापश्यत् ॥ २ ॥

**तद्दर्शनोद्गतप्राणान् प्रत्यादित्सुरिवोत्थितः ।**
**ससदस्यानुगो वैन्य इन्द्रियेशो गुणानिव ॥ ३ ॥**

**प्रकाशिका** – उद्गतानुद्गमनोन्मुखान्प्राणान्प्रत्यादित्सुरिवोत्थितः प्रत्युत्थानं कृतवान् । ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यत इति वचनात् । स्वोत्तमेष्वागतेषु प्रत्युत्थानाद्यभावे क्षिप्रं प्राणानामुत्क्रान्तिरेव भवति । अतस्तान् स्थिरीकर्तुमिच्छुरेवोत्थित इति भावः । इन्द्रियेशो जीवो गुणान्विषयानिव । यथा जीव इन्द्रियेषु शब्दादिषु स्वात्मानं विहाय गमनोन्मुखेषु तान्प्रत्यादित्सुरुत्तिष्ठति तथैवेति ॥ ३ ॥

**गौरवाद्यन्त्रितः सभ्यः प्रश्रयानतकन्धरः ।**
**विधिवत् पूजयाञ्चक्रे गृहीताघ्यार्हणासनान् ॥ ४ ॥**

**प्रकाशिका** – यन्त्रितो वशीकृतः । गृहीतमर्घ्यार्हणमर्घ्यादिरूपमासनं च यैस्तान् ॥ ४ ॥

**तत्पादशौचसलिलैर्मार्जितालकबन्धनः ।**
**तत्र शीलवतां वृत्तिमाचरन् मानयन्निव ॥ ५ ॥**

**प्रकाशिका** – मार्जितमार्द्रीकृतमलकबन्धनं केशबन्धनं यस्य स तथा । तत्र तेषु विषयेषु मानयन्निव यथा पुरुषः स्वोत्तमान्प्रति बहुमानं करोति । स्वयमाचरत् ॥ ५ ॥

**हाटकासन आसीनान् स्वधिष्ण्येष्विव पावकान् ।**
**श्रद्धासंयमसम्पन्नः प्रीतः प्राह भवाग्रजान् ॥ ६ ॥**

**प्रकाशिका** – हाठकासनेषु सुवर्णपीठेषु धिष्ण्येषु स्वस्थानेषु स्थिता् संयमः प्रश्रयः । भवाग्रजान् शिवतोऽपि पूर्वमुत्पन्नान् । तृतीयस्कन्धे हरात्पूर्वजातत्वोक्तेः ॥ ६ ॥

**पृथुरुवाच –**

**अहो आचरितं कृष्णे मङ्गलं मङ्गलायनाः ।**
**यस्य वो दर्शनं ह्यासीद् दुर्दर्शानां कुयोगिनः ॥ ७ ॥**
**किं तस्य दुर्लभतरमिहलोके परत्र च ।**
**यस्य विप्राः प्रसीदन्ति शिवो विष्णुश्च सानुगः ॥ ८ ॥**

**प्रकाशिका** – प्रीतः प्राहेत्युक्तमेव प्रीतिपूर्वकं वचनं दर्शयति ॥ अहो इति दशभिः ॥ ७, ८ ॥

**नैव लक्षयते लोको लोकान् पर्यटतोऽपि यान् ।**
**यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः ॥ ९ ॥**

**तात्पर्यम् – 'सर्वज्ञाश्च विरिञ्चाद्या न जानीयुर्हरिं परम् । हेतवो जगतोऽप्यस्य यथाऽसौ वेद केशव' इति तन्त्रसारे ॥ ९ ॥**

**प्रकाशिका** – दुर्दर्शत्वमेवाह ॥ नैवेति । लक्षयते पश्यति । अत्र दृष्टान्तमाह ॥ यथेति । अत्र ब्रह्मादीनां सर्वथा हरिज्ञानाभाव उच्यत इति प्रतीतिवारणाय तात्पर्यं प्रमाणेनैवाह ॥ सर्वज्ञाश्चेति । अनेन सर्वदृशमित्येतदुक्तार्थम् । चशब्दोऽप्यर्थः । अनेन मूलेऽस्याध्याहार्यं सूचयति । सर्व इत्यस्य विरिंचाद्या इति । न जानन्तीत्यध्याहारमभिप्रेत्याह ॥ न जानीयुरिति । आत्मानमित्यस्यार्थः हरिमिति । परं पूर्णम् । साकल्येनेति यावत् । अनेनेदमपि मूलेऽध्याहार्यमिति दर्शयति । अस्येत्यनुवादेन जगत इति व्याख्यानम् । अपीत्यनेनात्रापि मूलेऽपिशब्दोऽध्याहार्य इति सूचयति । ननु ब्रह्माद्यविदितं गुणजातं हरौ नास्त्येव प्रमाणाभावादित्याशङ्कापरिहारायात्र व्यतिरेकदृष्टान्तमाह ॥ यथेति । केशवः । ब्रह्मरुद्रप्रवर्तक इति हेतुगर्भ-विशेषणम् । यथा केशवो हरिं परिपूर्णं वेद तथा न जानीयुरिति । अनेन भगवत्प्रत्यक्षमेव तत्र प्रमाणमित्युक्तं भवति । तथा च यथा सर्वदृशः सर्वज्ञा अप्यस्य जगतो हेतवोऽपि सर्वे ब्रह्मरुद्राद्या आत्मानमन्तर्यामित्वेन समीपस्थं हरिं पूर्णं साकल्येन न जानन्ति तथैवेति मूलं व्याख्येयमिति भावः ॥ ९ ॥

**अधना अपि ते धन्याः साधवो गृहमेधिनः ।**
**यद्गृहा अर्हवर्याम्बुतृणभूमिसुवाग्धराः ॥ १० ॥**

**प्रकाशिका –** अर्हाणां पूज्यानां वर्या वरणीयाः स्वीकारयोग्या अंबु च तृणं तृणासनं च भूमिश्च सुवाचश्च ता धरंतीति तथोक्ताः ॥ १० ॥

**व्यालालयद्रुमा ह्येते संसिद्धाखिलसंपदः ।**
**यद्गृहास्तीर्थपादीयपादतीर्थविवर्जिताः ॥ ११ ॥**

**प्रकाशिका –** व्यालालया दुष्टसर्पाश्रया द्रुमा न सेव्या यथा ये ग्रहाः संसिद्धाखिलसंपदोऽपि । तीर्थपादीया वैष्णवास्तेषां पादतीर्थेन वर्जिताः सर्वथा संबन्धरहिताश्चेन्न सेव्या इति । हिशब्द उपमार्थे ॥ ११ ॥

**स्वागतं वो द्विजश्रेष्ठा यद् व्रतानि मुमुक्षवः ।**
**चरन्ति श्रद्धया धीरा बाला एव बृहन्ति वै ॥ १२ ॥**

**प्रकाशिका –** यद्येषां वो बृहन्ति व्रतानि धीराश्च ते बालाः पण्डिताश्चात एव श्रद्धया मुमुक्षवः सन्तश्चरन्ति । वा इत्यनेनात्र प्रमाणप्रसिद्धिं दर्शयति । तेषां वो युष्माकं स्वागतं सुष्ठ्वागमनं जातम् ॥ १२ ॥

**कच्चिन्नः कुशलं नाथा इन्द्रियार्थार्थवेदिनाम् ।**
**व्यसनावाप एतस्मिन् पतितानां स्वकर्मभिः ॥ १३ ॥**

**प्रकाशिका –** अकुशलसंभावनाविषयेष्वस्मास्वकुशलं दृष्ट्वा तत्परिजिहीर्षयाऽऽगताः किमित्याशयेन स्वकुशलं राजा पृच्छति ॥ कच्चिन्न इति । इन्द्रियार्थमिन्द्रियैर्भोगार्थमेवार्थं धनादिरूपं वस्तु विदन्तीतीन्द्रियार्थार्थवेदिनस्तेषां नो व्यसनान्युप्यन्तेऽस्मिन्निति व्यसनावापस्तस्मिन्संसारे स्वकृतकर्मभिः पतितानां नः कुशलं कच्चिन्न किमपीत्यन्वयः । अनेनाकुशलसंभावना दर्शिता ॥ १३ ॥

**भवत्सु कुशलप्रश्न आत्मारामेषु नेष्यते ।**
**कुशलाकुशला यत्र न सन्ति मतिवृत्तयः ॥ १४ ॥**

**प्रकाशिका –** नन्वभ्यागतानामस्माकं कुलशमपृष्ट्वा कथमात्मकुशलप्रश्नः कृत इत्याशङ्कायां युष्मास्वकुशलसंभावनैव नास्तीत्याह ॥ भवत्स्विति । इदं कुशलमिदकुशलमिति मतिप्रवृत्तयो यत्र येषु न सन्ति तेष्वात्मारामेषु हरावेव सम्यग्रमणवत्सु भवत्सु कुशलप्रश्नो नेष्यते । प्रियाप्रिययोस्तुल्यचित्तवृत्तित्वेनाकुशलसंभावनाया एवाभावादिति भावः ॥ १४ ॥

**तदहं कृतविश्रम्भः सुहृदोऽत्र तपस्विनाम् ।**
**संपृच्छे भव एतस्मिन् क्षेमः केनाञ्जसा भवेत् ॥ १५ ॥**

**प्रकाशिका** – तत्तस्मादात्मारामत्वात्कृतविश्रंभः कृतविश्वासः सन् तपस्विनां योगिनां सुहृदो वो युष्मान् । भवे संसारे वर्तमानानाम् । जनानामिति शेषः । अंजसा क्षेम आत्यन्तिकदुःख-निवृत्तिरूपो मोक्षः केन साधनेन भवेदिति संपृच्छे आदरेण पृच्छामि ॥ १५ ॥

**व्यक्तं ह्यात्मवतामात्मा भगवानात्मभावनः ।**
**स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः ॥ १६ ॥**

**तात्पर्यम् – 'हरेस्तु प्रतिमा प्राज्ञास्तत्रस्थः केशवः स्वयम् । ददाति ज्ञानमीशेशः परमात्मा स्वयं विभुरि'ति च ॥ १६ ॥**

**प्रकाशिका** – ननु विष्णुर्हिदाता मोक्षस्येति वचनान्मोक्षसाधननिरूपणं विष्णुनैव कार्यं नास्माभिरित्याशङ्कायां सत्यं विष्णुर्भवत्सु संनिहितोऽस्ति स एवोपदिशतीत्याशयेनाह ॥ व्यक्तमिति । अत्राजः सिद्धरूपी चरतीत्युक्त्या सिद्धानां सनकादीनां हर्यभेदः प्रतीयतेऽतोऽत्र विवक्षिततात्पर्यं प्रमाणेनैव दर्शयति ॥ हरेरिति । तुः विशेषेण प्रतिमाः संनिधानपात्रभूताः । कुत इत्यत उक्तम् ॥ तत्रस्थ इति । स्वयं साक्षात्तत्रस्थस्तेषु संनिहितो यतोऽतः प्रतिमाः । तत्रस्थ इत्येतदेव कुत इत्यत उक्तम् ॥ ईशेश इति । ईशानामीशो ज्ञानं मोक्षजनकं स्वयं स्वयमेव ददात्युपदिशति नान्योऽत उपदेष्टृषु प्राज्ञेषु संनिहित इति ज्ञायत इत्यर्थः । अन्य उपदेष्टा किं न स्यादित्यत आह ॥ परमात्मेति । परमात्मा स्वयमेव विभुस्तत्र समर्थो नान्य इति ॥ ततश्चायं श्लोकार्थः ॥ व्यक्तं निश्चितमात्मवतां देहधारिणामात्माऽन्तर्याम्यात्मानं स्वात्मानं भावयति प्रकाशयतीत्यात्मभावनः स्वस्वरूपोपदेष्टा सन् इमां पृथिवीं सिद्धाः प्राज्ञास्त एव रूपं प्रतिमा अस्यास्तीति स तथा । सिद्धसंनिहित इति यावत् । चरति पर्यटति ॥ १६ ॥

**मैत्रेय उवाच –**

**पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु ।**
**स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह ॥ १७ ॥**

**प्रकाशिका** – सूक्तं शोभनं वचनं यस्य । सारं श्रेष्ठार्थं सुष्ट्वपशब्दादिविधुरं मितमल्पाक्षरम् । मधुरं श्रोत्रप्रियम् । मधु नाम सुखं विंद्यादित्यादेः । प्रीत्या स्मयमान इव प्रतीयमानः ॥ १७ ॥

**सनत्कुमार उवाच–**

**साधु पृष्टं महाराज सर्वभूतहितात्मना ।**
**भवता विदुषा चापि साधूनां गतिरीदृशी ॥ १८ ॥**

**प्रकाशिका –** विदुषाऽपि मोक्षसाधनं जानताऽपि । चशब्दो हेतौ । यस्मात्साधूनां गतिः स्थितिरीदृशी परोपकारनिरता । तस्मात्सर्वभूतहितात्मना सर्वसज्जनहितान्तःकरणेन विदुषाऽपि भवता यत्पृष्टं तत्साधु ॥ १८ ॥

**संगमः खलु साधूनामुभयेषां सुसंमतः ।**
**सत्संभाषणसंप्रश्नः सर्वेषां वितनोति शम् ॥ १९ ॥**

**प्रकाशिका –** स्वयमपि पृथोः सङ्गमभिनन्दन्ति ॥ संगम इति । साधूनां युष्माकं सङ्गमः । उभयेषां वक्तॄणामस्माकं श्रोतॄणां च संमतः सुखजनकः । कथमित्यतस्तदुपपादयति ॥ यत्संभाषणेति । येषां युष्माकं संभाषणसहितसंप्रश्नः सर्वेषां नः शं सुखं भगवन्निष्ठालक्षणं वा वितनोति विस्तारयति ॥ १९ ॥

**अस्त्येव राजन् भवतो मधुद्विषः पादारविन्देऽस्य गुणानुवादने ।**
**रतिः सदा या विधुनोति नैष्ठिकी कामं कषायं मलमन्तरात्मनः ॥ २० ॥**

**तात्पर्यम् – कषणेन गच्छतीति कषायः पापं तदुभयमेव मलम् ॥ २० ॥**

**प्रकाशिका –** एवं तदीयं प्रश्नं सङ्गमं चाभिनन्द्येदानीं यन्मोक्षसाधनतया प्रसिद्धं हरिकथाश्रवणे रत्यादिकं तत्सर्वं त्वयि प्रसिद्धमेवास्तीति प्रत्युत्तरं वदन् अनुवादमुखेनैवादित आरभ्य मोक्ष-साधनपरंपरामुपदिशति ॥ अस्त्येवेत्यादिना । गुणानामनुवादने प्रश्नद्वारेणानुवादप्रवर्तने । श्रवणे इति यावत् । श्रवणरतिसाध्यफलमाह ॥ येति । नैष्ठिकी निष्ठया क्रियमाणा । कषायपदमप्रतीत्या व्याख्याति ॥ कषणेनेति । कषः कषणं हरिस्मरणादिरूपं प्रायश्चित्तं तेन याति गच्छतीति निरुक्तिरुक्तेति ज्ञातव्यम् । तत्किमित्यपेक्षायामाह ॥ पापमिति । तर्हि कथं तस्य कामविशेषणत्वमित्यपेक्षायां न तद्विशेषणमित्याशयेनाह ॥ तदुभयमेवेति । मलम् । अन्तरात्मन इति शेषः । उभयोः प्राधान्याभिप्रायेणैवकारः । क्रोधादिकं त्वत्प्रधानमित्याशयः । यद्यपि पापं न कामादिवन्मनोवृत्तिरूपमलं तथाऽपि कामादिद्वारा मनोजन्यत्वात्तन्मनोमलत्वेनात्रोक्तमिति मन्तव्यम् । तथा च कामं कषायं पापमित्युभयविधमन्तरात्मनो मनसः प्रधानं मलं विधुनोति सा भवतोऽस्त्येवेति मूलयोजना द्रष्टव्या ॥ २० ॥

**शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सम्यग्विमृशेषु हेतुः ।**
**असङ्ग आत्मव्यतिरिक्तवस्तुनि दृढा रतिर्ब्रह्मणि निर्गुणे च या ॥ २१ ॥**

**तात्पर्यम् – 'रतिः परात्मनि हरावन्यत्रारतिरेव च । पुमर्थसाधनं ज्ञेयं नातोऽन्यन्मुख्य-मिष्यत' इति ॥ २१ ॥**

**प्रकाशिका –** एवं श्रवणरत्या साध्यं मनोनैर्मल्यं फलमुक्त्वा तत्साध्यं विषयवैराग्यं तेन हरौ दृढभक्तिरित्याशयेनाह ॥ शास्त्रेष्विति । शास्त्रेषु वेदादिषु सम्यग्विमृशेषु समीचीनविचारवत्सु । सम्यग्विचारितेषु सत्स्विति यावत् । इयानेव क्षेमस्य मोक्षस्य सुनिश्चितो हेतुः । कोऽसावित्यत आह ॥ असंग इति । आत्मव्यतिरिक्ते परमात्मनो भिन्ने ब्रह्मादितृणान्तवस्तुन्यसङ्गो हेयलक्षणबुद्धिः । वैराग्यमिति यावत् । तेन ब्रह्मणि परिपूर्णे निर्गुणे या दृढा रतिः सा चेयानेवेति संबन्धः । ननु श्रद्धापूर्वकं भगवद्धर्मानुष्ठानादिकमपि मोक्षसाधनतया शास्त्रेषूच्यतेऽतः कथमियानेवेत्यवधारणमित्याशङ्कां प्रमाणेनैव परिहरति । रतिरिति । अन्यत्र जगत्यरति-श्चेत्येतद्द्वयमेव मुख्यं प्रधानं पुरुषार्थसाधनं मोक्षसाधनमतोऽस्मान्मोक्षसाधनद्वयादन्यद्भगवद्धर्मा-चरणादिकं न मुख्यमित्यर्थः । तथा च मूले एतद्द्वयमेव मुख्यहेतुरन्यस्त्वमुख्य इत्यवधारणाभि-प्रायः । तेषां मोक्षहेतुत्ववचनं त्वमुख्यसाधनत्वाभिप्रायकमतो न विरोध इत्याशयः ॥ २१ ॥

**तच्छ्रद्धया भगवद्धर्मचर्यया जिज्ञासयाऽऽध्यात्मिकयोगनिष्ठया ।**
**योगेश्वरोपासनया च नित्यं पुण्यश्रवःकथया पुण्यया च ॥ २२ ॥**

**प्रकाशिका –** कथं तेषाममुख्यसाधनत्वमित्यतस्तेषामुक्तमुख्यसाधनरूपवैराग्यभक्त्योरांजस्य-हेतुत्वादित्याशयेनाह ॥ तच्छ्रद्धयेति । तस्मिन्हरौ श्रद्धया भगवद्धर्माणां वर्णाश्रमादिविहितानां चर्ययाऽऽचरणेन । जिज्ञासया ब्रह्मविचारेणाध्यात्मिक अध्यात्मादिविषयको योगोऽष्टांग-योगस्तन्निष्ठया । पुण्यश्रवो हरिस्तस्य कथया ॥ २२ ॥

**अर्थेन्द्रियारामगुणेष्वतृष्णया तत्सम्मतानामपरिग्रहेण च ।**
**विविक्तरुच्या परितोष आत्मन् विना हरेर्गुणपीयूषपानात् ॥ २३ ॥**

**प्रकाशिका –** अर्थस्य देहस्येन्द्रियाणां चारामेषु क्रीडावनरूपेषु गुणेषु विषयेष्वतृष्णयाऽ-सारत्वबुद्ध्या । ते विषयाः संमता येषां पुरुषाणां तेषामपरिग्रहणेनास्वीकारेण विविक्तदेशे रुच्या आत्मन् आत्मनि परमात्मनि देहभोगविषये वक्ष्यमाणेन साधनवचनानामन्वयः । ननु कथं विविक्तरुचिः परितोषसाधनतयोच्यते । तथात्वे हरिकथाश्रवणासंभवादित्यत उक्तम् ॥ विनेति ।

हरेर्गुणा एव पीयूषं तस्य पानात्कथाश्रवणाद्विना विविक्तरुच्येत्यन्वयः । हरिकथामृतपानाभाव एव विविक्तरुचिस्तत्सद्भावे तु न विविक्तरुचिः कार्येत्यन्वयः ॥ २३ ॥

**अहिंसया पारमहंस्यचर्यया स्मृत्या मुकुन्दाचरिताग्र्यसीधुना ।**
**यमैरकामैर्नियमैरभिध्यया निरीहया द्वन्द्वतितिक्षया च ॥ २४ ॥**

**प्रकाशिका** – व्यर्थहिंसापरित्यागेन पारमहंस्यचर्यया शमादिप्रधानया वृत्त्या स्मृत्या । कथंभूतया । मुकुन्दचरितमेवाग्र्यसीध्वमृतं विषयभूतं यस्याः सा तथा तया । यमैः । अहिंसायाः पृथग्ग्रहणात्सत्यास्तेयब्रह्मचर्यादिपरिग्रहैः । नियमैः शौचं तपस्तुष्टिस्वाध्यायहरिपूजनैः । विष्णुवैष्णवानामनिन्दया । निरीहयाऽनिषिद्धचेष्टया द्वन्द्वतितिक्षया शीतोष्णादिद्वन्द्वसहनेन ॥ २४ ॥

**हरेर्मुहुस्तत्परकर्णपूरया गुणाभिधानेन विजृम्भमाणया ।**
**भक्त्या ह्यसङ्गः सदसत्परात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥ २५ ॥**

**प्रकाशिका** – हरेर्भक्त्येत्यन्वयः । कथंभूतया । मुहुर्विजृंभमाणया वर्धमानया तत्परकर्णपूरगुणाभिधानेन तत्परा हरिभक्तास्तेषां कर्णपूराः कर्णालङ्कारभूता ये गुणास्तेषामभिधानेन कथनेन । पूर्वं वैराग्यस्य श्रवणमुक्तम् । अत्र तु कथनमुच्यत इति न पौनरुक्त्यम् । एतैः साधनैरंजसेति वक्ष्यमाणमत्रापि संबध्यते । अंजसाऽसङ्गो विषयवैराग्यं स्यात् । ततः सदसतोः कार्यकारणयोः परश्चात्मा स्वामी च तस्मिन्सत्त्वादिगुणहीने परिपूर्णेऽजसा रतिश्च स्यात् ॥२५॥

**यदा रतिर्ब्रह्मणि नैष्ठिकी पुमानाचार्यवान् ज्ञानविरागरंहसा ।**
**दहत्यबीजं हृदयं जीवकोशं पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥ २६ ॥**

**तात्पर्यम् – अबीजं हृदयं बीजहृदयं विना । 'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः । सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत् । कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित् । अपुमर्थता च मुक्तेः स्यादभावात्पुंस एव तु । ज्ञानज्ञेयाद्यभावाच्च सर्वथा नोपपद्यते । तस्मादेतन्मतं येषां तमोनिष्ठा हि ते मता' इति स्कान्दे ॥**

दग्धाशयः । **बीजाशयनाशे तद्गुणानां ज्ञानादीनामभावान्न किञ्चिद्विचक्षीत । परात्मनोर्यदा व्यवधानं संसारावस्थायां तदा स्वप्न इवेत्येतावद्बीजहृदयनाशे त्वपुरुष एव । आत्मनाश एवेत्यर्थः । अतः संसारावस्थैवोत्तमा स्यात् । 'भिदा यदि न दृश्येत जीवात्म-परमात्मनोः । मुक्तौ तदा विमोक्षाय को यत्नं कर्तुमर्हती'ति ब्रह्माण्डे ॥ 'मग्नस्य हि परेऽज्ञाने किं न दुःखकरं भवेत् । प्रवृत्तिधर्ममेवाहं मन्ये भरतसत्तमे'ति मोक्षधर्मेषु ॥ २६ ॥**

**प्रकाशिका** – वैराग्यभक्त्योरांजस्येनापि किमित्यत आह ।। यदेति । निष्ठां प्राप्ता नैष्ठिकी । दृढेति यावत् । आचार्यवान् आचार्यस्य समग्रानुग्रहवान् । ज्ञानविरागयोरपरोक्षज्ञान-पटुतरवैराग्ययो रंहसा वेगेन जीवकोशं जीवस्य कोशस्थानीयमावरकं पञ्चात्मकं पञ्चभूताद्यात्मकं लिङ्गशरीररूपं बाह्यमुपाधिं दहति । नन्वेवं तदन्तर्गतस्य जीवस्यापि नाशः प्राप्त इत्यत उक्तम् ।। अबीजं हृदयमिति । अत्र बीजशब्दो व्यंजकत्वाज्जीवस्वरूपपरः । हृदयशब्दश्चोपाधिपरः । तथा च जीवस्वरूपोपाधिभिन्न इत्यर्थः प्राप्तः । नैतावतोक्तशङ्कापरिहारः । देवदत्तभिन्नस्य गृहस्य दाहे उक्तेऽपि तदन्तर्गतस्य देवदत्तस्य दाहप्रतीतेः सभवादतोऽत्र विवक्षितमर्थं दर्शयति ।। अबीजेति । तथा चात्र नञो नान्यत्वमर्थः किन्तु विनाशब्दवाच्यं वर्जनमेवेत्याशयः । ततश्चाबीजं हृदयं जीवस्वरूपमुपाधिमवर्जयित्वेति मूलार्थ इति ज्ञातव्यम् ।

ननु कुत एवं जीवस्योपाधिद्वयं तत्र बाह्यस्यैव नाशो न स्वरूपभूतस्येत्यतोऽत्र प्रमाणं पठति ।। जीवोपाधिरिति । जीवस्य प्रतिबिंबत्वसंपादक उपाधिर्जीवोपाधिः । स्वरूपं जीवस्य स्वरूपभूतं हठापरपर्याययोग्यतालक्षणम् । बाह्यं लिङ्गशरीरादिरूपं द्विधैवप्रोक्त इत्यन्वयः । अबीजं हृदयम् । जीवकोशं दहतीत्यस्य तात्पर्यम् ।। बाह्योपाधिरिति । अन्यस्य स्वरूपोपाधेः । चोवधारणे । स्थितिरेव कुत इत्यतो विपक्षे बाधकमाह ।। सर्वेति । बाह्योपाधिवत्स्वरूपोपाधेरपि नाशे इत्यर्थः। कथं भवेन्न कथमपि । प्रतिबिंबोऽपि नश्येदित्याशयः । हिशब्दः स्वरूपोपाधिनाशस्य प्रतिबिंबनाशाविनाभावसूचकः । अनेनोत्तरश्लोके पूरुषस्तद्विनाश इत्येतदुक्ततात्पर्यम् । तस्योपाधेः सर्वस्य विनाशेऽपुरुषः प्रतिबिंबनाशः स्यादिति । तस्यैव प्रकारान्तरेण तात्पर्यमाह ।। कथं चेति। प्रतिबिंबस्यैवात्मनो नाशादिति भावः । तथात्वे स्वमोक्षार्थमधिकारिणो यत्नो न स्यादित्यर्थः । अनेन तद्विनाशेऽपुरुषो यत्नवान्न स्यादिति मूलयोजनां सूचयति ।। न विद्यते पुरुषोऽर्थी यस्य सोऽपुरुषो मोक्षः स्यादित्यपि मूलयोजनामभिप्रेत्येतत्तात्पर्यमाह ।। अपुमर्थतेति । तद्विनाश इत्यस्य तात्पर्यम् ।। अभावादिति । तुशब्दः पुंसोऽर्थित्वरूपविशेषार्थः । उत्तरश्लोके पूर्वार्धतात्पर्यमाह ।। ज्ञानेति । ज्ञानज्ञेयेति विचष्ट इत्येतल्लब्धार्थप्रदर्शनम्। ज्ञानज्ञेयेत्यनेन बहिरन्तर इत्येतदुक्तार्थम् । ज्ञातुरभावे ज्ञानाभावेन ज्ञेयस्याप्यभावः । आदिपदेनेच्छा-सुखादेर्ग्रहणम् । तेन मुक्तसमस्ततद्गुण इत्येतदुक्ततात्पर्यम् ।। नोपपद्यत इति । मुक्तेः पुमर्थतेति वर्तते । उक्ततर्काणां विपर्ययपर्यवसानमभिप्रेत्याह ।। तस्मादिति। उक्तापाद्यानामनिष्टत्वेऽङ्गी-कारानर्हत्वादित्यर्थः । येषामेतत्सर्वोपाधिविनाश इति मतं ते तमोनिष्ठास्तामसाः। ते तमोयोग्या इति वा । तथा नाङ्गीकार्यमित्याशयः । अनेनेदं वाक्यं मूले पूरणीयमिति सूचयति। एवं दग्धाशय इति पूर्वार्धमुत्तरार्धेऽपुरुषस्तद्विनाशे इति वाक्यं चानिष्टापादनपरतया प्रमाणेनैव

व्याख्यायेदानीं समग्रश्लोकं स्ववचनेनाप्यनिष्टापादनपरतया व्याख्याति ॥ दग्धाशय इति । आशयपदमुपाधिपरम् । बीजाशयनाशोऽङ्गीक्रियमाण इत्यर्थः । अनेन दग्धाशयो यदीति मूल-व्याख्यां सूचयति । मुक्तसमस्ततद्गुणः स्यादित्यापादनमभिप्रेततात्पर्यमाह ॥ तद्गुणानामिति । जीवगुणानां ज्ञानसुखेच्छादीनामभावः स्यादिति शेषः । ततोऽपि शेषः । ततोऽपि किमित्यतोऽ-निष्टप्रसङ्गान्तरं वक्तुम् । नैवात्मन इत्युक्तम् । तत्तात्पर्यमाह ॥ अभावादिति । ज्ञानादीनामिति वर्तते । आत्मनोऽन्तर्बहिरित्यस्यार्थः ॥ किंचिदिति । विचष्ट इत्यस्यार्थः ॥ विचक्षीतेति । ततोऽपि किमित्यतोऽनिष्टप्रसङ्गान्तरं वक्तुं द्वितीयार्धं प्रवृत्तमित्याशयेन द्वितीयार्धं व्याख्याति ॥ परमात्मनोरिति परेत्यस्यार्थः ॥ परमेति । परमो हरिरात्मा जीवश्च तयोरित्यर्थः । यत इत्यस्यार्थः ॥ यदेति । व्यवधानमित्येतल्लब्धार्थप्रदर्शनम् ॥ संसारावस्थायामिति । तदेत्यध्याहृत्य स्वप्ने यथेत्यस्यार्थमाह । तदेति । यथेत्यनन्तरमध्याहार्यमाह ॥ एतावदिति । स्वप्ने यथाऽऽल्पा-स्थिरविषयभोग एतावान्मात्रमित्यर्थः । ततः किमित्यत उक्तम् ॥ अपुरुषस्तद्विनाश इति । अस्यार्थमाह ॥ बीजहृदयेति । बीजहृदयमित्यत्र प्रकृतबीजहृदयपरामर्शकस्तच्छब्द इत्याशयः । किमनेनानिष्टमुक्तमित्यतस्तात्पर्यमाह ॥ अत इति । मुक्त्यवस्थात इत्यर्थः । स्यादित्यनन्तर-मित्याशय इति शेषः । अस्योक्तरीत्याऽनिष्टापादनपरत्वे व्याख्येयत्वे प्रमाणान्तरसंवादमप्याह ॥ भिदेति । न दृश्येत न स्यात् । यदि जीवनाशः स्यादिति यावत् । अनेन दग्धाशय इत्येतदुक्तार्थम् । कः कर्तुमर्हति न कोऽपि कुर्यादित्याशयः । अनेनापुरुष इत्येतदुक्ततात्पर्यम् । न किञ्चिद्विचक्षीतेत्यस्यानिष्टत्वं प्रमाणेनैव दर्शयन् । अतः संसारावस्थैवोत्तमा स्यादित्यत्रापि समाख्याप्रमाणं पठति ॥ मग्नस्य हीति । अज्ञाने ज्ञानाभावे मग्नस्य तद्युक्तस्य दुःखतरं न भवेत्किं भवेदेव । सुप्तावपि स्वरूपादिज्ञानसद्भावान्न व्यभिचार इति ज्ञातव्यम् । अतः प्रवृत्तधर्मं तत्फलरूपं संसारमेवाहं मन्ये । उत्तममिति शेषः ॥ ततश्च दहत्यबीजमित्यर्धश्लोकस्यायमर्थः ॥ अ बीजं हृदयमिति पदत्रयम् । तथा च बीजं जीवस्वरूपभूतं हृदयमुपाधिमविनेत्यर्थः । पञ्चात्मकं जीवस्य कोशमावरकं बाह्योपाधिभूतं लिङ्गशरीरादिकं दहतीत्यर्थः । अत्र दृष्टान्तमाह ॥ योनिमिति । मथनेनोत्थिताग्निर्यथा योनिं स्वाधिष्ठानमरणिं दहति तथैवेति ॥ २६ ॥

**दग्धाशयो मुक्तसमस्ततद्गुणो नैवात्मनो बहिरन्तर्विचष्टे ।**
**परात्मनोर्यद् व्यवधानं पुरस्तात् स्वप्ने यथाऽपुरुषस्तद्विनाशे ॥ २७ ॥**

**प्रकाशिका** – बाह्योपाधिरिव स्वरूपोपाधेरपि दाहाङ्गीकारेऽनिष्टप्रसङ्गमाह ॥ दग्धाशय इति । आशयपदमुपाधिलक्षकम् । तथा च यद्यपरोक्षवेगेन दग्धाशयः स्वरूपोपाधेरपि नाशोऽङ्गीक्रियते

तर्हि मुक्तसमस्ततद्गुणः स्याद्विनष्टसर्वगुणो जीवः स्यात् । जीवस्वरूपनाशे तद्धर्मज्ञानादिनाशोऽपि स्यादित्याशयः । ततः किमित्यत उक्तम् ।। नैवेति । आत्मनः स्वस्यान्तर्विद्यमानं सुखादिकं बहिर्विद्यमानं रूपादिकं च नैव विचष्टे न विचक्षीत । विषयभोगः सुखाद्यनुभवश्च न स्यादिति यावत् । ततोऽपि किमित्यत उक्तम् ।। परमात्मनोरिति । परमात्माऽऽत्मा जीवस्त्वनयोरित्यर्थः । यद्यदा पुरस्तान्मुक्तेः पूर्वं व्यवधानमपरोक्षज्ञानाभावः । संसारावस्थायामिति यावत् । तदा स्वप्ने यथेत्येतावत्स्वप्ने यथाऽऽल्पास्थिरविषयभोगादिकं तथैवाल्पास्थिरविषयभोगादिकमित्येतावदस्ति । तस्य जीवस्वरूपभूतस्योपाधेर्विनाशे त्वपुरुषः प्रतिबिम्बभूतपुरुषविनाश एव प्राप्तः । ततश्च ज्ञानाद्यभावे विषयभोगानुपपत्तौ मुक्तेरपुरुषार्थत्वमेव स्यात् । ततश्च मुक्त्यवस्थातः संसारावस्थैवोत्तमा स्यात् । न चैतत्सर्वमङ्गीकारार्हम् । अतो न मुक्तौ सर्वोपाधिनाशोऽङ्गीकर्तुं शक्य इति वाक्यशेषः ।। २७ ।।

**आत्मानमिन्द्रियार्थं च परं यदुभयोरपि ।**
**सत्याशय उपाधौ वै पुमान् पश्यति नान्यदा ।। २८ ।।**

**प्रकाशिका –** उपाधिनाशे प्रतिबिंबभूतस्य जीवस्यापि नाशप्रसङ्गः । ततश्च ज्ञानाद्यभावप्रसङ्गेन विषयभोगादिकं न स्यादित्युक्तप्रसङ्गे व्यतिरेकव्याप्तिं दर्शयति ।। आत्मानमिति । आत्मानं जीवं स्वेन्द्रियार्थं शब्दादिरूपमिन्द्रियविषयमुभयोरात्मेन्द्रियार्थयोः सकाशाद्यत्परमुत्तमं ब्रह्म तदपि पुमानधिकार्याशयेऽन्तःकरणादिरूपे उपाधौ सति वै सत्येव पश्यति । अन्यदा तस्य सर्वस्याप्युपाधिनाशे न पश्यति । अनेन यदा विषयदर्शनादिरूपो भोगस्तदोपाधिसत्वमिति तर्केण व्यतिरेकेण व्यतिरेकव्याप्तिरुक्तेति ज्ञातव्यम् ।। २८ ।।

**निमित्ते सति सर्वत्र जलादावपि पूरुषः ।**
**आत्मनश्च परस्यापि भिदां पश्यति नान्यदा ।। २९ ।।**

**प्रकाशिका –** अत्र दृष्टान्तमाह ।। निमित्त इति । अत्रादौ यथाशब्दोऽध्याहार्यः । अपिशब्दोऽवधारणे । सर्वत्र लोके जलादौ जलादिरूपे निमित्ते उपाधौ सत्येव पुरुषः । आत्मनः स्वस्य बिंबस्य परस्य प्रतिबिंबस्य च भिदा वैलक्षण्यं मालिन्यादिरूपं पश्यति । अन्यथा-सर्वस्याप्युपाधेर्नाशे न पश्यति यथेत्यर्थः ।। २९ ।।

**इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतो मनः ।**
**चेतनां हरते बुद्धेः स्तुम्बस्तोयमिव ह्रदात् ।। ३० ।।**

**तात्पर्यम् – एवं विधाज्ञानकारणमाह । इन्द्रियैर्विषयाकृष्टैरित्यादि । 'बहुस्मरणशक्तिस्तु चेतनेत्युच्यते बुधैरि'ति शब्दनिर्णये ।**

**'स्वपक्षपातस्त्वभ्यासाद्भोगार्थं व्यापृतस्य तु । भवेत्ततोऽनेकशास्त्रयथार्थस्मरणेशिता । नश्यत्यतः स्मृतेर्नाशाद्भगवत्पक्षपातिता । विनश्येत्तेन चैवास्य भवेज्ज्ञानविपर्ययः । न च ज्ञान-विपर्यासादन्यन्नाशकरं क्वचित् । सर्वस्यैतस्य मूलं हि दुष्टसंसर्ग एव तु । दुष्टसङ्गो विरक्तस्या-प्यन्यथाज्ञानकारणम् । दुष्टसङ्गाद्धि विष्णोश्च स्वात्मत्वं मन्यते बुधः । अभावं स्वात्मनोऽन्यस्य मुक्तिं चापि निरात्मतामि'त्यादि स्कान्दे ॥ ३० ॥**

**प्रकाशिका** – इन्द्रियैर्विषयाकृष्टैरित्युत्तरग्रन्थस्य प्रकृतेन संगत्यप्रतीतेस्तामाह ॥ एवंविधेति । अस्त्येव राजन् भवतो मधुद्विष इत्यादिनोक्तमोक्षसाधनज्ञानाभावे इत्यर्थः । ननु हरिकथां श्रुत्वा तज्जनितवैराग्यादिसाधनं विज्ञाय तत्संपाद्य सर्वेऽपि कुतो न मुच्यन्त इत्याशङ्कायामाह ॥ एवमिति । कथंचिदुत्पन्नस्यापि शास्त्रोक्तसाधनस्य नाशे कारणमाहेत्यर्थः । चेतनामित्यत्र चेतन-शब्देनान्तःकरणविशेषग्रहणे बुद्धिरित्यसङ्गतं भवत्यतोऽत्र विवक्षितं चेतनशब्दार्थं प्रमाणेनैवाह ॥ बहुस्मरणेति । तुशब्दोऽप्यर्थः । तथा च चेतनां बहुस्मरणशक्तिमिति मूलार्थ इति भावः । अप्रतिपत्तिविप्रतिपत्तिनिरासायेन्द्रियैरित्यादिश्लोकतात्पर्यं प्रमाणेनैवाह ॥ स्वपक्षपात इति । विषयभोगार्थं तु विशेषेण व्यापृतस्यासक्तस्य पुरुषस्य । अनेन ध्यायत इत्येतदुक्तार्थम् । अभ्यासाद्भोगार्थं व्यापाराभ्यासात् । तुशब्दोऽवधारणे । स्वपक्षपातः स्वस्मिन्स्वीये देहादौ विषये पक्षपात आसक्तिर्भवतीत्यर्थः । अनेन मन आक्षिप्त इत्येतदुक्तार्थम् । स्मरणेशिता मनसोऽनेक-शास्त्रार्थस्मरणविषये ईशिता सामर्थ्यं नश्यतीत्यर्थः । अनेन चेतनां हरत इत्येतदुक्तार्थम् । अतः स्मरणशक्तिनाशात्स्मृतेर्नाशो भवतीत्यपि ग्राह्यम् । तेन भ्रश्यत्यनुस्मृतिरित्येतदुक्ततात्पर्यम् । स्मृतेर्नाशाद्भगवत्पक्षपातिता भगवति भक्तिर्विशेषेण नश्येत् । अनेन स्मृतिक्षये चित्तं भ्रश्यतीत्ये-तदुक्ततात्पर्यम् । चित्तशब्देन तद्वृत्तेर्भक्तेर्विवक्षितत्वात् । तेन भगवत्पक्षपातित्वनाशेनास्य पुरुषस्य ज्ञानविपर्ययः सम्यग्ज्ञाननाशो विपर्ययरूपं ज्ञानं च भवेदित्यर्थः । अनेन ज्ञानभ्रंश इत्येतदुक्तार्थम्। तेन चात्मविनाशो नारकादिप्राप्तिरूपो भवतीत्यपि ग्राह्यम् । तेन तद्रोधं कवयः प्राहुरित्येतस्यार्धस्य व्याख्यानं कृतमिति ज्ञातव्यम् । नान्तः परतर इति श्लोकस्य तात्पर्यमाह ॥ न चेति । ज्ञानविपर्यासात्सम्यग्ज्ञाननाशाद्विपरीतज्ञानाच्चेत्यर्थः । नाशकरं स्वार्थनाशकर-मनर्थकरं चेत्यर्थः । अन्यत् । परतरमिति शेषः । अनेनातो ज्ञानभ्रंशात्पुंसोऽन्यः परतरः स्वार्थस्य व्यक्तिक्रमो व्यत्यासोऽनर्थो नाशश्च यस्मात्स तथा पुरुषार्थविनाशकोऽनर्थकरश्च नास्तीति मूलयोजनोक्तेति ज्ञातव्यम् । न कुर्यात्कस्यचित्सङ्गमिति श्लोकस्य सङ्गतिं दर्शयन्व्याख्याति ॥ सर्वस्येति ।

विषयध्यानमारभ्य विपर्यासपर्यन्तस्येत्यर्थः । मूलं कारणम् । हिशब्दः प्रमाणप्रसिद्धिद्योतकः । दुष्टसंसर्ग इत्यनेन मूले सङ्गशब्दो दुष्टसंगपर इति सूचयति । दुष्टसङ्गस्य विषयध्यानादिद्वारा मिथ्याज्ञानादिकारणत्वं कैमुत्येनोपपादयति ॥ दुष्टसङ्ग इति । किमु विषयासक्तस्येत्यपिशब्दार्थः। अन्यथाज्ञानकारणमित्युपलक्षणम् । सम्यग्ज्ञाननाशकं चेत्यपि द्रष्टव्यम् । एतदेवोपपादयति ॥ दुष्टसङ्गाद्धीति । चशब्दः स्वसर्वोत्तमस्यापीत्यर्थः । स्वात्मत्वं स्वाभेदम् । अबुधः सम्यग्ज्ञान-शून्यः। स्वात्मनोऽन्यस्य चैतन्यातिरिक्तस्य प्रपञ्चस्याभावं मिथ्यात्वम् । निरात्मतामहमिति परमप्रेमास्पदतया प्रतीयमानस्याहमर्थस्य नाशम् । ततश्चेन्द्रियैरित्यादिमूलार्थ इत्याशयः । ध्यायतो विषयानिति शेषः । शुभगुणारोपणेन स्मरतः पुरुषस्य स्मृतैर्विषयैरिन्द्रियाण्याकृष्यन्त इति विषयाकृष्टैरिन्द्रियैश्च मन आक्षिप्तम् । इन्द्रियैर्विषयभोगार्थं स्वस्मिन्विषयेषु चासक्ति-मद्भवतीत्यर्थः । एवमाक्षिप्तं मनो बुद्धेर्मनोवृत्तिरूपायाश्चेतनां शास्त्रजनितयथार्थबहुस्मरणशक्तिं हरते क्रमेण नाशयति । अत्र दृष्टान्तमाह ॥ स्तुंब इति । स्तुंबो जलनिर्गमद्वारम् ॥ ३० ॥

**भ्रश्यत्यनुस्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये ।**
**तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः ॥ ३१ ॥**

**प्रकाशिका** – अनुस्मरणशक्तिनाशानन्तरं स्मृतिरनेकशास्त्रयथार्थस्मरणसामर्थ्यम् । अनेक-शास्त्रार्थस्मरणशक्तिनाशे स्मृतिरुक्तरूपा भ्रश्यति नश्यति । स्मृतिक्षये सति चित्तं चित्तवृत्तिरूपा भगवद्भक्तिर्भवति । अनु तदनन्तरं ज्ञानभ्रंशः सम्यग्ज्ञाननाशो विपरीतज्ञानं च भवतीत्यर्थः । तेनापि किमित्यत आह ॥ तद्रोधमिति । तद्रोधं सम्यग्ज्ञाननाशं विपरीतज्ञानं चात्मनोऽ-धिकारिणः । आत्मापन्हवमित्यत्रात्मशब्दः परमप्रेमास्पदत्वगुणयोगेन पुरुषार्थपरः । तथा चात्मनः पुरुषार्थस्यापन्हवो नाशो वैपरीत्यं च यस्मात्तं प्राहुरित्यर्थः ॥ ३१ ॥

**नातः परतरो लोके पुंसः स्वार्थव्यतिक्रमः ।**
**यद्यस्त्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात् ॥ ३२ ॥**

**प्रकाशिका** – पुरुषार्थनाशकमनर्थसाधनं च नातोऽन्यदधिकमस्ति । अत उक्तरूपज्ञान-रोधोऽत्यन्तहेय इत्याशयेनाहुः ॥ नात इति । अतो ज्ञानरोधात् । परतरोऽतिशयेनाधिकः स्वार्थव्यतिक्रमः स्वप्रयोजनस्य व्यतिक्रमो नाशो वैपरीत्यं च यस्मात्स तथा । पुरुषार्थना-शकोऽनर्थहेतुश्च लोके नास्तीत्यन्वयः । ननु पुत्रादिनाशोऽप्यनर्थहेतुरर्थनाशकश्चास्तीत्यतः कथं नातः परतर इत्युक्तमित्याशंकायामाह ॥ यद्यस्तीति । यद्यप्यन्यस्य पुत्रादेरात्मनः स्वस्य

प्रेयस्त्वमतिशयेन प्रियत्वमस्ति तथाऽपि तन्नाशः स्वव्यतिक्रमादुक्तरूपात्स्वापन्हवात्ज्ञानरोधात्परतरो न भवति । अत एव तरप् प्रयोगः ॥ ३२ ॥

**अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् ।**
**भ्रंशितो ज्ञानविज्ञानाद् येनाविशति मुग्धताम् ॥ ३३ ॥**

**प्रकाशिका** – उपसंहरति ॥ अर्थेति । अथ तस्मान्नृणामिन्द्रियार्थानां विषयाणामभिध्यानं निरन्तरसञ्चिन्तनं सर्वार्थानां पुरुषार्थानामपन्हवो विनाशहेतुर्मोक्षविरोधीत्यर्थः । ननु पूर्वं ज्ञानरोधकत्वमुक्तम् । अथ कथमिदानीं मोक्षरोधकत्वमुच्यत इत्यत आह ॥ भ्रंशित इति । येन विषयध्यानेन ज्ञानविज्ञानात्सामान्यविशेषलक्षणज्ञानात् । भ्रंशितो मुग्धतामज्ञतां तत्कार्यं संसारं मोक्षमार्गाद्विमुखो भवतीति यावत् । तथा च ज्ञानरोधद्वारैव मोक्षरोधकत्वं विषयाभिधानस्येति भावः ॥ ३३ ॥

**न कुर्यात् कर्हिचित् सङ्गं तमस्तीव्रं तितीर्षुणा ।**
**धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम् ॥ ३४ ॥**

**प्रकाशिका** – नन्वधीतशास्त्रस्य विषयाभिध्यानादिकमेव कुतो भवतीत्यपेक्षायां दुष्टसंग एव तत्र हेतुरित्याह ॥ न कुर्यादिति । संगं संसर्गं दुष्टानामिति शेषः । यतो दुष्टसङ्ग एव तत्र हेतुरतः तीव्रं अल्पप्रयत्नेनानिवर्त्यं तमो मिथ्याज्ञानं तितीर्षुणा तितीर्षुर्दुष्टानां सङ्गं न कुर्यादित्याशयः । तमस्तितीर्षुणेति पाठे न कार्यः कर्हिचित्संग इति पाठः । अतो मोक्षार्थिना संगः सर्वथा त्याज्यः इत्याह ॥ ३४ ॥

**तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते ।**
**त्रैवर्ग्यार्थो यतो नित्यं कृतान्तभयसंयुतः ॥ ३५ ॥**

**प्रकाशिका** – धर्मादिभिः सहपाठान्मोक्षस्यापि तत्तुल्यताभ्रान्तिं परिहरति ॥ तत्रापीति । आत्यन्तिकतया पुनरावृत्तिभयशून्यतया । त्रैवर्ग्यार्थो धर्मार्थकामत्रयत्रिवर्गसाध्यैहिकामुष्मिकश्चार्थः पुरुषार्थः कृतान्तः कालानामाहरिः ॥ ३५ ॥

**परावरे च ये भावा गुणव्यतिकरादनु ।**
**न तेषां विद्यते क्षेम ईशविध्वंसिताशिषाम् ॥ ३६ ॥**

**प्रकाशिका** – कृतान्तभययुतत्वमेव स्पष्टयति ॥ परावरे चेति । परे उत्कृष्टाः स्वर्गाद्या अवरेऽपकृष्टराज्यादयो ये भावाः पदार्था गुणव्यतिकरात्सत्त्वादिगुणवैषम्यादनु पश्चाद्भवन्ति ।

त्रिगुणात्मकप्रकृतिजन्या इति यावत् । तेषां क्षेमः पुनरावृत्तिभयशून्यत्वं न विद्यते । कुत इत्यत उक्तम् ॥ ईशेति । ईशः कालनामा तेन विध्वंसिता आशिषो भोग्या येषाम् । तथा च गुणवैषम्यजन्यत्वादीशविध्वंसिताशीष्ट्वं तस्मान्न क्षेम इति भावः । क्षेमस्य त्वप्रकृतत्वान्नेश-विध्वंसिताशीष्ट्वमिति ज्ञेयम् ॥ ३६ ॥

**मनोमात्रमिदं विश्वं यथा स्वप्ने मनः क्रिया ।**
**क्रिया च वासनामात्रं साऽनीहायां प्रलीयते ॥ ३७ ॥**

**आत्मा त्वनीहया साक्षात् स्वयंज्योतिः प्रसिद्ध्यति ।**
**एवं व्युदस्यात्ममायां भिदामुपरमेन्मुनिः ॥ ३८ ॥**

**तात्पर्यम् – 'मनोमात्रं हरेर्यस्मान्मनसा मीयते जगत् । व्याप्ते मनसि विष्णोश्च स्थितत्वाद्वासनामयम् । वस आच्छादनेत्यस्माद्धातोर्वा वासनामयम् । अतो विष्णोरनीहायां लीयते सकलं जगत् ।**

**'अनीहावस्थ एवासौ मुमुक्षुभिरवाप्यते । एवं विद्वान्बन्धशक्तिं व्युदस्य हरिमाप्नुते । प्रकृतिर्भिदा च माया च भ्रमश्चेत्यभिधीयते । बन्धशक्तिर्यया लोको बम्भ्रमीत्यनिशं भुवी'ति तन्त्रसारे ॥ ३७,३८ ॥**

**प्रकाशिका** – एवं ज्ञानाभावे मोक्षाभावमुक्त्वा ज्ञानेनैव मोक्ष इति वक्तुं कीदृशं ज्ञानं मोक्षार्थमावश्यकमित्यतोऽवश्यं ज्ञेयं तावदाह ॥ मनोमात्रमिति । अप्रतिपत्तिविप्रतिपत्तिनिरासाय श्लोकद्वयतात्पर्यं प्रमाणेनैव दर्शयति ॥ मनोमात्रमिति । हरेर्मनसेच्छया मीयते निर्मीयते । यद्यस्मात्तस्माज्जगज्जन्मनो मात्रमित्युच्यते न तु मिथ्यात्वात् । अनेन मा निर्माण इति धातोः कर्मणि घञ्प्रत्यय इत्युक्तं भवति । हरेरिति योग्यतया लाभः । अनेन मनोमात्रमिदं विश्व-मित्याद्यपद्यं विवृतम् । क्रिया च वासनामात्रमित्यस्यार्थमाह ॥ व्याप्त इति । वासनामयं-चेत्युच्यत इत्यर्थः । सर्वत्र वसतीति वासना सा च प्रकृतं मन एवेत्याशयेन व्याप्ते मनसीत्युक्तम् ॥ विष्णोरिति योग्यतया लाभः । स्थितत्वादिति प्रत्ययार्थतात्पर्यप्रदर्शनम् । अत्रापि जगदिति वर्तते । तेन क्रिया चेत्यत्र क्रियत इति व्युत्पत्त्या क्रियाशब्दो जगत्पर इति सूचयति । वासनामात्रमित्यस्य प्रकारान्तरेणापि तात्पर्यमाह ॥ वस आच्छादनेति । धातोर्धातुव्याख्यानात् । तथा च वासयत्याच्छादयतीति वासना हरेरिच्छा तद्विषयत्वात्तदावृतत्वाद्वासनामय इत्युच्यत इत्यर्थः । साऽनीहायां प्रलीयत इत्येतद्व्याख्याति ॥ अत इति । यत एवं सृष्टिस्थित्योर्हरीच्छाधीनं

जगदत इत्यर्थः । अनीहायां सृष्टिस्थितीच्छाविरुद्धेच्छायाम् । संजिहीर्षायामिति यावत् । सेत्यस्यार्थः ॥ सकलं जगदिति ॥

आत्मा त्वनीहयेत्यस्य तात्पर्यमाह ॥ अनीहावस्थ एवेति । अनेन संजिहीर्षाया मोचकत्वमप्यस्तीति सूचयति । एवेति तुशब्दार्थकथनम् । मुमुक्षुभिरित्यनेन मूले इदमध्याहार्यमिति सूचयति । प्रसिद्ध्यतीत्यस्य तात्पर्यम् ॥ अवाप्यत इति । एवं व्युदस्येत्यर्धस्य तात्पर्यमाह ॥ एवमिति । एवं विद्वानित्यनेनैवं जानन्नित्यन्वयं सूचयति । बन्धशक्तिमिति मायाशब्दार्थकथनम् । उपरमेदित्यस्य तात्पर्यम् ॥ हरिमाप्नुत इति । अनेनोप हरिसमीपे रमेदिति व्याख्यानं सूचयति । मायाशब्दस्य बन्धशक्तिवाचकत्वं कथमित्याशङ्कां प्रमाणशेषेणैव परिहरति ॥ प्रकृतिरिति । बन्धशक्तिः प्रकृत्यादिशब्दैरभिधीयत इत्यर्थः । बन्धशक्तिस्वरूपमाह ॥ ययेति । बद्ध इति शेषः ।

ततश्चायं श्लोकद्वयार्थः ॥ इदं प्रत्यक्षप्रमाणादिसिद्धं विश्वं जगन्मनोमात्रं हरेर्मनसेच्छया मितं निर्मितम् । अत्र दृष्टान्तमाह ॥ यथेति ॥ स्वप्ने स्वप्नावस्थायां यथा मनः क्रिया हरीच्छानिर्मितानि कार्याणि तथेत्यर्थः । न केवलं विश्वं हरीच्छया सृष्टं किन्तु तयैव स्थितं बद्धं चेत्याह ॥ क्रिया चेति । क्रिया कार्यं विश्वं वासनामात्रं च सर्वत्र वसतीति वासना व्याप्ता हरेरिच्छा तया मात्रं स्थितमित्यर्थः । धातूनामनेकार्थत्वात् । वासयत्याच्छादयतीति वासना हरेरिच्छा तदावृतत्वाद्वासनामात्रं हरीच्छया बद्धं चेत्यर्थः । क्रियाशब्दवाच्यविश्वापेक्षया क्लीबत्वम् । यत एवं सृष्टिस्थितिबन्धानां हरीच्छाधीनत्वमतः साऽनीहायामुक्तेच्छाविरुद्धेच्छायां संजिहीर्षायां सत्यां प्रलीयते नश्यति । मोक्षोऽपि संजिहीर्षया भवतीत्याह ॥ आत्मा त्विति । अनीहया संजिहीर्षया। तु एव । साक्षादनुपचारेण । स्वयंज्योतिरनन्याधीनप्रकाश आत्मा व्याप्तो विष्णुः प्रसिद्ध्यति मुक्तैः प्राप्तो भवति । एवं विश्वस्य सृष्टिस्थितिसंहृतिबन्धमोक्षा हरीच्छयैव भवन्तीति ज्ञेयमुक्त्वेदानीमेतादृशज्ञानेनैव मोक्षो भवतीत्याह ॥ एवमिति । उक्तरीत्या तुशब्दोऽवधारणे । जानन्नेवात्मनो हरेर्मायां बन्धकशक्तिं व्युदस्यापास्योप हरेः सपीपे विरमेदाविर्भूतस्वरूपानन्दवान् भवेदित्यर्थः ॥ ३७,३८ ॥

**न यत्र निद्रा मूर्च्छा वा नार्थदृक् च मनोरथः ।**
**नानुवृत्तिर्न प्रलयस्तद् ब्रह्म विजितात्मनः ॥ ३९ ॥**

**तात्पर्यम् – 'अनुवृत्तिरिति प्राज्ञैर्जीवन्मुक्तिरुदीर्यत' इति शब्दनिर्णये ॥ ३९ ॥**

**प्रकाशिका** – मुक्तप्राप्यस्य हरेर्मुक्त्यनन्तरं न विश्वादिवज्जाग्रदाद्यवस्थाप्रदत्वमिति दर्शयन् तत्स्वरूपमाह ॥ न यत्रेति । अत्रानुवृत्तिशब्दार्थाप्रतीत्या तं प्रमाणेनैव दर्शयति ॥ अनुवृत्तिरिति ॥ ततश्चायमर्थः ॥ यत्र यस्मिन्मुक्तप्राप्ये मूर्छा मोहावस्था निद्रा सुषुप्तिरर्थदृक् जाग्रन्मनोरथो मानसवासनाजन्यः स्वप्नोऽनुवृत्तिर्जीवन्मुक्त्यवस्था इत्येते नश्यन्ति । तद्बृंहयति स्वरूपानन्देन पूर्णं करोतीति ब्रह्म तुरीयाख्यं विजितात्मनो मनोजयवतोऽधिकारिणः प्रसिद्ध्यतीत्यन्वयः ॥ ३९ ॥

**तत्त्वं नरेन्द्र जगतामथ तस्थुषां च**
**देहेन्द्रियासुधिषणात्मभिरावृतानाम् ।**
**यः क्षेत्रवित् त्वमनयोर्हृदि विष्वगाधिः**
**प्रत्यक् चकास्ति भगवांस्तमवैहि सोऽस्ति ॥ ४० ॥**

**तात्पर्यम् – 'सर्वसत्ताप्रदत्वात्तु सर्वतत्त्वं हरिः स्मृतः । सर्वत्र विततत्वाद्वा सोऽहं त्वमिति चोच्यते । सर्वान्तर्यामकत्वात्तु न जीवात्मत्वतो हरिरि'ति तत्त्वनिर्णये ॥ त्वमनयोः स्थावरजङ्गमयोर्मध्ये एको जीवः विष्वगाधिः नानादुःखःसन् हृदि स्थितमवैहि अहं च स जीवोऽस्मि ज्ञानान्महान्भवामि यः क्षेत्रवित् ॥ सर्वस्य प्रत्यक्चकास्ति स भगवानिति । 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेदि'ति शब्दनिर्णये ॥ 'अभिमानस्त्वहङ्कार आत्मा चेत्यभिधीयत' इति च ॥ ४० ॥**

**प्रकाशिका** – जीवपरयोर्वैलक्षण्यमपि मोक्षार्थमवश्यं ज्ञेयमित्याशयेन तयोः स्वरूपं दर्शयति । तत्वमिति ॥ अत्र जगतामथ तस्थुषां च यत्तत्वं स्वरूपमित्यभेदप्रतीतिवारणाय तत्वशब्दार्थं प्रमाणेनैव दर्शयति ॥ सर्वसत्तेति ॥ तुशब्दोऽवधारणे । न तु स्वरूपत्वादित्यर्थः । सर्वतत्त्वमिति स्मृतः । यदधीना यस्य सत्तेत्यादाविति शेषः । विततत्वाद्व्याप्तत्वात् । ततत्वात्ततदेव तत्त्वम् । स्वार्थे त्वप्रत्यय इति भावः । अनेन जगतामित्यादि षष्ठी सप्तम्यर्थे । एवं च जंगमादिषु तत्त्वं ततमिति व्याख्यानं सूचयति । नन्वेवमस्य श्लोकस्य जीवेश्वरवैलक्षण्यपरतया व्याख्याने सोऽहं तत्त्वमसीत्यादिश्रुतिविरोध इत्यतस्तद्वाक्यव्याख्यानप्रकारं दर्शयति ॥ सोऽहमिति । स आदित्यान्तर्गतोऽहं मदन्तर्यामी तत्पूर्वोक्तं ब्रह्म त्वं त्वदंतर्यामीति तद्वाक्यं व्याख्येयमतो न विरोध इति भावः । तुशब्दोऽवधारणे । तद्व्यावर्त्यमाह ॥ न जीवेति । द्वितीयार्धे एकवाक्यता-भ्रमवारणाय वाक्यभेदेन योजनामाह ॥ त्वमनयोरिति । अनयोरित्यस्य प्रकृतस्थावरजङ्गमजाति परामर्शकत्वमित्याशयेनोक्तं स्थावरजङ्गमयोरिति ॥ मध्य इत्यनेन निर्धारणे सप्तमीति सूचयति । एको जीव इत्यपेक्षितस्याध्याहारः । विष्वगाधिरित्यस्य प्रयोजनं दर्शयति ॥ विष्वगाधिरिति ।

सन्नित्यनेन जीवत्वोपपादकहेतुसूचकमिदमिति तत्प्रयोजनमुक्तमित्यवधेयम् । हृदीत्यस्य व्यवहितेन तमवैहीत्यनेनान्वय इत्याह ॥ हृदीति । तं जीवं हृदि स्थितमवैहि । हृदि ह्येष आत्मेति श्रुतेरिति भावः । तथा च तत्वमित्युक्तव्याप्तिप्रतियोगितया परिच्छिन्नत्वमनेनोक्तं भवतीत्याशयः। सोऽस्मीत्यापेक्षितं चशब्दमध्याहृत्यार्थमाह ॥ अहंचेति । अस्मीत्युत्तमपुरुषप्रयोगलब्धार्थ प्रदर्शनायाहमित्युक्तम् । इत्यस्यार्थो जीव इति । तथा च तमित्यव्यवहितप्रकृतजीवपरामर्शकः तच्छब्दो न भगवत्परामर्शक इत्यर्थः ।

नन्वेवं त्वमहं चेत्यावां जीवावित्येव वक्तव्ये सोऽहमस्मीति स्वस्य जीवत्वं पृथक्कस्मादुक्तमित्यतः पृथगुक्तेरभिप्रायमाह ॥ ज्ञानादिति । यद्युक्तरीत्येकेनैव वाक्येनोभयोर्जीवत्वमुच्यते तर्हुभयोः साम्यं प्रतीयेत न च तदस्ति । अतः स्वस्य ज्ञानादिना महत्वसूचनाय पार्थक्येन जिवत्वमुक्तमित्याशयेनोक्तमिति मन्तव्यम् । ननु तृतीयपादस्थस्य यः क्षेत्रविदित्यस्य केनान्वय इत्यपेक्षायां तस्य चतुर्थपादस्थपदेनान्वय इत्याह ॥ यः क्षेत्रविदिति । जीववत्परिच्छिन्नत्व प्रतीतिवारणाय सर्वस्येत्यध्याहृतम् । स इत्यस्यावृत्तिमभिप्रेत्य स भगवानित्युक्तम् । ननु संनिधिमपहाय व्यवधानेनान्वयाङ्गीकारो न युक्त इत्याशङ्कां प्रमाणेनैव परिहरति ॥ व्यवधानेनेति। योग्यतापेक्षयाऽर्थाबाधापेक्षया संनिध्यपेक्षया योग्यताया एव बलवत्त्वादित्याशयः। ननु देहेन्द्रियासुधिषणात्मभिरित्यत्रात्मशब्देन न देहमनसोर्ग्रहणं संभवति । देहधिषणेति तयोरुक्तत्वात्। नापि जीवस्य । स्थावरावरकत्वासंभवात् । अतोऽत्राभिमानापरापर्यायोऽहङ्कार एवात्मशब्दवाच्य इत्याशयेनात्मशब्दस्य तादृशाहङ्कारशब्दवाच्यत्वे प्रमाणं पठति ॥ अभिमान इति । तुशब्दश्चशब्दार्थः । अहङ्कारोऽभिमानश्चात्मा चेत्यभिधीयत इत्यर्थः ॥

ततश्चायं श्लोकार्थः ॥ हे नरेन्द्र । अथशब्दः समुच्चयार्थः । देहश्चेन्द्रियाणि चासवः प्राणाश्च धिषणा बुद्धिश्चात्माऽहंकारश्चेत्येतैरावृतानां जगतां जंगमानां तस्थुषां स्थावराणां च यत्तत्त्वं सत्तादिप्रदं तेषु ततमिति वा । यश्चाव्यक्तादितत्त्वजातं क्षेत्रं तद्वेत्तीति क्षेत्रवित् । आवृत्तानामित्यनेनोक्ताज्ञप्रतियोगितयेदमुक्तमिति ज्ञातव्यम् । सर्वस्य प्रत्यगन्तश्च काऽस्ति विष्वगाधिरित्येतत्प्रतियोगितयेदमुक्तम् । स भगवान् त्वमनयोश्चराचरयोः प्राणिनोर्मध्ये एको जीवो विष्वगाधिर्नानादुःखयुक्तः । ननु भगवद्वज्जीवोऽपि व्याप्तश्चेन्न तयोर्वैलक्षण्यमत आह ॥ हृदीति । हृदि हृद्येव स्थितं तं जीवमवैहि । जीवो न व्याप्त इत्याशयः । अहमपि स जीवोऽस्मि । किन्तु ज्ञानान्महानित्येव । न भगवत्स्वरूपो भगवत्तु ज्ञानीत्याशयः । जीवो न व्याप्त इत्याशयः। तथा च जीवपरावत्यन्तविलक्षणावित्यवश्यं ज्ञेयमिति वाक्यशेषः ॥ ४० ॥

**यस्मिन्निदं सदसदात्मतया विभाति मायाविवेकविधुतिः स्रजिवाहिबुद्धिः ।**
**तं नित्यमुक्तपरिशुद्धविबुद्धतत्त्वं प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ॥ ४१ ॥**

**तात्पर्यम् – 'यत्स्वरूपतया भातमज्ञानां गगनादिकम् । विवेकज्ञानिनां रज्जौ सर्पमावद्विधूयते। तन्नित्यमुक्तभावेन निरस्तप्रकृतिं भजेदि'ति ज्ञानविवेके ॥ 'न भ्रान्तिर्जगतो दृष्टिर्न भ्रान्तिर्हरिदर्शनम् । अन्योन्यात्मतया दृष्टिर्भ्रान्तिरित्यवधार्यतामि'ति च । 'मायेति ज्ञाननाम स्यान्मायेति प्रकृतिस्तथा । ज्ञानं स्वरूपं विष्णोस्तु प्रकृतिर्न हरेस्तनुः । एवं विवेकिनो विश्वं ब्रह्मरूपेण नेष्यत' इति वाराहे ॥ ज्ञानप्रकृत्याख्यमायाद्वयस्य विवेकज्ञानात्सदसतोर्विष्ण्वात्मतया प्रतीतिः स्रज्यहिबुद्धिरिव विधूयत इत्यर्थः । 'पञ्चभूतात्मकं देहं विष्णोः पश्यन्त्ययोगिनः । तथा न योगिराद्धान्तो ज्ञानं देहो यतो हरेरि'ति षाड्गुण्ये ॥ ४१ ॥**

**प्रकाशिका –** ननु पुरुष एवेदं सर्वमित्यादिश्रुतिभिर्विश्वाभिन्नतया प्रतीयमानस्य हरेः कथं जीवाद्वैलक्षण्यमित्यतः सा प्रतीतिर्भ्रान्तिर्विपरीतप्रमाणबाध्यत्वादिति वदन् जीवविलक्षणतया सिद्धान्तमेव प्रपद्येतेत्याह ॥ यस्मिन्निति । यस्मिन्निदं विश्वं सदसदात्मतया कार्यकारणभावेन मायैव मिथ्यैव भाति तं प्रपद्ये । मायात्वे हेतुर्विवेकेन विधुतिर्निवृत्तिर्यस्य तदिति व्याख्याननिरासाय श्लोकतात्पर्यं प्रमाणेनैव दर्शयति ॥ यत्स्वरूपतयेति । यस्य हरेः स्वरूपतयाऽभिन्नतया। गगनादिकमित्यनेनासदित्युक्तार्थम् । आत्मतयेत्यस्यार्थः ॥ स्वरूपतयेति । विभाति अत्राज्ञानामिति शेषमभिप्रेत्योक्तम् ॥ अज्ञानां भातमिति । मायाविवेकविधुतिरित्यस्य तात्पर्यम् ॥ विवेकज्ञानिनां विधूयत इति । हरेर्विश्वस्य च भेदज्ञानिनां । ज्ञानेनेति शेषः । स्रजिवेत्यत्र वाशब्द उपमायामित्यभिप्रेत्य रज्जौ सर्पमावदित्युक्तम् । रज्जावित्यनेन स्रजीत्येतदुपलक्षणमिति सूचयति । सर्पमावत्सर्पबुद्धिरिव । प्रत्यूढकर्मकलिलप्रकृतिमित्यत्र नित्यमुक्तेत्यादिकं हेतुतया योजनीयमित्याशयेन नित्यमुक्तभावेनेत्युक्तम् । नित्यमुक्तत्वेनेत्यर्थः । परिशुद्धतत्त्वादेरुपलक्षणमेतत् । प्रत्यूढेत्यस्यार्थः ॥ निरस्तेति । प्रकृतिपदं कर्माद्युपलक्षकम् । भजेदित्यनेन व्यत्ययेन प्रपद्य इत्यस्य प्रपद्येतेत्यर्थ इति सूचयति ।

नन्वेवं सर्वं ब्रह्मेति ज्ञानस्य भ्रान्तित्वे सर्वस्य ब्रह्मणश्च भ्रान्तिकल्पितत्वमित्यपेक्षायामाह ॥ न भ्रान्तिरिति । तर्हि कस्मिन्नंशे भ्रान्तिकल्पितत्वमित्यपेक्षायामाह ॥ अन्योन्येति । अन्योन्याभेद विषयकत्वांश एवेत्यर्थः । अवधार्यताम् । तस्यैव बाधितत्वादित्याशयः । ततश्च ज्ञानस्यैकत्वेऽपि अंशभेदेनाभ्रान्तित्वस्यापि सत्वान्न ब्रह्मजगतोर्मिथ्यात्वप्रसङ्ग इत्याशयः । यद्यपि भ्रमस्थले ज्ञानस्यारोप्यांशस्यापि भ्रान्तित्वमेवेति सिद्धान्तः । तथाऽपि न सर्वत्र किन्तु यत्र पुरोदेशे

सत्वमारोप्यं स्यान्न तत्र तदंशे भ्रमत्वम् । किन्तु तादात्म्यांश एव । यथा दूरस्थपनसचूतयोरयं चूत इति ज्ञाने तथाऽत्रापि ज्ञातव्यम् । ननु तथाऽपि मायाशब्देन मिथ्यात्वमुच्यत इत्यतो मायेति न भिन्नं पदं किन्तु मायाविवेकविधुतिरित्येकमेव पदमित्यभिप्रेत्य मायादिपदानां प्रकृतोपयुक्तमर्थं प्रमाणेनैवाह ॥ मायेति । प्रकृतिरुच्यत इति शेषः । तथाशब्दः समुच्चये । एवं मायाशब्दार्थमुक्त्वेदानीं विवेक शब्दार्थं दर्शयति ॥ ज्ञानमिति । तुशब्दोऽवधारणे । ज्ञानमेव विष्णोः स्वरूपं प्रकृतिस्तत्कार्यं विश्वं न हरेस्तनुः स्वरूपमिति ज्ञानम् । विवेक इति शेषः । विवेकविधुतिरिति पदद्वयतात्पर्यं दर्शयति ॥ एवमिति । विवेकिन उक्तरूपबाधकज्ञानवतो विश्वं ब्रह्मरूपेण ब्रह्मात्मतया नेष्यते न प्रतीयते । अनेनोक्तज्ञानभ्रान्तिर्निवर्तत इत्यर्थः । दृष्टान्ते स्वबुद्धेरेव निवर्त्यतयोक्तत्वात् । दार्ष्टान्तिकेऽपि बुद्धिरेव निवर्त्यतया वाच्येत्याशयेन श्लोकतात्पर्यं स्ववचनेनापि स्पष्टयति ॥ ज्ञानेति । अत्रापि प्रकृतिपदं तत्कार्यविश्वपरम् । मायाद्वयस्य मयाशब्दार्थद्वयस्य विवेकज्ञानाद्विवेकशब्दार्थतया विवक्षितात् भेदज्ञानात् । प्रत्यूढकर्मकलिल-प्रकृतिमित्यनेन हरेर्जडदेहाभाव उक्तः । तत्र प्रमाणसंवादमाह ॥ पञ्चभूतात्मकमिति । जडमित्यर्थः । अयोगिनो योगमार्गविरुद्धमार्गाः । अयोगिज्ञानविषयत्वाद्भ्रमत्वमित्याशयः ॥ ततश्चायं श्लोकार्थः ॥ यस्मिन्हरौ सदसन्मूर्तामूर्तात्मकं विश्वमात्मतया स्वरूपताऽभेदेन विभाति । पुरूष एवेदं सर्वमित्यादिना प्रतीयते सा प्रतीतिः । स्रजि मालायां रज्जावहिबुद्धिरिव मायाविवेकविधुतिः । मायाशब्दार्थभूतयोर्ज्ञानजगतोर्विवेको हरिस्वरूपं ज्ञानात्मकं जगत्स्वरूपं न तथा ज्ञानात्मकमिति भेदज्ञानं तेन विधुतिर्निराकृतिर्यस्याः सा तथा । जाताऽपि विप्रतिपत्ति-योगिनामुक्तरूपभेदज्ञानेन निवर्तत इत्याशयः । अधिष्ठानयाथात्म्यज्ञानेन निवर्त्यत्वमात्रे हि बुद्धिदृष्टान्त इति ज्ञातव्यम् । तमुक्तभ्रमबाधायारोपाधिष्ठानभूतम् । जीवव्यावृत्त्यर्थं नित्यशब्दः प्रत्येकं अभिसंबध्यते । नित्यमुक्तं नित्यपरिशुद्धं च नित्यविबुद्धं सर्वज्ञं च यत्तत्त्वमनारोपितं रूपं तद्यस्य च । अत एव प्रत्यूढे दूरीकृते कर्मच कलिला सत्त्वादिगुणमिश्रा प्रकृतिश्च येन स तथा तं चिन्मात्रदेहम् । एवं सर्वजीववैलक्षण्येन सिद्धमिति यावत् । प्रपद्ये प्रपद्येत ॥ ४१ ॥

**यत्पादपङ्कजपरागविलासभक्त्या कर्माशयग्रथितमुद्ग्रथयन्ति सन्तः ।**
**तत्त्वं न तद् द्विमतयोऽपि विरुद्धमार्गस्रोतोगुणास्तमरणं भज वासुदेवम् ॥४२॥**

**तात्पर्यम् – द्विमतयः जगति भगवति च प्रतीतियुक्ता अपि भक्तिविशेषात्तत्त्वं नोद्ग्रथयन्ति । संसारगुणास्तेषां विरुद्धा एव प्रतीयन्ते यतः ॥ ४२ ॥**

**प्रकाशिका** – न केवलमुपदिष्टज्ञानमेव मोक्षसाधनं किन्तु भक्तिरपीत्याशयेन तत्र पुराकल्परूपार्थवादं दर्शयन् भक्तिं विधत्ते ॥ यदिति । यस्य पादपंकजयोः पलाशानि पत्रायमाणा

अङ्गुल्यस्तेषां विलासः कान्तिस्तस्य भक्त्याऽऽशयेऽन्तःकरणे ग्रथितं संश्लिष्टं यथा भगवद्भक्त्योद् ग्रथयन्ति तथाऽऽशये ग्रथितं भगवन्तमपि विषयासक्त्यादिना किं कदाचिद् ग्रथयन्ति नेत्याह ॥ तत्त्वं न तद्विमतयोऽपीति । अप्रतीत्या द्विमतय इत्यस्यार्थं वदन् तद्वाक्याभिप्रायमाह ॥ द्विमतय इति । द्वयोर्मतिर्येषामिति बहुव्रीहिलब्धार्थप्रदर्शनाय प्रतीतियुक्ता इत्युक्तम् । कादाचित्क-विषयासक्तिमन्तोऽपीत्यर्थः । तत्त्वमाशयग्रथितं भगवत्स्वरूपम् । भक्तिविशेषात्प्रतिदिन-वर्धमानभक्तिविशेषात् । कुतो भक्तेः प्रतिदिनवर्धमानत्वमित्यपेक्षायां तत्र हेतुकथनाय विरुद्ध-मार्गस्रोतो गुणा इत्युत्तरवाक्यं प्रवृत्तमित्याशयेन तदर्थमाह ॥ संसारगुणा इति । संसारेऽनु-भूयमानविषया इत्यर्थः । मार्गशब्दार्थः ॥ संसारेति ॥ सोऽध्वनः पारमाप्नोतीति प्रयोगात् । स्रोतःशब्दः प्रवाहपरः । अत एव मार्गस्रोतः शब्दार्थप्रदर्शनाय क्वचित्संसारप्रवाहगुणा पाठः । विरुद्धा एव प्रतीयन्त इत्यनेन विरुद्धा मोक्षमार्गविरुद्धत्वेन हेयतया प्रतीयमाना मार्गस्रोतोगुणाः संसारप्रवाहेऽनुभूयमाना विषया येषामिति योजनां सूचयति । एवेत्यनेन तथा प्रतीतिनियमं यत इत्यनेन हेतुगर्भविशेषणत्वम् ॥ ४२ ॥

**कृच्छ्रो महानिह भवार्णवमप्लवेशाः षड्वर्गनक्रमसुखेन तितीर्षयन्ति ।**
**तत् त्वं हरेर्भगवतो भजनीयमङ्घ्रिं कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् ॥ ४३ ॥**

**प्रकाशिका** – एवं भक्तिप्रधानकं मोक्षमार्गमुपदिश्येतरत्रारुच्युत्पादनाय योगप्रधानक-मोक्षमार्गनिन्दनपूर्वकं पुनस्तदेव विधत्ते ॥ कृच्छ्र इति । ईशशब्दस्तद्भक्तिपरः । न विद्यते प्लवस्तरणोपायः ईशो येषाम् । प्राधान्येन भक्तिमार्गरहितानामिति यावत् । तेषामिह संसारार्णवतरणे महान् कृच्छ्रः क्लेशो भवति । कुतः । यतस्तेऽसुखेन सुखरहितेन कष्टसाध्येन योगप्रधानकेन मार्गेण तितीर्षन्ति । षड्वर्ग एव नक्रा यस्मिन् । भवार्णवमिति शेषः । तस्मात्त्वमङ्घ्रितद्भक्तिमुडुपं प्लवं कृत्वा । प्रधानमिति शेषः । दुस्तरार्णं दुस्तरोदकरूपं ज्ञाननावं विना ततुर्मशक्यमिति व्यसनं संसारदुःखमुत्तर । अर्णमित्यत्र सकारलोपश्छान्दसः ॥ ४३ ॥

**मैत्रेय उवाच–**

**स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा ।**
**दर्शितात्मगतिः सम्यक् प्रशस्योवाच तं नृपः ॥ ४४ ॥**

**प्रकाशिका** – आत्मनो हरेर्मेधा ज्ञानं यस्य स तथा तेन । मनोयोगवता वा । दर्शिताऽऽत्मनो हरेर्गतिः स्थितिर्यस्मै ॥ ४४ ॥

पृथुरुवाच –

**कृतो मेऽनुग्रहः पूर्वं हरिणार्तानुकम्पिना ।**
**तमापादयितुं ब्रह्मन् भगवन् यूयमागतः ॥ ४५ ॥**

**प्रकाशिका** – ब्रह्मन्निति संबोधनम् । एकस्य प्राधान्यात् ॥ ४५ ॥

**निष्पादितं च कात्स्न्र्येन भगवद्भिर्घृणालुभिः ।**
**साधुदत्तं हि सर्वं मे आत्मना सह किं ददे ॥ ४६ ॥**

**प्रकाशिका** – घृणालुभिः कृपालुभिः । इतः परं मया गुरुदक्षिणा देया तत्र मम देयं न किञ्चिदस्तीत्याह ॥ साधुदत्तमिति । हि यस्मादात्मना देहेन सह सर्वं विद्यमानं साधुभ्यो दत्तम् । तत्प्रसादेन लब्धं तत्स्वामिकं तस्मात्किं ददे ॥ ४६ ॥

**प्राणा दाराः सुता ब्रह्मन् गृहाश्च सपरिग्रहाः ।**
**रायो मही बलं कोश इति सर्वं निवेदितम् ॥ ४७ ॥**

**प्रकाशिका** – न हि स्वामिना दत्तं धनादिकं दानरूपेण तस्मै दीयतेऽतो दानासंभवेऽपि समुद्रायार्घ्यनिवेदनवत्तदीयस्य तस्मै समर्पणरूपं निवेदनमेव मया कार्यमित्याह ॥ प्राणा इति । रायो वित्तानि । इतिशब्दः प्रभृत्यर्थः ॥ ४७ ॥

**सेनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।**
**सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ ४८ ॥**
**स्वंय(स्व)मेव ब्राह्मणो भुंक्ते स्वं वस्ते स्वं ददाति च ।**
**तस्यैवानुग्रहेणान्नं भुंजते क्षत्रियादयः ॥ ४९ ॥**

**प्रकाशिका** – आत्मनः स्वामित्वाभावं प्रपश्चयति ॥ सेनापत्यमिति द्वाभ्याम् । वस्ते परिधत्ते। अन्नमात्रं भुंजते । न तु दाने स्वतन्त्रा इत्याशयः ॥ ४८,४९ ॥

**यैरीदृशी भगवतो गतिरात्मवाद एकान्ततो निगमिभिः प्रतिपादिता नः ।**
**तुष्यन्त्वदभ्रकरुणाः स्वकृतेन नित्यं को नाम तत् प्रतिकरोति विनोदपात्रम् ॥५०॥**

**प्रकाशिका** – किंबहुना न मया भवतां प्रत्युपकर्तुं शक्यमित्याह ॥ यैरिति । गतिः स्थितिः । आत्मवादे ब्रह्मप्रवचने कार्ये । एकान्ततो नियमेन निगमभिर्वेदार्थनिश्चयवद्भिर्नोऽस्माकं

प्रतिपादितास्ते यूयम् । अदभ्रकरुणा अनल्पकरुणाः स्वकृतेन दीनोद्धरणलक्षणेन कर्मणा नित्यं तुष्यंत्वभिवृद्धमोदवन्तो भवन्तु । को नाम तत्कृतमुपकारं प्रति स्वयमुपकरोति । उपकर्तुं शक्तो न कोऽपीति । यदि कश्चिदुपकर्तुमुद्यतः स्यात्तर्हि विनोदपात्रमुपहासविषययो भवेदित्यर्थः । उदपात्रमंजलिं विनेत्यप्याहुः ॥ ५० ॥

**मैत्रेय उवाच –**

**त आत्मयोगपतय आदिराजेन पूजिताः ।**
**शीलं तदीयं शंसन्तः खेऽभूवन् मिषतां नृणाम् ॥ ५१ ॥**

**प्रकाशिका –** आत्मयोगस्याध्यात्मयोगस्योपदेष्टृत्वेन पतयः । मिषतां पश्यतां सताम् । खे आकाशमार्गे ॥ ५१ ॥

**वैन्यस्तु धुर्यो महतां संस्थित्याऽध्यात्मशिक्षया ।**
**आप्तकाममिवात्मानं मेन आत्मन्यवस्थितः ॥ ५२ ॥**

**तात्पर्यम् – 'नैजः सर्वगुणोत्कर्षः सर्वेभ्यो महदुच्यत' इति शब्दनिर्णये ॥ ५२ ॥**

**प्रकाशिका –** संस्थित्या स्वयोग्यतया संपूर्णयाऽध्यात्मशिक्षया परमात्मतत्त्वज्ञानलक्षणतया । अत्र महतां धुर्य इति वैन्यस्य गुणोत्कर्ष उच्यते । न चासावनेन लभ्यते । महच्छब्दस्य स्वावरपूज्यत्वमात्रार्थकत्वेन धुर्यत्वस्य दैत्यधुर्यबल्यादिसाधारणादतोऽत्र विवक्षितं महच्छब्दार्थं प्रमाणेनैव दर्शयति ॥ नैज इति । सर्वेभ्यः स्वावरेभ्यो नैजः स्वाभाविकः सर्वेषां ज्ञानभक्त्यादीनामुत्कर्षो महच्छब्देनोच्यत इत्यर्थः । तथाच महतां स्वाभाविकज्ञानभक्त्याद्युत्कर्षाणां धुर्यो भारवाहक इति मूलार्थ इति भावः । आप्तकाममिव मुक्तमिवात्मन्यवस्थितः सदा हर्यनुसंधानवान् ॥ ५२ ॥

**कर्माणि च यथाकालं यथादेशं यथाबलम् ।**
**यथोचितं यथावित्तमकरोद् ब्रह्मसात्कृतम् ॥ ५३ ॥**

**प्रकाशिका –** ब्रह्मसात्कृतं ब्रह्मण्यर्पितं यथा भवति तथा ॥ ५३ ॥

**फलं ब्रह्मणि विन्यस्य निर्विषङ्गः समाहितः ।**
**कर्माध्यक्षं च मन्वान आत्मानं प्रकृतेः परम् ॥ ५४ ॥**

**प्रकाशिका** – ब्रह्मसात्कृतमित्युक्तमेव दर्शयति ॥ फलमिति । निर्विषंगो विषयासक्तिशून्यः । कर्माध्यक्षं कर्मकारयितारं पूज्यं च । प्रकृतेः परमप्राकृतमात्मानं हरिं च मन्वानः ॥ ५४ ॥

**गृहेषु वर्तमानोऽपि स साम्राज्यश्रियाऽन्वितः ।**
**नासज्जतेन्द्रियार्थेषु निरहंमतिरर्कवत् ॥ ५५ ॥**

**प्रकाशिका** – निर्विषंग इत्युक्तमेव विशदयति ॥ गृहेष्विति ॥ ५५ ॥

**एवमध्यात्मयोगेन कर्माण्यनुसमाचरन् ।**
**पुत्रानुत्पादयामास पञ्चार्चिष्यात्मसम्मतान् ॥ ५६ ॥**
**विजिताश्वं धूमकेशं हर्यक्षं द्रविणं वृकम् ।**
**सर्वेषां लोकपालानां दधारैकः पृथग् गुणान् ॥ ५७ ॥**

**प्रकाशिका** – अर्चिषि भार्यायाम् ॥ ५६,५७ ॥

**गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः ।**
**मनोवाङ्मूर्तिभिः सौम्यैर्गुणैः संरञ्जयन् प्रजाः ॥ ५८ ॥**

**प्रकाशिका** – जगत्सृष्टेः सृष्टस्य जगतो गोपीथाय । रक्षणाय । अच्युते आत्मा मनो यस्य स तथा । रंजनाद्राजेति राजशब्दं निर्वक्ति ॥ मनोवाङ्मूर्तिभिरिति ॥ ५८ ॥

**राजेत्यधान्नामधेयं सोमराज इवापरः ।**
**सूर्यवद् विसृजन् गृह्णन् प्रतपंश्च भुवो वसु ॥ ५९ ॥**

**प्रकाशिका** – सोमश्चासौ राजा च स इव । भुवो वसु धनं गृह्णन् विसृजंश्चासौ सूर्यवत् । सूर्यपक्षे वसु जलम् । राजपक्षे प्रतापनमाज्ञाऽकरणम् ॥ ५९ ॥

**दुर्धर्षस्तेजसेवाग्निर्महेन्द्र इव दुर्जयः ।**
**तितिक्षया धरित्रीव द्यौरिवाभीष्टदो नृणाम् ॥ ६० ॥**

**प्रकाशिका** – अग्निरिव दुर्धर्षः । द्यौरिव स्वर्ग इव ॥ ६० ॥

**वर्षति स्म यथाकामैः पर्जन्य इव तर्पयन् ।**
**समुद्र इव दुर्बोधः सत्येनाचलराडिव ॥ ६१ ॥**

**धर्मराडिव शिक्षायामाश्चर्ये हिमवानिव ।**
**कुबेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा ॥ ६२ ॥**

**प्रकाशिका** – समुद्रो यथा गांभीर्येणैव दुर्बोधः । तथाऽसावभिप्रायतो दुर्बोधः । अचलराण्मेरुः ॥ ६१,६२ ॥

**मातरिश्वेव सर्वात्मा बलेन महतौजसा ।**
**अविषह्यतया देवो भगवान् भूतराडिव ॥ ६३ ॥**

**प्रकाशिका** – सर्वात्मा सर्वसंचारशक्तिः । भूतराट् शिवः ॥ ६३ ॥

**कन्दर्प इव सौन्दर्ये मनस्वी मृगराडिव ।**
**वात्सल्ये मनुवन्नृणां प्रभुत्वे भगवानजः ॥ ६४ ॥**

**प्रकाशिका** – मृगराट् सिंहः ॥ ६४ ॥

**बृहस्पतिर्ब्रह्मवादे आत्मतत्त्वे स्वयं हरिः ।**
**भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु ॥ ६५ ॥**

**तात्पर्यम् – 'अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः । एकस्तद्वेद भगवान्प्रभुर्नारायणः स्वराडि'ति मोक्षधर्मेषु ॥ ६५ ॥**

**प्रकाशिका** – ब्रह्मवादे सवेदवचने । आत्मतत्त्वे परमात्मतत्त्वज्ञाने स्वयं साक्षाद्धरिरिव । अत्र परमात्मज्ञाने पृथोर्हरिसाम्यशङ्कां प्रमाणेनैव परिहरति ॥ अनाद्यन्तमिति । देवशब्देन कर्मजदेवानामपि विवक्षितत्वात्प्रकृतसङ्गतिरित्यवधेयम् । स्वराट् स्वतन्त्रः । तथा च मूलेऽधिकदृष्टान्तः किञ्चित्साम्यमपेक्ष्येति ज्ञेयम् ॥ ६५ ॥

**ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यपरोद्यमैः ।**
**कीर्त्योर्ध्वगीतयः पुंभिस्त्रैलोक्ये तत्र तत्र ह ॥ ६६ ॥**

**प्रकाशिका** – आत्मतुल्यपरोद्यमैः स्वहितकरणतुल्यपरहितकरणैरित्यर्थः । उद्यमे इति पाठे तद्विषये इत्यर्थः ॥ ६६ ॥

**प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां रामः सतामिव ॥ ६७ ॥**

**तात्पर्यम् – 'गुरुविप्रेषु भक्त्या च परेषां हितकृत्तया । प्रश्रयेण च कीर्त्या च पृथू राममनुव्रत' इति ब्रह्माण्डे । 'न गुरुर्न च धर्मोऽस्ति रामदेवस्य कुत्रचित् । तथापि धर्मरक्षार्थं गुरुभक्तिमदर्शयदि'ति वाराहे ॥ ६७ ॥**

**प्रकाशिका** – पुंभिः सद्भिरूर्ध्वमुच्चैर्यथा स्यात्तथागीतया कीर्त्या स्त्रीणां कर्णरंध्रेषु प्रविष्टः । क इव । रामो दाशरथिरिव । यथा भक्त्यादिगुणैः सतां कर्णरंध्रेषु प्रविष्टस्तथेत्यर्थः । अयमधिकदृष्टान्तः । साम्यं प्रोक्तैर्भक्त्यादिभिः कतिपयैरेव गुणैः साम्यमित्यभिप्रेत्यात्र प्रमाणं पठति ॥ गुरुविप्रेष्विति । आत्मतुल्यः परोद्यमैरित्यस्य तात्पर्यम् ॥ परेषां हितकृत्तयेति । हितकारित्वेनेत्यर्थः । राममनुव्रतो रामसदृशः । ननु रामस्य भगवदवतारस्य न गुर्वादिसिद्धिरतः कथमेतदित्याशङ्कां प्रमाणेनैव परिहरति ॥ न गुरुरिति । न च देवोऽस्तीत्यनेन मूले विष्वक्सेनानुवर्तिष्वित्येतद्देवेष्विति व्याख्येयमिति सूचयति । गुरुभक्तिमित्यत्र गुरुशब्दो देवानामप्युपलक्षकः । तथा च तस्य गुर्वाद्यभावेऽपि धर्मशिक्षार्थं तेन प्रदर्शिता या गुर्वादिभक्तिस्तद्दृष्टान्ततयैव रामस्य दृष्टान्तत्वमित्याशयः ॥ ६७ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

## अथ त्रयोविंशोऽध्यायः ।

**मैत्रेय उवाच–**

**दृष्ट्वाऽऽत्मानं प्रवयसमेकदा वैन्य आत्मवान् ।**
**आत्मना वर्धिताशेषसानुसर्गः प्रजापतिः ॥ १ ॥**

**प्रकाशिका** – ॥ हरिः ॐ ॥ प्रवयसं गतवयसं वृद्धं दृष्ट्वा तपोवनमगादिति वक्ष्यमाणेनान्वयः । आत्मवान् जितमनाः । अनुसर्गः पुरग्रामादिसर्गश्चानुसर्गस्तेन सहितः पुत्र-पौत्रादिसर्गः सानुसर्गो वर्धितः अशेषः सानुसर्गो येन स तथा ॥ १ ॥

**जगतस्तस्थुषश्चापि वृत्तिदो धर्मभृत् सताम् ।**
**निष्पादितेश्वरादेशो यदर्थमिह जग्मिवान् ॥ २ ॥**

**प्रकाशिका** – आरामकरणादिना स्थावराणां वृत्तिदानम् । निष्पादितेश्वरादेशः प्रजापालनादि रूपो येन । जग्मिवान् जातः ॥ २ ॥

**आत्मजेष्वात्मजां न्यस्य विरहाद् रुदतीमिव ।**
**प्रजासु विमनास्स्वेकः सदारोऽगात् तपोवनम् ॥ ३ ॥**

**प्रकाशिका** – आत्मजां पृथिवीं विरहाद्वियोगाद्रुदतीमिव स्थिताम् । विमनासु चिन्तातुरासु ॥ ३ ॥

**तत्रापाद्यात्मनियमो वैखानससुसम्मते ।**
**आरब्ध उग्रतपसि यथा स्वविषये पुरा ॥ ४ ॥**

**प्रकाशिका** – आपाद्यः संपाद्य आत्मनियमः कंदमूलाद्याहाररूपो येन । वैखानसा वनस्थास्तेषां सुसंमते । उग्रतपसि कायक्लेशादिलक्षणे आरब्धः प्रवृत्तः । कर्तरि क्तः । पुरा राजत्वावस्थायां स्वविषये स्वराष्ट्रे उग्राणां दुष्टानां तपसि सन्तापे यथा प्रारब्धस्तथेत्यर्थः ॥ ४ ॥

**कन्दमूलफलाहारः शुष्कपर्णाशनः क्वचित् ।**
**अब्भक्षः कतिचित्पक्षान् वायुभक्षस्ततः परम् ॥ ५ ॥**

**प्रकाशिका** – आत्मनियमानेवाह ॥ कंदमूलेति । क्वचित्कदाचित् ॥ ५ ॥

**ग्रीष्मे पञ्चतपा वीरो वर्षास्वासारषाण्मुनिः ।**
**आकण्ठमग्नः शिशिर उदके स्थण्डिलेशयः ॥ ६ ॥**
**तितिक्षुर्यतवाक् दान्त ऊर्ध्वरेता जितानिलः ।**
**आरिराधयिषुः कृष्णमाचरत् तप उत्तमम् ॥ ७ ॥**

**प्रकाशिका** – उग्रतपो दर्शयति ॥ ग्रीष्म इति । चतुर्दिक्षु चत्वारोऽग्नय उपरि सूर्य इति पञ्चभिस्तपः सन्तापो यस्य स पञ्चतपा आसारं वृष्टिं सहत इति आसारषाट् । शिशिरे हिमर्तौ । स्थण्डिले गोमयलेपादियुतशुद्धभूम्याम् । शेत इति शेषः । रात्राविति शेषः ॥ ६,७ ॥

**तेन क्रमानुसिद्धेन ध्वस्तकर्मामलाशयः ।**
**प्राणायामैः सन्निरुद्धषड्वर्गच्छिन्नबन्धनः ॥ ८ ॥**

**प्रकाशिका** – तेन तपसा क्रमानुसिद्धेन क्रमात्प्राप्तेन ध्वस्तानि कर्माणि पापरूपाणि यस्य स तथा । अत एव मलाशयः संनिरुद्धः सम्यग्विनाशितः कामादिषड्वर्गो यस्य । छिन्नबन्धनोऽहंकारममकारादिरूपो यस्य ॥ ८ ॥

**सनत्कुमारो भगवान् यदाहाध्यात्मिकं परम् ।**
**योगं तेनैव पुरुषमभजत् पुरुषर्षभः ॥ ९ ॥**

**प्रकाशिका** – आध्यात्मिकं भगवद्विषयकं योगमुपासनारूपम् ॥ ९ ॥

**भगवद्धर्मिणः साधो श्रद्धया यततः सदा ।**
**भक्तिर्भगवति ब्रह्मण्यनन्यविषयाऽभवत् ॥ १० ॥**

**प्रकाशिका** – अनन्यविषया भगवदेकविषया ॥ १० ॥

**तस्यानया भगवतः परिशुद्धकर्मसत्वात्मनस्तदनु संस्मरणानुपूर्व्या ।**
**ज्ञानं विरक्तिमदभून्निशितेन येन चिच्छेद संशयपदं निजजीवकोशम् ॥ ११ ॥**

**तात्पर्यम् – 'आविर्भावतिरोभावौ ज्ञानस्य ज्ञानिनोऽपि तु । अपेक्ष्याज्ञस्तथा ज्ञानमुत्पन्नमि'ति चोच्यत इति तन्त्रसारे ॥ ११ ॥**

**प्रकाशिका** – भक्तेः फलमाह ॥ तस्येति । अत्र पृथोः कर्मदेवस्यापरोक्षज्ञानित्वादिदानीं ज्ञानमभूदिति कथमुच्यत इत्याशङ्कां प्रमाणेनैव परिहरति ॥ आविर्भावेति । तुशब्दोऽवधारणे ।

ज्ञानिनोऽपरोक्षज्ञानवतोऽपि ज्ञानस्यापरोक्षज्ञानस्याविर्भावमपेक्ष्यैव ज्ञानमुत्पन्नमिति पुराणादावुच्यते । न तु तदैवोत्पत्तिमपेक्ष्य । तथा ज्ञानस्य तिरोभावमपेक्ष्यैवायमज्ञ इत्युच्यते । न तु ज्ञानानुत्पत्तिमपेक्ष्येत्यर्थः ॥ ततश्चायमर्थः ॥ परिशुद्धकर्मा सत्त्वगुणयुक्त आत्मा मनो यस्य तस्य पृथोरनया भागवतोक्त्या । कीदृश्या । तस्य भगवतोऽनुस्मरणं योग्यतानुसारिनिरंतरध्यानं तस्यानुपुर्वी क्रमो यस्याः सा तथा । योग्यतानुसारिनिरंतरध्यानाभिवृद्धिक्रमेण वर्धमानयेति यावत् । विरक्तिमद्भिरक्त्यादिवृद्धिमत् । ज्ञानमपरोक्षमभूदाविर्भूतम् । कथंभूतं ज्ञानम् । तया भक्त्या निशितेन येन ज्ञानेन संशयपदमसंभावनाविपरीतभावनाऽवस्थानं निजत्वेनाभिमतं जीवकोशं जडान्तःकरणं लिंगशरीरं वा चिच्छेदाच्छिनत् ॥ ११ ॥

**छिन्नान्यधीरधिगतात्मगतिर्निरीहस्तत् तत्यजेऽच्छिनदिदं वयुनेन येन ।**
**तावन्न योगगतिभिर्यतिरप्रयत्नो यावद् गदाग्रजकथासु रतिं न कुर्यात् ॥ १२ ॥**

**तात्पर्यम् – 'अपरोक्षतया वृत्तिज्ञानभेदनिरीक्षणम् । स्वरूपज्ञानसंस्थित्या ज्ञानत्याग उदीर्यते। स्वरूपज्ञानतः सम्यग्रतिर्विष्णुकथासु चे'ति ब्रह्मतर्के ॥ १२ ॥**

**प्रकाशिका –** एवमाविर्भूतज्ञानस्य पृथोः स्थितिमाह ॥ छिन्नेति । अत्र येन वयुनेनेदमच्छिनत्तत्तत्याजेति ज्ञानत्याग उच्यते । न चासौ संभवति । पृथोर्यावज्जीवं परमात्मज्ञानित्वस्याधिगतिरिति ज्ञानस्य तत्साध्याया विष्णुकथारतेश्च मूलेऽभिधानाच्चेत्यतोऽस्याभिप्रायं प्रमाणेनाह ॥ अपरोक्षतयेति । वृत्तिज्ञाने परोक्षतया भेदनिरीक्षणं बाह्यमनोवृत्तिरूपमिदं नश्वरमतः स्वरूपज्ञानाद्भिन्नमित्यपरोक्षेण ज्ञानत्याग उदीर्यत इति संबन्धः । अस्य स्पष्टतया वृत्तिज्ञाने स्वरूपज्ञानभेदं निरीक्षणस्येदानीमपि सत्वादपरोक्षतयेत्युक्तम् । स्पष्टतयेत्यर्थः। यद्वा । अपरोक्षतया विशिष्टे ये वृत्तिज्ञाने स्वरूपज्ञाने तयोर्भेदनिरीक्षणमित्यर्थः । अत्र हेतुकथनाय मूलेऽधिगतात्मगतिरित्युक्तम् । तत्तात्पर्यमाह ॥ स्वरूपज्ञानसंस्थित्येति । प्राचुर्येण स्वरूपज्ञानस्यैव तदा परापरतत्त्वविषयकतयाऽवस्थानेनेत्यर्थः । तृतीयाप्रयोगेन हेतुगर्भं तद्विशेषणमिति सूचयति । एवं चाधिगताऽऽविर्भूता आत्मगतिः परमात्मज्ञानं स्वरूपज्ञानं च यस्येति मूलार्थ इति भावः । अथवा । तस्यां दशायां वृत्तिज्ञानपरित्याग एव त्यागशब्दार्थ इत्यभिप्रेत्य द्वितीयार्धतात्पर्यमाह ॥ स्वरूपज्ञानत इति । कथास्विति बहुवचनमाद्यर्थे । प्राचुर्येण विष्णुकथादिरूपव्यापारेषु रतिः स्वरूपज्ञाने सत्येव सम्यग्भवति । अतः सा च त्यागे वृत्तिज्ञानपरित्यागे निमित्ततयोच्यत इत्यन्वयः । अनेन द्वितीयार्धे कथास्वित्यनन्तरं स्वरूपज्ञानं तत्सम्यगिति पदद्वयमध्याहार्यमिति सूचयति तथा च सर्वथा ज्ञानत्यागस्य मूलेऽविवक्षितत्त्वान्नोक्त

शंकावकाशः ॥ ततश्चायं श्लोकार्थः ॥ छिन्ना निःशेषतया विनाशिताऽन्यधीः संशयादिरूपं ज्ञानं यस्य स तथा । अत एव निरीहो व्यर्थचेष्टारहितोऽधिगताऽऽविर्भूताऽऽत्मगतिः परमात्मज्ञानं स्वरूपज्ञानं च येन स तथा । एतादृशो यतोऽतो येन वयुनेनापरोक्षवृत्तिज्ञानेनेदं बाह्यान्तःकरणमच्छिनत्तद्वृत्तिज्ञानं तत्यजे । स्वरूपज्ञानाद्भिन्नमिदं नश्वरं हेयमिति स्पष्टतया निरीक्षितवानित्यर्थः । यद्वा । तत्यजे प्रायेण त्यक्तवान् । कुतः । तस्यां दशायां स्वरूपज्ञानत एवास्य श्रवणादिरतिप्रमितत्वादित्याह ॥ तावन्न योगेति । यतिरिन्द्रियसंयमनादिप्रयत्नवान् अधिकारीति यावत् । गदाग्रजकथासु विष्णुकथाश्रवणादिरूपव्यापारेषु स्वरूपज्ञानत एव सम्यग्रतिमपरोक्षज्ञानोत्तरकालीनां न कुर्यात्तावत्पर्यन्तमेव योगगतिभिर्यमादिमार्गैरप्रयत्नो बाह्य-मनोव्यापारशून्यो न स्यात् । अपरोक्षज्ञानानन्तरं स्वरूपज्ञानत एव सम्यक् कथादिरत्युपादे-यत्वप्रयत्नो भवति । अतस्तस्यां दशायां तत्यज इत्युक्तमित्याशयः । तावत्तु योगगतिभिरिति पाठे न कुर्यादित्यत्र विद्यमानस्य नञोऽप्रयत्न इत्यनेनान्वयः । तथा च यावद्यदा गदा-ग्रजकथासु स्वरूपज्ञानतः सम्यग्रतिं कुर्यात् तावत्तदैवाप्रयत्नेन स्यादतो युक्तमिति योज्यम् ॥ १२ ॥

**एवं स वीरप्रवरः संयोज्यात्मानमात्मनि ।**
**ब्रह्मभूतो दृढं काले तत्याज स्वकलेवरम् ॥ १३ ॥**

**तात्पर्यम् – ब्रह्मणि भूतः ॥ १३ ॥**

**प्रकाशिका –** आत्मानं मन आत्मनि परमात्मनि दृढं संयोज्य काले तद्देहारंभक-प्रारब्धकर्मावसानसमये । अत्र ब्रह्मभूतस्येत्यस्य ब्रह्माभिन्न इति प्रतीतिवारणायार्थमाह ॥ ब्रह्मणि भूतःस्थित इति । तथा च ब्रह्माश्रितत्वानुसंधानवानित्यर्थः ॥ १३ ॥

**सम्पीड्य पायुं पार्ष्णिभ्यां वायुमुत्सर्पयञ्छनैः ।**
**नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरःकण्ठशीर्षणि ॥ १४ ॥**

**प्रकाशिका –** पायुं गुदम् । संपीड्येति वज्रासनं सूचयति । एवं च वज्रासनस्थितो मूलाधाराद्वायुमुदानमुत्सर्पयन् ऊर्ध्वं नयन्नाभ्यामवस्थाप्य । हृदुरःकण्ठशीर्षाणीत्येवं रूपेषु कोष्ठेषु स्थानेष्ववस्थाप्य । अत्र शीर्षशब्देन भ्रूमण्डलं ग्राह्यम् ॥ १४ ॥

**उत्सर्पयन्नसुं मूर्ध्नि क्रमेणावेश्य निस्स्पृहः ।**
**वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत् ॥ १५ ॥**

**प्रकाशिका** – तं भ्रूमध्यस्थितं वायुम् । असूनिति पाठे बहुवचनं जात्यभिप्रायम् । मूर्ध्नि ब्रह्मरंध्रे आवेश्य कलेवरं तत्याजेत्यन्वयः । निस्पृहः स्थिरचित्तः । देहस्थितानां पञ्चभूतानां बाह्यभूतेषु लयो येन तदा चिन्तित इत्याह ॥ वायुमिति । देहस्थं वायुं वायौ क्षितौ बहिः स्थितायां पृथिव्यां कायं कायस्थं पृथिवीभागं तेजो देहस्थं बाह्यतेजस्ययूयुजदेकीकृतवान् । विलापितवानिति यावत् ॥ १५ ॥

**खान्याकाशे द्रवं तोये यथास्थानं विभागशः ।**
**क्षितिमम्भसि तत् तेजस्यदो वायौ नभस्यमुम् ॥ १६ ॥**

**तात्पर्यम् – 'अस्येदं कारणमिति ज्ञानमेव विलापनम् । समाधिकाले विज्ञेयं देहादेर्दर्शनात्पुनरि'ति च ॥ १६ ॥**

**प्रकाशिका** – खानि देहस्थानि छिद्राणि बाह्यभूताकाशे द्रवं देहस्थं द्रवांशं बाह्यतोयेऽयूयुजत् । कुत एवं विलापनमित्यत उक्तम् ॥ यथा स्थानमिति । स्थानशब्दः कारणपरः । कारणमनतिक्रम्येत्यर्थः । तथा च बाह्यभूतानां आध्यात्मिककारणत्वात् कार्याणां कारणेषु विलापनं युक्तमेवेत्याशयः । ननु देहरूपैककार्यात्मना परिणतानां पंचभूतानां कथं विलापनमित्यत उक्तम् ॥ विभागश इति । बुद्ध्या विभागेनेत्यर्थः । नन्वत्र देहत्यागतः पूर्वकालीनं समाधिरूपं चिन्तनमुच्यते । न च तदा देहगतभूतानां विलापनमस्ति देहस्य तदाऽपि दर्शनादित्याशङ्कां प्रमाणेनैव परिहरति ॥ अस्येदमिति । इतिशब्दानन्तरमत इदं तत्र प्रलयमेष्यतीति शेषः । ज्ञानमेव ध्यानमेवेत्यर्थः । न तु तदा विलय इत्येवार्थः । कुत इत्यत आह ॥ देहादेरिति । आदिशब्देन भूतानां ग्रहणम् । पुनः समाध्यनन्तरम् । मूलेऽयुयुजदित्यनेनोक्तं न विलापनं किन्तु ज्ञानमेवातो न कोऽपि दोष इत्याशयः । इदानीं बाह्यानां पञ्चभूतादितत्त्वानां स्वस्वकारणेषु लयध्यानमपि तदा तेन कृतमित्याह ॥ क्षितिमंभसीत्यादिना । अमुं वायुम् ॥१६॥

**इन्द्रियाणि समस्तानि तन्मात्राणि यथोद्भवम् ।**
**भूतादिस्तान् समुत्क्षिप्य महत्यात्मनि सन्दधे ॥ १७ ॥**

**प्रकाशिका** – समस्तानीन्द्रियाणि शब्दादीनि तन्मात्राणि यथोद्भवं यथोत्पत्तिः । स्वस्वकारणेष्वयूयुजल्लयमेष्यन्तीति ध्यातवान् । अयं भावः । इन्द्रियाणि तैजसाहंकारे तदभिमानि देवतादेहान्मनश्च वैकारिकाहंकारे पृथिव्यादयो गन्धादिभिः सह भूतादौ तामसाहंकारेऽयूयुजत् । क्षित्यादिशब्दैस्तदभिमानिनो देवा अपि विवक्षिताः । तेषामपि स्वजनकदेहप्रवेशेन

देहलयाद्भूतादिस्तामसाहङ्कारः । उपलक्षणमेतत् । त्रिविधोऽप्यहंकारस्तदभिमानिगरुडरुद्रशेषाश्च तानिन्द्रियादीन् भूतादौ समुत्क्षिप्य स्वस्मिन्विनाश्य तं भूतादिं महत्यात्मनि महत्तत्त्वाभिमानि-विरिंचे संदधे । सरस्वतीद्वारा स्थापितवान् । पृथुर्ध्यातवानिति योज्यम् ॥ १७ ॥

**तं सर्वगुणविन्यासं जीवे मायामये न्यधात् ।**
**तं चानुशयमात्मस्थमसावनुशयी पुमान् ।**
**ज्ञानवैराग्यवीर्येण स्वरूपस्थो व्यधात् प्रभुः ॥ १८ ॥**

**तात्पर्यम् – 'मायेति प्रकृतिश्चेति मायाजीवश्च कथ्यते । शेतेऽनुकेशवं यस्मात्तस्मादनु-शयोऽपि च । एतैस्तु नामभिर्वाच्या श्रीर्विष्णोरनपायिनी । तयैवानुशयी जीवस्तया बद्धो यतः सदा । पुरुषः शयनात्पूर्षु तथाऽहानादहं स्मृतः । अप्राकृततनुत्वात्तु स्वरूपं हरिरुच्यते । नित्यचिद्दर्शनान्नित्यं ब्रह्म पूर्णत्वतः सदे'ति भागवततन्त्रे ॥ १८ ॥**

**प्रकाशिका** – तं महत्तत्त्वाभिमानिनं विरिंचं मायामये जीवे व्यधात् । अत्र मायाजीवानु-शयानुशयीस्वरूपशब्दान्योग्यतालाभाय प्रमाणेनैव व्याख्याति ॥ मायेतीति । मायादि-नामभिर्मायावाच्येत्यत्र निमित्तमाह ॥ मायेति । जीवश्चेत्यनन्तरं अपीति शब्दो योज्यः । तथा च माया जडप्रकृतिर्मायेत्यादिशब्दैः कथ्यत इत्यर्थः । न केवलं मायादिनामभिर्माया वाच्या किन्तु श्रीरपि वाच्येत्याह ॥ एतैरिति । तुशब्दोऽप्यर्थः । श्रीरपीति संबन्धः । अनेन मूले मायाजीवशब्दावुक्तार्थाविति ज्ञेयम् । तत्रोपलक्षणतया मायाशब्दनिर्वचनं दर्शयति ॥ विष्णोरनपायिनीति ॥ विष्णोरिति योग्यतया लाभः । माशब्दो निषेधार्थः । तथाच विष्णोर्माऽ-विद्यमानमयमपगमनं यस्या इति निर्वचनं दर्शितमिति ज्ञातव्यम् । तथा श्रियमनुशेत इति व्युत्पत्त्यैवेत्यर्थः । सदेतीनिप्रत्ययार्थः । सदाऽनादिकालमारभ्य तया श्रिया बद्ध इत्यनेनात्रानु-शयनं बन्धनमेव विवक्षितमिति दर्शयति । नन्वेवं लयचिन्तके क्वचित्पुरुषशब्दोऽन्यत्राहंशब्दश्च प्रयुक्तोऽतः कथमत्रानुशयीति शब्देन जीवो व्याख्यात इत्यतस्तत्रापि पुरुषाहंशब्दाभ्यां जीव एव व्याख्येयोऽतो न विरोध इत्याशयेनाह ॥ पुरुष इति । अहानादहेयत्वादहम् । तथा च नञ्पूर्वस्योहाक् त्याग इत्यस्येदं रूपमिति सूचयति । स्वरूपस्थ इत्यत्र स्वरूपशब्दविवक्षितमर्थं दर्शयति ॥ अप्राकृतेति । तुशब्दोऽवधारणे । अनेन स्वं स्वात्मभूतं रूपं शरीरं यस्येति विग्रहं सूचयति । प्रसंगादस्मिन्नेव ग्रन्थे क्वचित्प्रयुक्तयोर्नित्यब्रह्मशब्दयोरर्थं प्रमाणेनैव दर्शयति ॥ नित्यचिदिति । 'नि त् य' मिति वर्णत्रयलब्धार्थप्रदर्शनमिदम् । तत्र नित्यस्यार्थो नित्येति । त् विस्तृतया स्पष्टतया याति जानाति इति निर्वचनलब्धार्थप्रदर्शनाय दर्शनादित्युक्तम् । नित्यदर्शनं तु चिद्रूपमेवेति दर्शयितुं चिदित्युक्तम् । पूर्णत्वत इत्यनेन बृहतेर्मनुप्रत्यययोगागमश्चेति दर्शयति ॥

ततश्चायं श्लोकार्थः ॥ सर्वगुणविन्यासमुक्तरीत्याऽहङ्कारादिसर्वकार्यनिधानं स्थानं तं विरिञ्चं मायामये मायामयात्मके विष्णोरनपायित्वेन मायाशब्दवाच्ये जीवे जीवशब्दवाच्ये श्रीतत्त्वे न्यधात्तदधीनतयाऽचिन्तयत् । तं च जीवशब्दवाच्यमप्यनुशयं केशवमनुशेत इति व्युत्पत्त्याऽनुशय शब्दवाच्यं श्रीतत्त्वमात्मस्थमादानान्मातृत्वादात्मशब्दवाच्यहर्यधीनं व्यधाच्चिंतितवान् । कोऽसौ पुमान्पृथुः कथं भूतः । अनुशयी श्रियमनुशेत इति व्युत्पत्त्या तया सदा संबद्धः। अनेन बन्धकत्वात्तस्या उक्तरीत्या ध्यानमावश्यकमिति सूचयति । स्वरूपस्थः अप्राकृतविग्रह-भगवन्निष्ठः । अनेन तस्याप्यन्याधीनत्वं न चिन्तितवानिति सूचयति । नन्वेवंविध चिन्तन-सामर्थ्यं तस्य कुत इत्यत उक्तम् ॥ प्रभुरिति । ज्ञानविज्ञानवैराग्यवीर्येण प्रभुः समर्थ इति ॥१८॥

**अर्चिर्नाम महाराज्ञी तत्पत्न्यनुगता वनम् ।**
**सुकुमार्यतदर्हा च यत् पद्भ्यां स्पर्शनं भुवः ॥ १९ ॥**

**प्रकाशिका** – वनप्रवेशमारभ्य राज्ञ्याः स्थितिमाह ॥ अर्चिर्नमित्यादिना । अतदर्हा तदपि नार्हति । तत्किं यत्पद्भ्यां भुवः स्पर्शनम् ॥ १९ ॥

**अतीव भर्तुर्व्रतधर्मनिष्ठया शुश्रूषया चार्षदेहयात्रया ।**
**नाविन्दतार्तिं व्रतकर्शिताऽपि सा प्रेयस्करस्पर्शनमाननिर्वृता ॥ २० ॥**

**प्रकाशिका** – भर्तुर्व्रतं स्थंडिलशयनादिरूपं तदेव स्वस्यापि धर्मस्तत्र निष्ठया । ऋषीणामिय-मार्षा देहयात्रा कंदमूलफलाशनादिलक्षणा तया । एवंविधानुष्ठानेन व्रतकर्शिताऽपि आर्तिं दुःखं नाविंदत । तत्र हेतुः प्रेयसः पत्युः करस्पर्शनलक्षणेन मानेन लालनेन निर्वृता आनन्दप्लुता यतः ॥ २० ॥

**देहं विपन्नाखिलचेतनादिकं पत्युः पृथिव्या दयितस्य चात्मनः ।**
**आलक्ष्य किञ्चिच्च विलप्य सा सती चितामथारोपयदद्रिसानुनि ॥ २१ ॥**

**प्रकाशिका** – पृथिव्या आत्मनः स्वस्याश्च दयितस्य प्रियस्य पत्युर्देहं विपन्नं विनष्टमखिल-चेतनादिकं चेतनेन्द्रियप्राणादिकं यस्मिंस्तमालक्ष्य सम्यग्ज्ञात्वा चितां शवदहनसाधनकाष्ठ-मारोपयत् ॥ २१ ॥

**विधाय कृत्यं ह्रदिनीजलाप्लुता दत्त्वोदकं भर्तुरुदारकर्मणः ।**
**नत्वा दिविस्थांस्त्रिदशांस्त्रिः परीत्य विवेश वह्निं ध्यायती भर्तृपादम् ॥ २२ ॥**

**प्रकाशिका –** कृत्यं कालोचितम् । ह्रदिन्या नद्या जले आप्लुता स्नाता परीत्य प्रदक्षिणीकृत्य ॥ २२ ॥

**विलोक्यानुगतां साध्वीं पृथुं वीरवरं पतिम् ।**
**तुष्टुवुर्वरदा देवैर्देवपत्न्यः सहस्रशः ॥ २३ ॥**

**प्रकाशिका –** देवैः सहिता देवपत्न्यः ॥ २३ ॥

**कुर्वन्त्यः कुसुमासारं तस्मिन् मन्दरसानुनि ।**
**नदत्स्वमरतूर्येषु गृणन्ति स्म परस्परम् ॥ २४ ॥**

**प्रकाशिका –** कुसुमासारं पुष्पवृष्टिम् । गृणन्ति स्माभाषन्त ॥ २४ ॥

**देव्य ऊचुः –**

**अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम् ।**
**सर्वात्मना पतिं भेजे यज्ञेशं श्रीवधूरिव ॥ २५ ॥**

**तात्पर्यम् – 'अनपेक्षो गुणैः पूर्णो धन्य इत्युच्यते बुधैरि'ति शब्दनिर्णये ॥ २५ ॥**

**प्रकाशिका –** अहो इयं वधूर्धन्या इत्यत्राप्रतीत्या धन्यशब्दार्थं प्रमाणेनैवाह ॥ अनपेक्ष इति । फलानपेक्षः । गुणैर्ज्ञानभक्त्यादिभिर्योग्यतानुसारेण पूर्णः । तथा च धन्या फलानपेक्षा स्वयोग्यपूर्णा चेति मूलं व्याख्येयमिति भावः ॥ २५ ॥

**सैषा नूनं व्रजत्यूर्ध्वमनुवैन्यं पतिं सती ।**
**पश्यतोऽस्मानतीत्यार्चिर्दुर्विभाव्येन कर्मणा ॥ २६ ॥**

**प्रकाशिका –** दुर्विभावेनान्यैः कर्तुमशक्येन ॥ २६ ॥

**तेषां दुरापं किन्त्वन्यन्मर्त्यानां भगवत्पदम् ।**
**विद्युल्लोलायुषो ये वै नैष्कर्म्यं साधयन्त्युत ॥ २७ ॥**

**प्रकाशिका –** विद्युद्वल्लोलानि चञ्चलान्यायूंषि येषां ते तथा । एवंभूता ये मर्त्या विधिबन्धनरहित्वान्नैष्कर्म्यशब्दवाच्यं भगवत्पदमुत्तममोक्षमपि साधयन्ति तेषां मर्त्यानामन्यन्मोक्षादन्यत्पुरुषार्थभूतं दुरापं प्राप्तुमशक्यं किं न किमपि । मोक्षसाधनज्ञानेनैव सर्वेऽपि पुरुषार्थास्तेषां भवन्तीत्याशयः ॥ २७ ॥

**स वञ्चितो बतात्मध्रुक् कृच्छ्रेण महता भुवि ।**
**लब्ध्वाऽऽपवर्ग्यं मानुष्यं विषयेषु विषज्जते ॥ २८ ॥**

**प्रकाशिका** – मोक्षमार्गविमुखं निन्दन्ति ॥ स वंचित इति । देवैरिति शेषः । आत्मध्रुक् स्वात्महा । आपवर्ग्यं मोक्षसाधनज्ञानकारणं ज्ञानसाधनं विषयेषु विषज्जते यः ॥ २८ ॥

**मैत्रेय उवाच–**

**स्तुवन्तीष्वमरस्त्रीषु पतिलोकं गता वधूः ।**
**यं वा आत्मविदां धुर्यो वैन्यः प्रापाच्युताशयः ॥ २९ ॥**

**प्रकाशिका** – पतिलोकमेव स्पष्टयति ॥ यं वा इति ॥ २९ ॥

**इत्थंभूतानुभावोऽसौ पृथुः स भगवत्तमः ।**
**कीर्तितं तस्य चरितमुद्दामचरितस्य ते ॥ ३० ॥**

**प्रकाशिका** – उपसंहरति ॥ इत्थमिति । अनुभावः प्रभावः । अतिशयेन भगवानैश्वर्यादि-गुणवान् भगवत्तमः । उद्दामचरितस्योत्कृष्टकर्मणः ॥ ३० ॥

**य इदं सुमहत्पुण्यं श्रद्धयाऽवहितः पठेत् ।**
**श्रावयेत् श्रुणुयाद् वाऽपि स पृथोः पदवीमियात् ॥ ३१ ॥**
**ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः ।**
**वैश्यः पठन् विश्पतिः स्याच्छूद्र उत्तमतामियात् ॥ ३२ ॥**
**त्रिःकृत्व इदमाकर्ण्य नरो नार्यथवाऽऽदृतः ।**
**अप्रजः सुप्रजतमो निर्धनो धनवत्तमः ॥ ३३ ॥**
**इदं स्वस्त्ययनं पुंसाममङ्गल्यनिवारणम् ।**
**धन्यं यशस्यमायुष्यं स्वर्ग्यं कलिमलापहम् ॥ ३४ ॥**
**धर्मार्थकाममोक्षाणां सम्यक् सिद्धिमभीप्सुभिः ।**
**श्रद्धयैतदनुश्राव्यं चतुर्णां कारणं परम् ॥ ३५ ॥**

**प्रकाशिका** – विशां वैश्यानां पतिर्नाथः ॥ चतुर्णां पुरुषार्थानां परमुत्कृष्टम् ॥ ३२-३५ ॥

**सङ्ग्रामाभिमुखो राजा श्रुत्वैतदनुयाति यान् ।**
**बलिं तस्मै हरन्त्यग्रे राजानः पृथवे यथा ॥ ३६ ॥**

**मुक्तान्यसङ्गो भगवत्यचलां भक्तिमुद्वहन् ।**
**वैन्यस्य चरितं पुण्यं शृणुयाच्छ्रावयेत् पठेत् ॥ ३७ ॥**

**प्रकाशिका** – उक्तफलं विरक्तस्य भगवद्भक्तस्यैवेत्याह ॥ मुक्तान्येति ॥ ३७ ॥

**वैचित्रवीर्याभिहितं महन्माहात्म्यसूचकम् ।**
**अस्मिन् कृतमतिर्मर्त्यः पार्थवीं गतिमाप्नुयात् ॥ ३८ ॥**

**प्रकाशिका** – भो वैचित्र्यवीर्य विदुर । महतो भगवतो माहात्म्यसूचकम् । पार्थवीं पृथोर्विद्यमानाम् ॥ ३८ ॥

**अनुदिनमिदमादरेण शृण्वन् पृथुचरितं प्रथयन् विमुक्तसङ्गः ।**
**भगवति भवसिन्धुपारभूते स च निपुणां लभते रतिं मनुष्यः ॥ ३९ ॥**

**प्रकाशिका** – प्रथयन्सत्सभासु कीर्तयन् । भवसिंधोः संसारसमुद्रस्य । निपुणां हरिप्रसाद-जननसमर्थाम् ॥ ३९ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

## अथ चतुर्विंशोऽध्यायः ।

**मैत्रेय उवाच–**

**विजिताश्वोऽथ राजाऽऽसीत् पृथुपुत्रः पृथुश्रवाः ।**
**यवीयेभ्योऽददत् काष्ठा भ्रातृभ्यो भ्रातृवत्सलः ॥ १ ॥**

**प्रकाशिका –** ॥ हरिः ॐ ॥ इदानीं प्रचेतसां जनिं वक्तुं पृथुवंशपरंपारामाह ॥ विजिताश्व इत्यादिना । यवीयेभ्यः कनिष्ठेभ्यः । काष्ठा दिशः ॥ १ ॥

**हर्यक्षायादिशत् प्राचीं धूम्रकेशाय दक्षिणाम् ।**
**प्रतीचीं वृकसंज्ञाय तुर्यां द्रविणसे विभुः ॥ २ ॥**

**प्रकाशिका –** तुर्यां चतुर्थीमुत्तराम् ॥ २ ॥

**अन्तर्धानगतिं शक्राल्लब्ध्वाऽन्तर्धानसंज्ञितः ।**
**अपत्यत्रयमाधत्त शिखण्डिन्यां सुमंमतः ॥ ३ ॥**

**प्रकाशिका –** अन्तर्धानगतिमदृश्यत्वसंपादकविद्यां शक्राल्लब्ध्वा । पृथोरश्वमेधाश्वविजयावसरे । नाम्ना शिखण्डिन्यां भार्यायाम् ॥ ३ ॥

**पावकः पवमानश्च शुचिरित्यग्नयः पुरा ।**
**वसिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः ॥ ४ ॥**

**प्रकाशिका –** अपत्यत्रयमेवाह ॥ पावक इति । पुरा पूर्वजन्मन्यग्नीनां मनुष्ययोनावुत्पत्तौ निमित्तमाह ॥ वसिष्ठ इति । योगगतिमग्नित्वम् ॥ ४ ॥

**अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत ।**
**य इन्द्रमश्वहर्तारं विद्वानपि न जघ्निवान् ॥ ५ ॥**

**प्रकाशिका –** अन्तर्धानो विजिताश्वः पृथुपुत्रो नभस्वत्याम् । अन्यस्यां भार्यायाम् । यः अन्तर्धानः स चान्तर्धानः ॥ ५ ॥

**राज्ञां वृत्तिकरादानं दण्डशुल्कादि दारुणम् ।**
**मन्यमानो दीर्घसत्रव्याजेन विससर्ज ह ॥ ६ ॥**

**प्रकाशिका** – राज्ञां वृत्तिं करदानादिभिर्दारुणां परपीडात्मिकां मन्यमानः । दीर्घसत्रः संन्यासः । तद्व्याजेन तत्स्वीकारेण विससर्ज ॥ ६ ॥

**तत्रापि हंसं पुरुषं परमात्मानमात्मदृक् ।**
**यजंस्तल्लोकतामाप परमेण समाधिना ॥ ७ ॥**

**हविर्धानाद्धविर्धानी विदुरासूत षट् सुतान् ।**
**बर्हिष्मन्तं गयं शुक्लं कृष्णं सत्यं जितव्रतम् ॥ ८ ॥**

**प्रकाशिका** – तत्रापि तस्मिन्नप्याश्रमे हंसं निर्मलम् । परमेण स्वयोग्येन ॥ ७,८ ॥

**बर्हिष्मत् तु महाभागो हाविर्धानिः प्रजापतिः ।**
**क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ॥ ९ ॥**

**प्रकाशिका** – हाविर्धानी हविर्धानपुत्रः । योगेषु हरिध्यानादिरूपेषु ॥ ९ ॥

**यस्येदं देवयजनमनुयज्ञं वितन्वतः ।**
**प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम् ॥ १० ॥**

**प्रकाशिका** – निष्णातत्वं आह ॥ यस्येति । देवयजनं यज्ञवाटम् । अनुयज्ञं प्रति यज्ञं वितन्वतः सतः प्राचीनाग्रैः कुशैरास्तृतमासीत् । अत एव प्राचीनबर्हिरिति नामास्येति भावः ॥ १० ॥

**सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम् ।**
**यां वीक्ष्य चारुसर्वाङ्गीं किशोरीं सुष्ठ्वलंकृताम् ॥ ११ ॥**

**प्रकाशिका** – सामुद्रीं समुद्रपुत्रीम् । देवदेवेन ब्रह्मणोक्तां नामतः शतद्रुतिम् । किशोरीं बालाम् ॥ ११ ॥

**परिक्रमन्तीमुद्वाहे चकमेऽग्निः शुकीमिव ।**
**विबुधासुरगन्धर्वमुनिसिद्धमहोरगाः ।**
**विजिताः स्युर्यया दिक्षु क्वणयन्त्यैव नूपुरैः ॥ १२ ॥**

**तात्पर्यम्** – 'राजपुत्रीं शुकीमग्निरावर्तन्तीं प्रदक्षिणम् । आदायान्तरधाद्दानसमये मन्मथातुर' इति ब्राह्मे ॥ १२ ॥

**प्रकाशिका** – अत्र शुकीमित्यस्य विवक्षितमर्थं प्रमाणेनैव दर्शयति ।। राजपुत्रीमिति । शुकीमिव यन्नाम्ना शुकीं राजपुत्रीम् । अग्निः प्रदक्षिणीकुर्वाणां स्वप्रदक्षिणीमावर्तन्तीम् । अन्यस्मै दानसमये । तथा च शुकीमित्यस्य न पक्षिविशेषार्थकत्वं किन्तु काचनराजपुत्री शुकीति नाम्नी तामिवेति मूलार्थ इति भावः । सूर्ययेति पाठे नवोढयेत्यर्थः । विजिताः अभिभूताः ।। १२ ।।

**प्राचीनबर्हिषः पुत्राः शतद्रुत्यां दशाभवन् ।**
**तुल्यनामव्रताः सर्वे वेदस्नाताः प्रचेतसः ।। १३ ।।**

**प्रकाशिका** – वेदस्नाता वेदपारगाः । धर्मस्नाता इति पाठे धर्मनिष्ठा इत्यर्थः । तुल्यनामान्याह ।। प्रचेतस इति ।। १३ ।।

**पित्राऽऽदिष्टाः प्रजासर्गे तपसेऽर्णवमाविशन् ।**
**दशवर्षसहस्राणि तपसाऽऽर्चंस्तपस्विनः ।। १४ ।।**
**यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता ।**
**तद् ध्यायन्तो जपन्तश्च पूजयन्तश्च संयताः ।। १५ ।।**

**विदुर उवाच–**

**प्रचेतसां गिरित्रेण यथाऽऽसीत् पथि सङ्गमः ।**
**यद्वाऽप्याह हरः प्रीतस्तन्नो ब्रह्मन् वदार्थवत् ।। १६ ।।**

**प्रकाशिका** – तुल्यव्रतमाह ।। पित्रेति ।। १४,१५,१६ ।।

**सङ्गमः खलु विप्रर्षे शिवेन हि शरीरिणाम् ।**
**दुर्लभो मुनयो दध्युरसङ्गाः यमभीप्सितम् ।। १७ ।।**

**प्रकाशिका** – असंगा मुनयः सतामभीप्सितं यं दध्युस्तेन शिवेन सह संगमः ।। १७ ।।

**आत्मारामोऽपि यस्त्वस्य लोककल्पस्य राधसे ।**
**शक्त्या युक्तो विचरति घोरया भगवान् भवः ।। १८ ।।**

**प्रकाशिका** – किञ्च यद्यपि यस्यात्मारामस्य । स्वस्थानान्निर्गमनमेवासंभावितम् । लोकानुग्रहाय तत्संभवेऽपि तत्संगमभाषणादिकमसंभावितम् । तस्य घोरशक्तियुक्ततयैव लोकपर्यटनादित्यत आह ।। आत्मारामोऽपीति ।। लोककल्पस्य लोकरचनाया राधसे सिद्धये

पालनाय । अथवा । लोकाय वैकुण्ठादिलोकप्राप्तये कल्पस्य समर्थस्य योग्यस्य राधसे संसिद्ध्यै घोरया वैरिनिवारणसमर्थया शक्त्या सामर्थ्येन युतो विचरति । अथ कथमेतेषां तत्संगमभाषणादिकम् । असंभावितमित्याशयः ॥ १८ ॥

**मैत्रेय उवाच–**

**प्रचेतसः पितुर्वाक्यं शिरसाऽऽधाय साधवः ।**
**दिशं प्रतीचीं प्रययुस्तपस्यादृतचेतसः ॥ १९ ॥**

**प्रकाशिका** – एवंविधस्यापि संभाषणादिकं वक्ष्यन् आदितः प्रचेतसां कथामाह ॥ प्रचेतस इति ॥ १९ ॥

**समुद्रमुप विस्तीर्णमपश्यन् सुमहत् सरः ।**
**महन्मन इव स्वच्छं प्रसन्नसलिलाशयम् ॥ २० ॥**

**प्रकाशिका** – समुद्रमुप समुद्रस्य समीपे । विस्तीर्णं दक्षिणोत्तरायतम् । महतां हरिपरायणानां मन इव स्वस्थं निर्मलम् । प्रसन्नाः सलिलाशया मत्स्यादयो यस्मिन् ॥ २० ॥

**नीलरक्तोत्पलाम्भोजकह्लारेन्दीवराकरम् ।**
**हंससारसचक्राह्वकारण्डवनिकूजितम् ॥ २१ ॥**

**प्रकाशिका** – नीलोत्पलानां रक्तोत्पलानामंभोजानां पद्मानामिन्दीवराणां पद्मविशेषाणां कल्हाराणां सौगन्धिकानामाकरमुत्पत्तिस्थानम् । मद्गुः कारंडवः प्लव इत्यभिधानम् ॥ २१ ॥

**मत्तभ्रमरसौस्वर्यहृष्टरोमलताङ्घ्रिपम् ।**
**पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम् ॥ २२ ॥**

**प्रकाशिका** – मत्तभ्रमराणां सौस्वर्येण शोभनपरंपरया हृष्टरोमाणो हृष्टत्वचो लतांघ्रिपा यस्मिन् । दिक्षु पद्मकोशरजो विक्षिपतः । प्रसारयतः । पवनस्योत्सवः शैत्यमांद्यसौरभ्यलक्षणो यस्मिंस्तत्तथा तत् ॥ २२ ॥

**तत्र गान्धर्वमाकर्ण्य दिव्यमार्गमनोहरम् ।**
**विसिस्मिरे राजपुत्रा मृदङ्गपणवाद्यवत् ॥ २३ ॥**

**तद्धैव सरसस्तस्मान्निष्क्रामन्तं सहानुगम् ।**
**उपगीयमानममरप्रवरं विबुधानुगैः ॥ २४ ॥**

**प्रकाशिका** – दिव्यो मार्गो येषां ते दिव्यमार्गाः देवास्तेषां मनोहरम् । दिव्यमार्गमिति पाठे दिव्या लोकविलक्षणा मार्गाः सप्तस्वरभेदा यस्मिंस्तत्तथा । तादृशं गन्धर्वगानम् । पुनः कथं भूतम्। मृदंगपणवादिवाद्यमनुसृत्य वर्तमानमाकर्ण्य विसिस्मिरेर्विस्मयं प्राप्ताः ॥ २३,२४ ॥

**तप्तहेमनिकर्षाभं शितिकण्ठं त्रिलोचनम् ।**
**प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥ २५ ॥**
**स तान् प्रपन्नार्तिहरो भगवान् धर्मवत्सलः ।**
**धर्मज्ञान् शीलसम्पन्नान् प्रीतान् प्रीत उवाच ह ॥ २६ ॥**

**प्रकाशिका** – तप्तहेमनिकर्षस्तप्तसुवर्णकषणपाषाणस्तद्वन्निर्मलं शितिर्नीलकण्ठो यस्य ॥ २५,२६ ॥

**रुद्र उवाच** –

**यूयं बर्हिषदः पुत्रा विदितं वश्चिकीर्षितम् ।**
**अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम् ॥ २७ ॥**

**प्रकाशिका** – वो युष्माकमनुग्रहाय मे । भद्रं दर्शनं कृतमित्यनेन दुष्टान्प्रत्येव घोरशक्तियुक्तश्चरति न धर्मशीलान्प्रतीत्युक्तपरिहारो भवति ॥ २७ ॥

**यः परस्तमसः साक्षात् त्रिगुणाज्जीवसंज्ञितात् ।**
**भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥ २८ ॥**

**प्रकाशिका** – विष्णुभक्तेष्वस्मासु कथं त्वदनुग्रह इत्यत आह ॥ य इति । तमसो लक्ष्मीतत्त्वात्त्रिगुणात्त्रिगुणाभिमानिनो जीवसंज्ञितात् एतैस्तु नामभिर्वाच्या श्रीरित्युदाहृतप्रमाणेन जीवशब्दवाच्यात्परं भगवन्तं वासुदेवं शरणं प्रपन्नः स मे प्रियो हि यस्मात्तस्माद्भवन्तो मदनुग्रहयोग्या इत्यर्थः ॥ २८ ॥

**स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति ततः परं हि माम् ।**
**अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाऽहं विविधैः कलात्यये ॥ २९ ॥**

**तात्पर्यम् – मां श्रियम् । 'ऋजवो नाम ये देवा योग्या ब्रह्मपदस्य तु । त एव शतजन्मानि विशेषोपासका हरेः । प्राप्य ब्रह्मपदं पश्चाच्छ्रियं प्राप्यानुमोदिताः । तया ततो हरिं यान्ति वसन्ति हरिसन्निधौ । अनादिकालभक्ताश्च ज्ञानिनस्ते न संशयः । विशिष्टा ज्ञानभक्त्यादौ सर्वजीवनिकायतः । सर्वदापि विशेषेण शतजन्मप्रयत्नतः । स्वपदप्राप्तिरुद्दिष्टा ततो मुक्तिरवाप्यते । तथैव चत्वारिंशद्भिः पदं शैवं च जन्मभिः । विंशद्भिरैन्द्रं दशभिरन्येषामप्युदीरितमि'ति षाड्गुण्ये ॥ २९ ॥**

**प्रकाशिका** – ननु तव भगवद्भक्तत्वे इदं स्यात्तदेव कथमित्याशङ्कायां दृष्टान्तेन स्वस्य भगवद्भक्तत्वमनादित एव सिद्धमस्तीत्याह ॥ स्वधर्मनिष्ठ इति । अत्र मामित्यस्यास्मच्छब्दरूपत्वे प्रमाणविरोधमालोच्याभिप्रेतार्थमाह ॥ मां श्रियमिति । तथा च माशब्दो स्त्रीवाचकः । इन्दिरा लोकमातामेत्यभिधानात् । एवं मामित्येकस्य पदस्यार्थमुक्त्वा समग्रश्लोकतात्पर्यं प्रमाणेनैवाह ॥ ऋजवोनामेति । अनेन स्वधर्मनिष्ठ इत्यादिकमृजुजीपरम् । एकवचनं समुदायापेक्षमिति दर्शयति । तुशब्देन ब्रह्मपदस्येतरपदापेक्षयाऽतिशयं सूचयति । शतजन्मानि शतसंख्याकब्रह्मकल्पान् । कालाध्वनोरत्यंतसंयोगे द्वितीया । अनेन शतजन्मभिरित्येतदुक्तार्थम् । हरेर्विशेषोपासका यस्याः सकाशाज्जिज्ञासुत्वापेक्षयाऽपरोक्षज्ञानानन्तरं विशेषेणोपासका इत्यर्थः । अनेन स्वधर्मनिष्ठ इत्येतदुक्ततात्पर्यम् । ब्रह्मपदं प्राप्येत्यनेन विरिञ्चतामेतीत्येतदुक्तार्थम् । ततः परमित्यस्यार्थः ॥ पश्चाच्छ्रियं प्राप्येति । श्रीप्राप्तिश्चानुमोदनमात्रमित्याशयेनोक्तम् ॥ तयाऽनुमोदिता इति । अव्याकृतमित्यस्यार्थः ॥ ततो हरिं यान्तीति । अथ कालात्यये वैष्णवं पदमेतीत्यस्य तात्पर्यम् ॥ वसन्ति हरिसंनिधाविति । ऋजुजीवस्वरूपमेव दर्शयन्नुक्तमेव विशदयति ॥ अनादिकालेति । ज्ञानिनः सर्ववेदार्थज्ञानिनः सर्वदा विशिष्टा अपीत्यन्वयः । अपरोक्षज्ञानं यस्मिन् जन्मनि जातं तदारभ्य शतजन्मप्रयत्नत इत्युक्तम् । स्वपदप्राप्तिविवक्षायामेकोनशतजन्मप्रयत्नत इति व्याख्येयम्। मूले यथेत्यस्य स्वधर्मनिष्ठ इत्यादिना संबन्धः । अहमित्यत्र तथैवेत्यध्याहृत्य योजनीयमित्याशयेन तत्तात्पर्यमाह ॥ तथैवेति । जन्मभिर्ब्रह्मकल्पैः । अत्र पञ्चाशद्ब्रह्मणस्तथा रुद्रस्येत्यनुव्याख्यानविरोधस्तु पञ्चशतां ब्रह्मणां कालात्पूर्वमेवेति सुधायां व्याख्यातत्वान्न शङ्कनीयः । पदं प्राप्यत इति सर्वत्रानुवर्तते । अन्येषां सूर्यादीनाम् ॥ ततश्चायं श्लोकार्थः ॥ यथा पुमानृजुजीवसमुदायो भागवतोऽनादितो ज्ञानभक्त्यादिसंपन्नोऽपि विशेषेणापरोक्षज्ञानानन्तरं शतजन्मभिः शतसंख्याकब्रह्मकल्पैः स्वधर्मनिष्ठो विशेषेण हर्युपासनादिरूपस्वयोग्यधर्मनिष्ठावान् । तज्जनितभगवत्प्रसादेन विरिंचतामेति ब्रह्मपदं प्राप्नोति । ततः परं ब्रह्मपदानुभवानन्तरं मां श्रियमेति । अनुज्ञाप्राप्तुमिति शेषः । हीत्यनेनात्र प्रमाणप्रसिद्धिं दर्शयति ॥ अथ

तदनुज्ञानन्तरमव्याकृतं वासुदेवमुपैति । अत्र विरिंचताप्राप्तिरेकोनशतजन्मभिर्वासुदेव प्राप्तिरेव शतजन्मभिरिति ज्ञातव्यम् । अथ प्रलयकल्पात्यये लिङ्गशरीरभंगे सति वैष्णवं पदं श्वेतद्वीपादि-रूपमेति । तत्रैव वसतीत्यर्थः । तथाऽहं रुद्रपदयोग्यो जीवोऽनादितो भागवतोऽप्यपरोक्ष-ज्ञानानन्तरं विविधैर्हर्युपासनादिधर्मैः स्वपदं रुद्रपदं प्राप्य हरिं प्राप्तो भविष्यति । यथार्हमिति पाठे यथायोग्यं वैष्णवपदमेतीति व्याख्येयम् । तदाऽपि यथा तथा शब्दावध्याहृत्यैवोक्तरीत्या व्याख्येयम् । तथा च ऋजुजीववद्रुद्रपदयोग्यानामप्यनादितो हरिभक्त्यादिमत्त्वेन प्रमाण-सिद्धत्वाद्रुद्रपदप्राप्तिमतो मम भगवद्भक्तिरस्त्येवेत्याशयः ॥ २९ ॥

**अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।**
**न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥ ३० ॥**

**तात्पर्यम् – अथ एवमनादिभक्तोऽहं यतः अतः प्रिया यूयम् ॥ ३० ॥**

**प्रकाशिका** – अथ भागवता यूयमित्यत्राथशब्दस्य योग्यमर्थं दर्शयति ॥ अथेति । तथाचाथशब्दोऽत इत्यर्थक इत्युक्तं भवति । एवमनादिभक्त इति पूर्वश्लोकोक्तानुवादः । यत इत्यध्याहार इति ज्ञातव्यम् ॥ ततश्चायं श्लोकार्थः ॥ यत एवं च ऋजुजीववदहमनादिभक्तोऽथातो भागवता भगवद्भक्तत्वाद्यूयं मे प्रियाः स्थ । अत्राधिकदृष्टान्तमाह ॥ भगवान्यथेति । भगवतः स्वप्रियत्वं दृष्टाततयोक्तं विशदयति ॥ नम इति । मेऽनादिभक्तस्यान्येषां भागवतानां च भगवन्तं विनाऽन्यः पदार्थः प्रेयान् अतिशयेन प्रियः कर्हिचित्कदाऽपि नास्ति । अतस्तद्दृष्टान्तेन यूयमपि मत्प्रियाः स्थेत्यर्थः ॥ ३० ॥

**इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम् ।**
**निःश्रेयसकरं चापि श्रूयतां यद् वदामि वः ॥ ३१ ॥**

**मैत्रेय उवाच –**

**इत्यनुक्रोशहृदयो भगवानाह ताञ्छिवः ।**
**बद्धाञ्जलीन् राजपुत्रान् नारायणपरो वचः ॥ ३२ ॥**

**प्रकाशिका** – विविक्तमसंकीर्णं यथा भवति तथा ॥ ३१,३२ ॥

**रुद्र उवाच –**

**जितं व आत्मविद्धुर्याः स्वस्तये स्वस्तिरस्तु वः ।**
**भवतां राधसे राध्यं सर्वस्मा आत्मने नमः ॥ ३३ ॥**

**तात्पर्यम्** – **'सर्वान्तर्यामिकत्वात्तु सर्वनामा जनार्दनः । न तु सर्वस्वरूपत्वात्सर्वेशोऽसौ हरिर्यत' इति ब्रह्मतर्के ॥ ३३ ॥**

**प्रकाशिका** – आदरेण स्वोक्तश्रवणाय श्रोतॄनभिनन्दन् तेषु स्वानुग्रहं व्यंजन् कर्तव्यमाह ॥ जितमिति । हे आत्मविद्धुर्याः परमात्मज्ञानिषु श्रेष्ठाः । वो युष्माभिः सर्वं जितम् । स्वस्तये समीचीनसत्तायै । स्वरूपानन्दलाभायेति यावत् । स्वस्तिः समीचीना स्थितिर्हरिभक्त्यादि-मत्ताऽस्तु । भवतां भवद्भी राधसे सर्वमनोभीष्टसिद्धयै अराध्यं मयोच्यमानस्तोत्रपाठादिना पूजा कार्येत्यर्थः । अथ स्तोत्रमुपदिशति ॥ सर्वस्मा इत्यादिना । अत्र सर्वस्मै सर्वरूपायेति व्याख्याननिरासाय तदर्थं प्रमाणेनैवाह ॥ सर्वान्तर्यामिकत्वादिति । तुशब्दोऽवधारणे । सर्वनामा सर्वेतिशब्देन प्रतिपाद्यः । अवधारणव्यावर्त्यं दर्शयति ॥ न त्विति । नैवेत्यर्थः । यतो हरिः सर्वेशो वेदादावुदीर्यत इत्यर्थः । तथा च सर्वस्मै सर्वजगदन्तर्यामिणे आत्मने स्वामिने नम इति मूलार्थ इत्यभिप्रायः ॥ ३३ ॥

**नमः पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने ।**
**वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे ॥ ३४ ॥**

**प्रकाशिका** – भूतानि वियदादीनि शब्दादीनिन्द्रियाणि श्रोत्रादीनि तेष्वात्मने व्याप्ताय शान्ताय सुखपूर्णायाक्रूरायेति वा ॥ ३४ ॥

**संकर्षणाय सूक्ष्माय दुरन्तायान्तकाय च ।**
**नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने ॥ ३५ ॥**

**प्रकाशिका** – दुरन्तायान्तत्रयवर्जिताय । विश्वप्रबोधाय पूर्णज्ञानाय विश्वस्य प्रबोधो यस्मात्तस्मै ॥ ३५ ॥

**नमो नमोऽनिरुद्धाय हृषीकेशेन्द्रियात्मने ।**
**नमः परमहंसाय पूर्णाय निभृतात्मने ॥ ३६ ॥**

**प्रकाशिका** – हृषीकाणामीशः प्रेरकश्चासाविन्द्रियात्मा चेन्द्रियस्वामी तस्मै । इन्द्रिय-स्वामित्वोपपादनायैव हृषीकेश इति हेतुगर्भविशेषणम् । पूर्णाय शुद्धाय । निभृतात्मने वृद्धिर्ह्रासशून्याय ॥ ३६ ॥

**स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः ।**
**नमो हिरण्यवीर्याय चातुर्होत्राय तन्तवे ॥ ३७ ॥**

**प्रकाशिका** – शुचौ वायौ सीदति तिष्ठतीति शुचिषत्तस्मै । हिरण्यवीर्याय हिरण्यात्मक-ब्रह्माण्डजनकवीर्याय । चातुर्होत्राय चतसृषु होतृषु नियामकतया स्थिताय । तन्नाम्ने ॥ ३७ ॥

**नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे ।**
**तृप्तिदाय च जीवानां नमः सर्वरसात्मने ॥ ३८ ॥**

**प्रकाशिका** – इषे देवान्नस्थाय तन्नाम्ने । यज्ञरेतसे । अत्र रेतःशब्दः कारणपरः । तथा च यज्ञकारणसोमान्तर्गताय तन्नाम्ने चेत्यर्थः । स हि देवानां पितॄणां चान्नं तृप्तिं ददातीति तृप्तिदो मनुष्याद्यन्नं तत्स्थाय तन्नाम्ने च । मधुरादिसर्वरसस्थाय । तन्नाम्ने चेत्यर्थः ॥ ३८ ॥

**सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे ।**
**नमस्त्रैलोक्यपालाय सहओजोबलाय च ॥ ३९ ॥**

**प्रकाशिका** – सर्वसत्त्वेषु सर्वप्राणिषु निविष्ट आत्मनः स्वस्य देहो यस्य । अनेन सर्वस्मै इत्युक्तमेव विवृतमिति ज्ञातव्यम् । यद्वा । सत्त्वं ज्ञानानन्दादिसाधुभावः । सर्वशब्दः पूर्णपरः । तथा च पूर्णज्ञानानन्दाद्यात्मकदेहायेत्यर्थः । विशिष्यत इति विशेषस्तस्मै विशिष्टायेत्यर्थः । पृथिव्यां स्थित्वा तस्याः सर्वस्माद्विशेषं करोतीति वा । सहस्तितिक्षाशक्तिरोजोऽवष्टंभशक्तिर्बलं बाह्याद्यवयवशक्तिः । तेषु स्थिताय तन्नामकाय च ॥ ३९ ॥

**अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने ।**
**नमः पुण्याय श्लोकाय अमुष्मै भूरिवर्चसे ॥ ४० ॥**

**प्रकाशिका** – अर्थलिङ्गाय शास्त्रादिना सर्वपुरुषार्थज्ञापकाय । अर्थो महदादिकार्यं लिङ्गमनुमापकं यस्येति वा । कर्तारं विना महदादिकार्यासंभवात् । नभसे नभोऽतर्गतायाकाश-वदसंगाय । न भस्यते प्रकाश्यते न ज्ञायत इति वा । भस भक्षणदीप्त्योरिति धातुः । अन्तर्बहि-रात्मने ब्रह्माण्डस्यान्तर्बहिःस्थितस्वरूपाय । पुण्याय श्लोकाय पुण्यश्लोकस्थाय तन्नाम्ने च ॥४०॥

**प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे ।**
**नमो धर्मविपाकाय मृत्यवे दुःखदाय च ॥ ४१ ॥**

**प्रकाशिका** – पितृदेवाय पितृदेवस्थाय तन्नाम्ने च । धर्माणां विपाकः फलं यस्मात्तस्मै । धर्मफलप्रदायेत्यर्थः । मृत्यवे मृत्युकारणाय दुःखदायिने ॥ ४१ ॥

**नमस्त आशिषामीश मनवे कारणात्मने ।**
**नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे ॥ ४२ ॥**

**प्रकाशिका** – मनवे ज्ञानरूपाय ॥ ४२ ॥

**पुरुषाय पुराणाय सांख्ययोगेश्वराय च ।**
**शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने ॥ ४३ ॥**

**प्रकाशिका** – सांख्यं यथार्थज्ञानं योगोऽष्टाङ्गस्तयोरीश्वराय । ज्ञानेच्छाक्रियारूप-शक्तित्रयसमेताय श्रीभूदुर्गारूपभार्यात्रययुक्तायेति वा । मीढुषे भक्ताभिलाषितसेचकाय । अहंकृते रुद्रे आत्मा मनो यस्य तस्मै ॥ ४३ ॥

**चेतआकूतिरूपाय नमो वाचोविभूतये ।**
**दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् ॥ ४४ ॥**

**प्रकाशिका** – चेतो ज्ञानमाकूतिरभिप्रायस्तयो रूपं स्वरूपं यस्मादुभयप्रदायेत्यर्थः । वाचः शब्दराशेर्विभूतिर्विविधाभूतिः सृष्टिर्यस्मात् । अलुक्समासोऽयम् । भागवतार्चितं रूपं दिदृक्षूणां नो दर्शनं देहीत्यन्वयः ॥ ४४ ॥

**रूपं प्रियतमं स्वानां सर्वेन्द्रियगुणाञ्जनम् ।**
**स्निग्धप्रावृड्घनश्यामं सर्वसौन्दर्यसंग्रहम् ॥ ४५ ॥**

**प्रकाशिका** – कीदृशं तद्रूपमित्यपेक्षायां रूपं वर्णयन् पुनरेव तदाह ॥ प्रियतममित्यादिना प्रदर्शयेत्यन्तेन । सर्वेन्द्रियाणां गुणा विषयास्तेषामंजनं व्यंजकम् । स्निग्धः प्रावृट् यो घनस्तद्वच्छामम् । सर्वेषां सौन्दर्याणां संग्रहो यस्मिन् ॥ ४५ ॥

**चार्वायतचतुर्बाहुं सुजातरुचिराननम् ।**
**पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम् ॥ ४६ ॥**

**प्रकाशिका** – चारव आयताश्चत्वारो बाहवो यस्मिन् । सुजातं कोमलं विदुरित्यभिधानात् सुजातं कोमलं रुचिरमाननं यस्मिन् । पद्मकोशस्य पलाशानि पत्राणि तद्वदक्षिणी यस्मिन् ॥४६॥

**सुद्विजं सुकपोलास्यं समकर्णविभूषितम् ।**
**प्रीतिप्रहसितापाङ्गमलकैरुपशोभितम् ॥ ४७ ॥**

**लसत्पङ्कजकिञ्जल्कदुकूलं मृष्टकुण्डलम् ।**
**स्फुरत्किरीटवलयहारनूपुरमेखलम् ॥ ४८ ॥**

**प्रकाशिका** – शोभना द्विजा दन्ता यस्मिन् । सुकपोलमाननं यस्मिन् । समौ कर्णौ विभूषणं यस्य कुण्डलयोरग्रे वक्ष्यमाणत्वात् । प्रीत्या प्रहसितयुक्तोऽपांगो यस्मिन् ॥ ४७,४८ ॥

**शङ्खचक्रगदापद्ममालामण्युत्तमर्द्धिमत् ।**
**सिंहस्कन्धमुरो बिभ्रत् सौभगग्रीवकौस्तुभम् ॥ ४९ ॥**

**प्रकाशिका** – मणिः कौस्तुभः शंखादिभिर्मण्यन्तैरुत्तमा ऋद्धिरुत्कर्षो यस्य तत् । सौभगयुक्ता ग्रीवा येन स सौभगग्रीवः । तादृशः कौस्तुभो यस्मिन्नुरसि स तथा तदुरो बिभ्रत् ॥ ४९ ॥

**श्रियाऽनपायिन्याऽऽक्षिप्तं निकषाश्मोरसोल्लसत् ।**
**पूररेचकसंविग्नवलिमत्पल्लवोदरम् ॥ ५० ॥**

**प्रकाशिका** – पुनरप्युरो वर्णयति ॥ श्रियेति । अनपायिन्या नित्यमुक्तया । हेतुभूतया श्रियाऽऽक्षिप्तस्तिरस्कृतो निकषाश्मा स्वर्णघर्षणपाषाणो येन तादृशेनोरसा लसच्छोभमानम् । पूररेचकौ श्वासोच्छ्वासौ ताभ्यां संविग्नाः संचलिता वलयो रेखा अस्य सन्तीति तत्तथा । पल्लवतुल्यमुदरं यस्मिंस्तत्तथा ॥ ५० ॥

**प्रतिसंक्रामयद् विश्वं नाभ्याऽऽवर्तगभीरया ।**
**श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् ॥ ५१ ॥**

**प्रकाशिका** – दक्षिणावर्तेन गभीरया निम्नया नाभ्यां बहिर्निर्गतं विश्वं प्रतिसंक्रामयद् ग्रसदिव स्थितम् । श्यामश्रोण्या श्यामवर्णनितंबप्रदेशेनाधिकं रोचिष्णु यद्दुकूलं पीतांबरं तत्र स्वर्णमयी मेखलाऽस्य सन्तीति तत्तथा । अङ्घ्री चोरूच निम्ने उन्नते जानूनि च सुदर्शने चक्षुषी च समानि चारुण्यङ्घ्र्यादीति यस्मिन् ॥ ५१ ॥

**समचार्वङ्घ्रिजङ्घोरुनिम्नजानुसुदर्शनम् ।**
**पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोतुरघं विधुन्वता ।**
**प्रदर्शय स्वीयमपास्तसाध्वसं पदं पुरोमार्गगुरुस्तमोजुषाम् ॥ ५२ ॥**

**प्रकाशिका** – नखद्युभिर्नखानां तेजोभिर्नोतुर्नखस्तोतुरघं पापं विधुन्वता नाशयता शरदि यत्पद्मं तत्पलाशवद्रुचिर्यस्य तेन पदा युतम् । उपलक्षितः पुरोमार्गगुरुरुत्क्रान्तस्यार्चिरादि

मार्गोपदेष्टा । कीदृशानां नः । तमो जुषामज्ञानिनाम् । पुर इत्यस्य पदान्वयो वा । अपास्तसाध्वसं निरस्तभयम् । स्वीयं पदं रूपम् । अस्माकं पुरः प्रदर्शयेति ॥ ५२ ॥

**एतद् रूपमनुध्येयमात्मशुद्धिमभीप्सताम् ।**
**यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ ५३ ॥**

**प्रकाशिका** – अनुध्येयं योग्यतानुसारेण ध्येयम् । आत्मनः स्वस्य शुद्धिं मुक्तिम् । यद्यस्माद्भक्तियोगो भक्तियुक्तध्यानयोगोऽभयदो मोक्षदः ॥ ५३ ॥

**भवान् भक्तिमतां लभ्यो दुर्लभः सर्वदेहिनाम् ।**
**स्वाराज्यस्याप्यभिमता एकान्तेनात्मविद्गतिः ॥ ५४ ॥**

**तात्पर्यम् – स्वाराज्यस्य इन्द्रादेः ॥ ५४ ॥**

**प्रकाशिका** – भक्तेरावश्यकतामुपपादयति ॥ भवानिति । दुर्लभः । भक्तिहीनानामिति शेषः । भवान्सर्वदेहिनां भक्तिमतां लभ्यः । न केवलं मोक्षार्थमावश्यकी भक्तिरपि त्विन्द्रादेः स्वार्गाद्याधिपत्त्यार्थमपीत्याह ॥ स्वाराज्यस्यापीति । अत्रापेक्षितं पूरयति ॥ स्वाराज्यस्येति ॥ ततश्चायमर्थः ॥ इन्द्रादेः स्वाराज्यस्य स्वर्गाधिपत्यस्यापि प्राप्तौ । एकान्तेन नियमेनात्मविद्गतिरात्मविदां परमात्मज्ञानिनां गतिर्हेतुः । भक्तिरिति यावत् । अभिमता साधनतया ज्ञानिनां संमतेति ॥ ५४ ॥

**त्वां दुराराध्यमाराध्य सतामपि दुरापया ।**
**एकान्तभक्त्या को वाञ्छेत् पादमूलं विना बहिः ॥ ५५ ॥**

**प्रकाशिका** – एतादृश्या भक्त्या युक्तो नान्यकामनां करोतीत्याह ॥ त्वामिति । बहिस्तुच्छं स्वर्गादिकम् ॥ ५५ ॥

**यत्र निर्विष्टमरणं कृतान्तो नावमन्यते ।**
**विश्वं विष्टम्भयन् वीर्यशौर्यविस्फुरितभ्रुवा ॥ ५६ ॥**

**प्रकाशिका** – तत्र हेतुमाह ॥ यत्रेति । यत्र पादमूलेऽरणं शरणं निविष्टं प्रविष्टं कृतांतो यमो नाभिमन्यते ममायमिति नाभिमानं करोति । किं कुर्वन् । वीर्यं प्रभावः शौर्यमुत्साहस्ताभ्यां विस्फूर्जितया भ्रुवा विश्वं विष्टंभयन्विशेषेण स्तंभयन् । वशीकुर्वन्निति यावत् ॥ ५६ ॥

**क्षणार्धेनाऽपि तुलये न स्वर्गं नापुनर्भवम् ।**
**भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ५७ ॥**

**तात्पर्यम् – 'सङ्गो भागवतैर्भूयानपुनर्भवमात्रतः । यतो विशिष्टमानन्दं मुक्तौ जनयति स्फुटमि'ति च ॥ ५७ ॥**

**प्रकाशिका –** त्वत्पादमूलं प्रविष्टस्य कृतान्तभयाभाव इति किं वाच्यम् । यतस्त्वद्भक्तसंग एव तादृशफलमित्याशयेनाह ॥ क्षणार्धेनेति । भगवतस्तवसंगिनां संगस्य क्षणार्धेन जायमानं सुखं स्वर्गं न तुलये स्वर्गसमं न गणयामि । अपुनर्भवं मोक्षं च न तुलये । मर्त्यानामाशिषो राज्यादीन्न तुलय इति किमुत । आशिषामिति तुच्छत्वज्ञापनाय मर्त्यानां मरणशीलानामित्युक्तम् । अत्र भगवत्संगिसगस्य साधनभूतस्य कथमपुनर्भवपदोक्तमोक्षलक्षणसाध्यापेक्षयोत्तमत्त्वमुक्तमित्याशङ्कां प्रमाणेनैव परिहरति ॥ संग इति । अपुनर्भवमात्रतः संसाराभावमात्रत इत्यर्थः । जनयति प्रकटयति । तथा च मूलेऽपुनर्भवशब्दः संसारनिवृत्तिमात्रपरो न विशिष्टानन्दाविर्भावपरोऽपीति । अतो न कोऽपि शंकेत्याशयः ॥ ५७ ॥

**अथानघाङ्घ्र्योस्तव कीर्तितीर्थयोरन्तर्बहिः स्नानविधूतपाप्मनाम् ।**
**भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात् सङ्गमोऽनुग्रह एष नस्तव ॥ ५८ ॥**

**तात्पर्यम् – अङ्घ्र्योर्जातयोः कीर्तितीर्थयोः ॥ ५८ ॥**

**प्रकाशिका –** भगवत्संगिनां स्वरूपं दर्शयंस्तत्संगमो भूयादित्याशास्ते ॥ अथेति । अत्राङ्घ्र्योः कीर्तितीर्थयोरिति सामानाधिकरण्यं बाधितमिव प्रतीयते । अतोऽत्र विवक्षिततात्पर्यं दर्शयति ॥ अङ्घ्र्योर्जातयोरिति । तथा चाङ्घ्रिपदं जातपरम् । अतो न सामानाधिकरण्यानुपपत्तिरिति भावः । यथाहुः । यस्माद्यज्जायते चांग लोकवेदादिकं हरेः । तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखमिति जातयोरित्यध्याहारो वा । अङ्घ्र्योः कीर्तिशब्दोदितशास्त्रश्रवणजनकत्वं विषयतयेति ज्ञातव्यम् ॥ तथा चायमर्थः ॥ यत एवं विशिष्टानन्दजनको भगवत्संगिसंगोऽथो तस्मात् । हे अनघ पापहर । तवाङ्घ्र्योरङ्घ्रिजातयोः कीर्तितीर्थयोः । भागवतादिसच्छास्त्रश्रवणलक्षणा कीर्तिस्तीर्थं विष्णु-पद्यादि। तयोः क्रमेणान्तर्बहिः स्नानाभ्यामवगाहाभ्यां विधूतपाप्पनामत एव भूतेष्वसज्जन-व्यतिरिक्तेष्वनुक्रोशः कृपा सुसत्त्वं शोभनान्तःकरणं ताभ्यां शीलं स्वभावो येषामस्तीति ते तथा तेषाम् । सुतत्त्वशीलानामिति पाठे सुष्टु परापरतत्त्वविचारस्वभावानामित्यर्थः । एष एव नोऽस्माकं तवानुग्रहोऽनुग्रहज्ञापकः ॥ ५८ ॥

**न यस्य चित्तं बहिरर्थविभ्रमं मनोगुहायां च निविष्टमाविशेत् ।**
**यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते पदम् ॥ ५९ ॥**

**प्रकाशिका –** एवं ज्ञानिनां विशिष्टानन्दजनकत्वाद्भगवत्संगिसङ्गोऽवश्यं भूयादित्युक्तम् । इदानीं जिज्ञासुभिरपि संप्रार्थ्येत्याशयेनाह ॥ न यस्येति । यद्यस्माद्भगवत्संगिसङ्गाद्भक्तियोगानुगृहीतं यस्याधिकारिणश्चित्तं स्मृतिकारणं बहिरर्थेषु शब्दादिविषयेषु विभ्रमं विविधभ्रमणयुक्तं न भवति । विरक्तं भवतीति यावत् । गुहायां निविष्टं हृदये स्थितं मनो मंतृत्वान्मनोनामकं परं ब्रह्म च यस्य मन आविशदाविशति तद्ध्यानपरं भवति । स मुनिस्तत्र हृदये ते पदं स्वरूपमंजसा विचष्टे पश्यति । ननु निश्चितं स भगवत्संगिसङ्गः स्यादिति पूर्वेणान्वयः ॥ ५९ ॥

**यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत् ।**
**न त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम् ॥ ६० ॥**

**तात्पर्यम् – विश्वस्मिंस्थितमपि न भात्यज्ञानाम् ॥ ६० ॥**

**प्रकाशिका –** पदमित्युक्तं भगवत्स्वरूपं दर्शयति ॥ यत्रेदमिति । अत्र विश्वस्मिन्नसत्वादेव नावभातीत्याशङ्का ज्ञानिनामवभात्येवातः कथं नावभातीत्युक्तमित्याशङ्कां च निराकर्तुमपेक्षित मध्याहृत्य योजयति । विश्वस्मिन्निति ॥ तथा चायमर्थः ॥ यत्र यदाधारतयेदं विश्वं व्यज्यते ज्ञानिनां व्यक्तं भवति । यद्विश्वस्मिन्स्थितमप्यज्ञानिनां न भाति तत्तत्त्वं सर्वदैकप्रकारपरमित्यस्य पूर्वोत्तरेण च संबन्धः । ज्योतिः स्वप्रकाशं विस्तृतं व्याप्तं तत्पदं विचष्ट इत्यन्वयः ॥ ६० ॥

**यो माययेदं पुरुरूपयाऽसृजद् बिभर्ति भूयः क्षपयेदविक्रियः ।**
**यद्भेदबुद्धिः सदिवाऽऽत्मसंस्थया तमात्मतन्त्रं भगवन् प्रतीमहि ॥ ६१ ॥**

**तात्पर्यम् – यस्य जीवादिभ्यो भेदबुद्धिः । स दिवा सम्यग्ज्ञानं सम्यग्ज्ञानिविषया सत्यैवेत्यर्थः । 'रात्रिरज्ञानमुद्दिष्टं सम्यग्ज्ञानं दिवा स्मृतमि'ति शब्दनिर्णये ॥ 'जीवेभ्यो जडतश्चैव भेदज्ञानं हरेः सदा । वास्तवं ज्ञानमुद्दिष्टं तेन मुक्तिरवाप्यत' इति षाड्गुण्ये ॥ ६१ ॥**

**प्रकाशिका –** पुनरपि भगवत्स्वरूपं दर्शयन् एतादृशभगवत्स्वरूपापरोक्षज्ञानिनः के इत्यपेक्षायामस्मदादयः एवेत्याह ॥ यो माययेति । अत्र यो माययेदं विश्वं सदिव परमार्थमिवासृजत् । कथंभूतया मायया । यया भेदबुद्धिरज्ञानमिति व्याख्याननिरासाय यद्भेदबुद्धिः

सदिवेत्यस्य विवक्षितमर्थं दर्शयति ।। यस्येति । यदित्यस्यार्थः ।। यस्येति । जीवादिभ्य इति योग्यतया लब्धार्थप्रदर्शनम् । आदिपदेन जडग्रहणम् । दिवेत्यन्वयं सम्यग्ज्ञानपरम् । दिवाः सहिताः सदिवास्तेषां सदिवेति व्याख्यानमभिप्रेत्याह ।। सम्यग्ज्ञानमिति । सम्यग्ज्ञानिनामित्यपि कचित्पाठः । सदिवेत्यस्यावृत्तिमभिप्रेत्यार्थान्तरमाह ।। सम्यग्ज्ञानविषयेति । निर्दोषोऽयमिति विज्ञानविषयेत्यर्थः । ततो लब्धार्थं दर्शयति ।। सत्यैवेति । अबाध्यैवेत्यर्थः । दिवाशब्दस्य सम्यग्ज्ञानवाचित्वं कुत इत्यतस्तत्र प्रमाणं पठति ।। रात्रिरिति । उक्तार्थसमर्थनाय समाख्यां दर्शयति ।। जीवेभ्य इति । वास्तवमेव अबाध्यमेव कुत इत्यत उक्तम् ।। तेनेति । न हि मिथ्याज्ञानेन मुक्तिः संभवतीति भावः ।। तथा चायमर्थः ।। यो भगवानात्मसंस्थया स्वाश्रितया पुरुरूपया शुक्ललोहितकृष्णभेदेन बहुरूपया मायया प्रकृत्येदं विश्वमसृजद्बिभर्ति भूयः क्षपयेत्पुनः संहरति । अत्र प्रकृतेरेव महदाद्यात्मना विकारो न तु परमात्मन इत्याशयेनोक्तम् ।। अविक्रिय इति । अनेन निमित्तकारणत्वमेवास्येति सूचयति । नन्वेवं जीवजडात्मकात्प्रपञ्चाद्भगवतो भेदः सत्यः स्यादित्यतोऽत्रेष्टापत्तिं सयुक्तिकमाह ।। यद्भेदबुद्धिरिति । यस्य हरेर्जीवेभ्यो जडाच्च भेदबुद्धिः । सदिवाः । दिवेत्यव्ययं सम्यग्ज्ञानपरम् । दिवा सहिताः सदिवाः सम्यग्ज्ञानिन-स्तेषाम्। भवतीति शेषः । कुतस्तज्ज्ञानस्य सम्यक्त्वमित्यतोऽपि सदिवेत्युक्तम् । निर्दोषोऽयं सम्यग्ज्ञानं दिवेत्युच्यते । तेन सहितास्तद्विषयेत्यर्थः । निर्दोषत्वेन साक्षिसिद्धेति यावत् । अतोऽबाध्यैव । ततश्च भेदः सत्य एवेत्याशयः । तमात्मतन्त्रं स्वतन्त्रम् । भो भगवन् । प्रतीमहि विजानीमहे । भगवन्निति संबोधनेन ज्ञानस्यापरोक्षत्वं सूचयति ।। ६१ ।।

**क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये ।**
**भूतेन्द्रियान्तःकरणोपलक्षणं वेदे च तन्त्रे च त एव कोविदाः ।। ६२ ।।**

**तात्पर्यम् – भूतेन्द्रियान्तःकरणैरुपलक्ष्यते ।। ६२ ।।**

**प्रकाशिका –** नन्वेवं भगवत्संगिसंगस्य भगवत्ज्ञानाय प्रार्थ्यत्वे क्रियाकलापविधायकवेदादीनां वैय्यर्थ्यं प्राप्तमित्यतस्तत्रापि हरेरेवेज्यत्वं योगिनामभिप्रेतमित्याशयेनाह ।। क्रियाकलापैरिति । अत्र भूतेन्द्रियान्तःकरणोपलक्षणमित्येतद्भूतेन्द्रियान्तःकरणानामुपलक्षणमिति प्रतीतिवारणाय व्याख्याति ।। भूतेति । उपलक्ष्यते ज्ञायते । तथाचोपलक्षणशब्दार्थः कर्मार्थकल्युडन्त इति भावः ।। ततश्चायं श्लोकार्थः । इदं प्रेत्यापि न मुंचामीति श्रद्धान्विता ये कर्मयोगिनः कर्ममार्गनियमनाय क्रियाकलापैः क्रियासमूहैः । इदमेवोक्तलक्षणं ब्रह्मैव सिद्धयेऽपरोक्षज्ञानाय विविक्ततया विशिष्ट ज्ञानजननाय वा । साधु सम्यक् सङ्गं यथा स्यात्तथा यजन्ति । त एव वेदे तन्त्रे च पञ्चरात्रादौ च

कोविदास्तत्तात्पर्यार्थज्ञानिन इत्यर्थः । अन्यथा नेत्यर्थः । सर्वोत्तमस्येत्यस्य सद्भावे वेदार्थ-निर्णायिकां युक्तिं दर्शयितुं ब्रह्म विशिनष्टि ॥ भूतेति । भूतेन्द्रियान्तःकरणैरुपलक्षणमुपलक्ष्यं ज्ञेयमिति । अनेनास्ति तावदयं देहो भूतेन्द्रियान्तःकरणैः प्रवृत्तिमान् । न चास्य विविधा प्रवृत्तिः स्वत एवाचेतनत्वात् । नाप्यन्यैश्चेतनैस्तेषामस्वातन्त्र्यात् । अतो देहादिनियामकः स्वतन्त्र एकश्चेतनोऽस्तीति निश्चीयत इति युक्तिरुक्तेति ज्ञातव्यम् । एवं वेदैस्तंत्रैश्च तमेव यजन्तीत्याशयः ॥ ६२ ॥

**त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजः सत्त्वतमो विभिद्यते ।**
**महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥ ६३ ॥**

**तात्पर्यम् – सुप्तशक्तिः स्वात्मन्येवाप्तशक्तिः । 'प्रकृतेः स्वाप उद्दिष्टो हर्यन्यस्य त्वदर्शनम् । विशेषेण हरौ चापि रतिर्ज्ञानात्मिका यत' इति सत्यसंहितायाम् ॥ ६३ ॥**

**प्रकाशिका** – यो माययेदमिति श्लोके यत्सृष्टिस्थितिसंहारकर्तृत्वमुक्तं तत्त्रयं त्वमेक इत्यादि श्लोकत्रयेण विशदयति ॥ त्वमेक इति । त्वमेकः पुरुष आद्य आदौ स्थितः । ननु रमाया अपि सत्वात्कथमेक इत्युक्तमित्यत उक्तम् ॥ सुप्तशक्तिरिति । अत्र शक्यत्वाच्छक्तिशब्दवाच्याया रमायाः प्रसिद्धा सुप्तिर्न संभवतीत्यालोच्य सुप्तशब्दस्य विवक्षितमर्थं दर्शयति ॥ सुप्तशक्तिरिति । स्वात्मनीत्यस्य योग्यतया लाभः । जगद्व्यापारं विहायेति तदर्थः । प्राप्तेत्यस्यार्थः ॥ आप्तेति । तथा च सुप्ता आत्मन्येवाप्ता रता शक्तिः शक्यत्वाच्छक्तिशब्दवाच्या रमा यस्येत्यर्थ इति भावः । रमाया उक्तरूपैव सुप्तिर्न प्रसिद्धेत्यत्र प्रमाणमाह ॥ प्रकृतेरिति । रमाया इत्यर्थः । हर्यन्यस्य त्वदर्शनं दर्शनसाध्यव्यापाराभावः । चोऽवधारणे । विशेषेण सृष्ट्याद्यवस्थापेक्षया विशेषेण हरावेव रतिरपि स्वाप उद्दिष्ट इत्यन्वयः । प्रसिद्ध एव स्वापस्तस्याः किं न स्यादित्यत उक्तम् ॥ ज्ञानात्मिका यत इति । सेति शेषः । सा प्रकृतिर्ज्ञानात्मिका ज्ञानस्वरूपदेहा । प्रसिद्धस्वापश्चा-ज्ञानकार्यः । अतस्तस्याः कथं संभावित इत्याशयः । एवं प्रलयावस्थां संक्षिप्योक्त्वा सृष्ट्यवस्थां दर्शयति ॥ तयेति । सुप्तशक्तिरित्यत्र शक्तिशब्देन जडप्रकृतिरप्यभिमता । तस्याश्च स्वापो जगद्व्यापाराभावरूप इति ज्ञातव्यम् । इदं गुणत्रयात्मकलक्षणकार्यं तदभिमानिरमारूपत्रयं च विभिद्यते व्यज्यते जायते च । सृष्ट्यनुगुणत्वाद्रज आदौ गृहीतम् । कथंभूतं रज आदिकम् । यतो गुणत्रयान्महदादिरूपमिदं भवति तन्मरुच्चाग्निश्च वाः उदकं च धराचेति विग्रहः । भूतगणा मनुष्यादय इतीदं विश्वं यतो भवति । अत्र महानित्यादिशब्दैस्तदभिमानिनोऽपि ग्राह्याः । तथा चानेन चेतनाचेतनसृष्टिरुक्तेति ज्ञातव्यम् ॥ ६३ ॥

**सृष्टं स्वशक्त्येदमनुप्रविश्य चतुर्विधं पुरमात्मांशकेन ।**
**अथो विदुस्त्वां पुरुषं सन्तमत्र भुङ्क्ते हृषीकैर्मधु सारघं यतः ॥ ६४ ॥**

**तात्पर्यम् – 'अवधारणे घशब्दःस्यात्सारमात्रं तु सारघमि'ति शब्दनिर्णये ॥ ६४ ॥**

**प्रकाशिका** – इदानीं स्थितिकर्तृत्वं विशदयति ॥ सृष्टमिति । स्वशक्त्योर्द्धिरूपया जरायुजाण्डजस्वेदजोद्भिज्जरूपेण चतुर्विधं पुरं शरीरमात्मांशकेन स्वरूपभूतांशेनानुप्रविष्टः । स्थित्यै इति शेषः । अत्र शरीरेषु हृषीकैर्जीवेन्द्रियाधिष्ठितैः स्वैरिन्द्रियैर्मधु सारघं विषयजातेषु विद्यमानं सारमात्रं मधु सुखं भुंक्ते । यतोऽथो तस्मात्त्वां पुरुषं विदुः । सारभोक्तृत्वात्सतं निर्दोषं च विदुरिति योजना । अत्र सारघपदस्य प्रकृतोपयुक्तमर्थं प्रमाणेनैव दर्शयति ॥ अवधारण इति । तथा च पूर्षु प्रविष्टत्वात्पुरुषं पुरुषशब्दवाच्यं सारमात्रभोक्तृत्वात्सन्तं विदुरिति विवेकः । यद्वा । हरेः शरीरानुप्रवेशे पुरुषशब्दवाच्यान्यथाऽनुपपत्तिरेव मानमिति दर्शयितुं पुरुषं विदुरित्युक्तम् । शरीरगतत्वेऽपि न तद्गतदुःखादिभोग इति सप्रमाणं दर्शयितुं यतो मधुसारघं भुंक्ते अथो सन्तं विदुरित्युक्तमिति द्रष्टव्यम् ॥ ६४ ॥

**स एष लोकानतिचण्डवेगो विकर्षसि त्वं खलु कालयानः ।**
**भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाविषह्यः ॥ ६५ ॥**

**प्रकाशिका** – इदानीं संहृतत्वं विशदयति ॥ स एष इति । यः स्वशक्त्येदं सृष्ट्वाऽनुप्रविष्टः स एषोऽतिचण्डवेगोऽपरिहार्यवेगोऽत एवाविषह्योऽपरिहार्यः । अनुमेयं तत्त्वं स्वरूपं यस्य सः । भूतै रुद्रयमादिभिर्भूतानि प्राणिनो घनावलीर्मेघपंक्तीर्वायुरिव कालयानो विनाशयन् लोकान् भूरादीन्विकर्षसि संहरसि खलु ॥ ६५ ॥

**प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ।**
**त्वमप्रमत्तः सहसाऽभिपद्यते क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ६६ ॥**

**प्रकाशिका** – न केवलं महाप्रलयकाले त्वं संहर्ता किं त्विदानीमपीत्याह ॥ प्रमत्तमिति । इति कृत्यस्यैवमिदं कर्तव्यमित्यस्य चिन्तयोच्चैः प्रमत्तं हरिविस्मरणशीलमत एव विषयेषु लालस-मतिकामुकं प्राप्तेषु विषयेषु प्रवृद्धलोभमभिपद्यसेऽऽक्रमसे यतोऽन्तकृदन्तकस्त्वम् । अत्र दृष्टान्त-माह ॥ अहिरिति । क्षुधालेलिहानो जिव्ह्योष्ठं स्पृशन् अहिः सर्प आखुं मूषकमिव ॥ ६६ ॥

**कस्त्वत्पदाब्जं विजहाति पण्डितो यत् ते पुमानप्ययमब्जकेतनः ।**
**विशङ्कयाऽस्मद्गुरुरर्चति स्म यद् विनोपपत्तिं मनवश्चतुर्दश ॥ ६७ ॥**

**तात्पर्यम् – अस्मादेतद्भवतीत्युपपत्त्यपेक्षां विनापि स्वभावत एव ॥ ६७ ॥**

**प्रकाशिका –** एवं भगवत्स्वरूपं निरूप्य तदर्चनादिकं न सर्वथा त्याज्यमित्यत्र पुराकल्परूप-मर्थवादमाह ॥ क इति । अत्रोपपत्तिं विनेत्यस्य प्रकृतसंगतमर्थं च दर्शयति ॥ अस्मादिति । अस्मान्मया क्रियामाणाद्भगवदर्चनादिकादेतद्भगवत्प्रीतिं विनाऽन्यद्यदभीष्टं भवति तद्भवदित्येवं रूपोपपत्तिमपेक्षां विनाऽपीत्यर्थः । तथा च नोपपत्तिशब्दो युक्त्यादिपरः किं त्वन्याभीष्ट-प्राप्तिपरः । तेन तदपेक्षा लक्ष्यत इत्युक्तं भवति । स्मेत्यस्यार्थोऽपीति । उपपत्त्यपेक्षां विनाऽपि किमर्थमर्चनमित्यतस्तल्लब्धमर्थमाह ॥ स्वभावत एवेति । हरिप्रीतिकामनास्वभावत एवेत्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ कः पण्डित एवं विदिततत्त्वः पुमान् ते परमोपकारिणः पादाब्जं विजहात्यर्चनादिकं न करोति । यद्यस्मादब्जकेतनः कमलासनो ब्रह्मा विशंकया दृढविश्वासेन विगतशंकया वाऽर्चति । अपिशब्दसूचितं तस्योत्तमत्वमुपपादयितुमस्मद्गुरुरित्युक्तम् । जनकत्वा-ज्ज्ञानोपदेष्टृत्वाद्गुरुरिति । यद्यस्माच्चतुर्दशमनव उपपत्तिं विना भगवत्प्रीतिं विनाऽन्यद्भव-त्वित्यपेक्षायां विना स्वभावत एव यच्चरणारविंदमर्चन्ति । तस्मात् कः पण्डितो विजहातीत्यन्वयः ॥ ६७ ॥

**यत्स्पृष्टोऽहरहर्मुक्तक्लेशः शेतेऽमृताम्बुधौ ।**
**तावद् वेदाथ तत् तेऽङ्घ्रिं जनो नु स्मरते च तत् ॥ ६८ ॥**

**तात्पर्यम् – अहरहः क्लेशमोक्षः सुप्तौ । तावद्वेदेत्याक्षेपो दौर्लभ्यज्ञापनार्थम् ॥ ६८ ॥**

**प्रकाशिका –** नन्वेवं परमोपकारिणो हृदये स्थितस्य भगवत्पादाब्जस्य ज्ञानं कुतो न सर्वेषां सुलभमित्याशङ्कायामेतादृशस्यापि ज्ञानं दुर्लभमित्येतदुपपादयति ॥ यत्स्पृष्ट इति । अत्र यत्स्पृष्टोऽहरहर्मुक्तक्लेश इति क्लेशत्यागस्य जाग्रदवस्थायामसंभवपरिहाराय तात्पर्यमाह ॥ अहरहः क्लेशमोक्ष इति । यत्स्पृष्ट इत्येतल्लब्धार्थप्रदर्शनम् ॥ सुप्ताविति । तावत्तेऽङ्घ्रिं वेदेति बाधितमतस्तात्पर्यमाह ॥ तावद्वेदेत्याक्षेप इति । काक्वा आक्षेपपरतयेदं योज्यमित्याशयः । तथा च योजनाफलमाह ॥ दौर्लभ्येति । भगवदङ्घ्रिज्ञानस्येति शेषः ॥ ततश्चायं श्लोकार्थः ॥ जन्यत इति जनः संसारी । अहरहः प्रतिदिनं येन त्वदङ्घ्रिणा स्पृष्टः प्राज्ञेन संपरिष्वक्तः । सुप्त इति यावत् । मुक्तक्लेशः सन् अमृतांबुधौ स्वरूपानन्दसमुद्रे शेते । स्वरूपानन्दमनुभवति । यावद्यदा तावत्तदा ते एवंविधोपकारिणस्तवाङ्घ्रिं प्राज्ञनामकं वेद किं नैव वेत्ति । ननु तदा ज्ञानप्रसक्तेरेवाभावान्न वेत्तीत्यत उक्तम् ॥ अथेति । अथ प्रबोधानन्तरं तत्स्वरूपसुखं यद्यस्मादनु-स्मरते । एतावन्तं कालं सुखमहमस्वाप्समित्यनुभवानुसारेण स्मरते । चशब्दोऽनुक्तसमुच्चयार्थः ।

तस्मात्तदाऽपि साक्षिणः स्वरूपसुखानुभवप्रसक्तिरस्ति तथाऽपि तेऽङ्गिं न वेत्ति। अतस्तत्ज्ञानं दुर्लभमित्याशयः ॥ ६८ ॥

**अथ त्वमसि नो ब्रह्मन् परमात्मन् विपश्चिताम् ।**
**विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः ॥ ६९ ॥**

**प्रकाशिका** – एवं संसारिणां भगवत्ज्ञानं दुर्लभमुक्त्वेदानीं सर्वमिदं नश्वरमिति ज्ञानिनां तद्ब्रह्म सुलभमित्याह ॥ अथेति । विश्वं रुद्रभयध्वस्तमिति यस्मादथ तस्मात्संसारिणां तत्ज्ञानस्य दुर्लभत्वाद्विश्वं नश्वरमिति विपश्चितां ज्ञानिनां नस्त्वमकुतश्चिद्भयागतिरसि कुतोऽपि भयशून्यो गम्योऽसीत्यर्थः । ब्रह्मन् परमात्मन्निति संबोधनद्वयं बहिरंतरूपद्वयाभिप्रायेण ॥ ६९ ॥

**इदं जपत भद्रं वो विस्रभ्य नृपनन्दनाः ।**
**स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः ॥ ७० ॥**

**प्रकाशिका** – ध्येयं स्वरूपं निरूप्याधुना पूर्वोक्तं जप्यं विधायोपसंहरति ॥ इदं जपतेति । सर्वस्मा आत्मन इत्यारभ्य वाचो विभूतय इत्यन्तं यदुक्तं तदिदं जपतेत्यन्वयः ॥ ७० ॥

**तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम् ।**
**पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥ ७१ ॥**

**प्रकाशिका** – तमेव स्तोत्रप्रतिपाद्यमेवात्मस्थमित्युपदिश्य सर्वभूतेष्ववस्थितमिति वचनं परिच्छिन्नत्वपरिहारायोक्तमिति ज्ञायते ॥ ७१ ॥

**योगादेशमुपासाद्य धारयन्तो मुनिव्रताः ।**
**समाहितधियः सर्वे एतदभ्यसनाहताः ॥ ७२ ॥**

**प्रकाशिका** – योगादेशं योगोपदेशं तन्नामकमिदं स्तोत्रमुपासाद्य प्राप्य मुनिव्रता मुनीनां व्रतानि कंदमूलफलाहारादीनि तद्युक्ताः ॥ ७२ ॥

**इदमाह पुरास्माकं भगवान् विश्वसृक्पतिः ।**
**भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ॥ ७३ ॥**

**प्रकाशिका** – श्रद्धोत्पादनायाह ॥ इदमाहेति । विश्वसृजां पतिर्ब्रह्मा ॥ ७३ ॥

ते वयं चोदिताः सर्वे प्रजासर्गे प्रजेश्वराः ।
अनेन ध्वस्ततमसः सिसृक्ष्म विविधाः प्रजाः ॥ ७४ ॥

अथेदं नित्यदा युक्तो जपन्नवहितः पुमान् ।
अचिराच्छ्रेय आप्नोति वासुदेवपरायणः ॥ ७५ ॥

**प्रकाशिका** – अनेन स्तोत्रेण ॥ ७४,७५ ॥

श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं स्मृतम् ।
सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥ ७६ ॥

य इदं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम् ।
अधीयानो दुराराध्यं हरिमाराधयत्यसौ ॥ ७७ ॥

**प्रकाशिका** – श्रेय आप्नोतीत्युक्तम् । तच्छ्रेयः किमित्यपेक्षायामाह ॥ श्रेयसामिति । ज्ञानस्य निःश्रेयस्त्वमुपपादयति ॥ सुखमिति । सुखं यथा भवति तथा ॥ ७६-७७ ॥

विन्दते पुरुषोऽमुष्माद् यद् यदिच्छति सत्वरम् ।
मद्गीतगीतात् सुप्रीताच्छ्रेयसामेकवल्लभात् ॥ ७८ ॥

य इदं कल्प उत्थाय प्राञ्जलिः श्रद्धयाऽन्वितः ।
शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥ ७९ ॥

**प्रकाशिका** – अमुष्माद्धरेर्मद्गीतं मयोक्तं गीतं स्तोत्रं तेन सुप्रीतात् ॥ ७८,७९ ॥

गीतं मयेदं नरदेवनन्दनाः परस्य पुंसः परमात्मनः स्तवम् ।
जपन्त एकाग्रधियस्तपो महच्चरध्वमन्ते तत आप्स्यथेप्सितम् ॥ ८० ॥

**प्रकाशिका** – ईप्सितं प्रजासर्जनादिकम् ॥ ८० ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

## अथ पञ्चविंशोऽध्यायः ।

**मैत्रेय उवाच –**

**इति संदिश्य भगवान् बार्हिषदैरभिपूजितः ।**
**पश्यतां राजपुत्राणां तत्रैवान्तर्दधे हरः ॥ १ ॥**
**रुद्रगीतं भगवतः स्तोत्रं सर्वे प्रचेतसः ।**
**जपन्तस्ते तपस्तेपुर्वर्षाणामयुतं जले ॥ २ ॥**
**प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्तमानसम् ।**
**नारदोऽध्यात्मतत्वज्ञः कृपालुः प्रत्यबोधयत् ॥ ३ ॥**

**प्रकाशिका** – प्रचेतसां तपोगमनान्तरं तत्पितुर्वृत्तमाह ॥ प्राचीनबर्हिषमिति ॥ ३ ॥

**नारद उवाच –**

**श्रेयस्त्वं कृतमद् राजन् कर्मणाऽऽत्मन ईहसे ।**
**दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेहयेष्यते ॥ ४ ॥**

**प्रकाशिका** – आत्मनः स्वस्य कर्मणा यच्छ्रेयःफलमीहसे इच्छसि । तत्कृतमत्स्वर्गादिरूपं चेत्तुच्छमित्याशयः । मोक्षश्चेन्न स्वर्गादिकामनावतस्तव भविष्यतीत्याह ॥ दुःखहानिरिति । संसारनिवृत्तिः स्वरूपसुखावाप्तिश्चेत्येतद्रूपं श्रेय ईहया स्वर्गादिकामनया । तद्वत इति यावत्। नेष्यते । प्रामाणिकैरिति शेषः । तत्रेहयेष्यत इति पाठे तत्रोक्तरूपश्रेयसि ईहयेच्छया । मोक्षेच्छयेति यावत् । इष्यते । स च तव नास्ति परमात्मज्ञानाभावादित्याशय इति योज्यम् ॥४॥

**प्राचीनबर्हिरुवाच–**

**न जानामि महाभाग परं कर्मापविद्धधीः ।**
**ब्रूहि मे विमलं ज्ञानं येन मुच्ये सकर्मभिः ॥ ५ ॥**

**प्रकाशिका** – अत एव राजा परं परमात्मानं न जानाम्यतो मोक्षाय तज्ज्ञानं यथा स्यात्तथा ब्रूहीत्याह ॥ कर्मभिरिति । कर्मभिः काम्यैर्निषिद्धैश्च ॥ ५ ॥

**नारद उवाच –**

**गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः ।**
**न परं विन्दते मूढो भ्राम्यन् संसारवर्त्मसु ॥ ६ ॥**

**प्रकाशिका** – मोक्षे वैराग्यं प्रथमसाधनमतस्तदवश्यमपेक्षितमित्याशयेन तदभावे मोक्षाभावं दर्शयति ।। गृहेष्विति । पुत्रादिरेवार्थः पुरुषार्थ इति धीर्यस्य स तथा । परं परमात्मानं न विन्दते न प्राप्नोति । परं श्रेयो मोक्षरूपं न विन्दत इति वा । अतो मुमुक्षोर्वैराग्यमावश्यकमित्याशयः ।। ६ ।।

**भो भो प्रजापते राजन् पशून् पश्य त्वयाऽध्वरे ।**
**संज्ञापितान् जीवसङ्घान् निर्घृणेन सहस्रशः ।। ७ ।।**

**प्रकाशिका** – कर्मफलेषु वैराग्यमुत्पाद्य ब्रह्मविद्यामुपदेष्टुं योगसामर्थ्येन मृतान्यज्ञपशून्प्रत्यक्षेण प्रदर्शयन्नाह ।। भो भो इति । संज्ञापितान् हिंसितान् ।। ७ ।।

**एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव ।**
**सम्परेतमयः कूटैश्छिन्दन्त्युत्थितमन्यवः ।। ८ ।।**

**तात्पर्यम् – 'यथावत्कर्म कर्तुस्तु ज्ञानसाहाय्यकारकम् । अन्यथाकुर्वतः कर्म निरयाय भविष्यति । तथापि कर्म निन्दन्ति न यतः कर्तुमञ्जसा । शक्यं ज्ञानफलस्यापि बहुत्वान्मोहनाय चे'ति ब्रह्माण्डे ।। ८ ।।**

**प्रकाशिका** – तव वैशसं त्वत्कृतहिंसनम् । संपरेतं मृतम् । अयःकूटैरयोनिर्मितायुधविशेषैः छिन्दन्ति छेत्स्यन्ति । अत्र कर्मनिन्दितुर्नारदस्याभिप्रायं प्रमाणेनैवाह ।। यथावदिति । कर्म यथावद्विद्ध्युक्तप्रकारेण कर्तुर्ज्ञाने जननीये सहायकारणं श्रवणादिसहकारिकारणम् । न स्वतन्त्रम् । एवं ज्ञानेनानन्दाभिवृद्धौ जननीये ज्ञानसहकारिकारणम् । न स्वतन्त्रम् । अन्यथांऽगवैकल्येन कुर्वतः कर्म निरयाय भविष्यति निरयजनकं भविष्यति । यद्यपि कर्मनिन्दा न युक्तेति शेषः । तथाऽपि कर्म निन्दन्ति मुनय इति शेषः । यतो यत्कर्मांजसा सांगतया न कर्तुं शक्यम् । सर्वारंभा हि दोषेण धूमेनाग्निरिवावृता इति वचनात् । अतो ज्ञानफलस्य बहुत्वादपि ज्ञानफलमोक्षापेक्षया कर्मफलस्य स्वर्गादिस्तुच्छत्वान्निन्दन्तीति भावः । मोहनाय चेति सर्वथा कर्म न कर्तव्यमित्यसुराणां भ्रान्तिर्भवतीत्याशयेनोक्तम् । द्विविधं कर्म प्रवृत्तं निवृत्तं चेति । तत्राद्यं निवृत्तकर्मनिन्दकाभिप्रायोपपादकमिति ज्ञेयम् ।। ८ ।।

**अत्र ते कथयिष्येऽहमितिहासं पुरातनम् ।**
**पुरञ्जनस्य चरितं निबोध गदतो मम ।। ९ ।।**

**प्रकाशिका** – गृहेषु कूटधर्मेष्विति श्लोकोक्तसंसारासक्तस्य स्वपरमात्मज्ञानं नास्तीत्यस्मिन्नर्थे इतिहासं कथयिष्यामीत्याह ॥ अत्रेति । पुरे शरीरेऽतति सततं विषयीकृत्य वर्तत इति पुरातनम् । अध्यात्मविषयमित्यर्थः । तस्मिन्नितिहासे प्रतिपाद्ये पुरंजनस्य चरितं निबोधेत्यर्थः । अत्र पारोक्ष्येण जीवसंसारस्थितिरेवोच्यत इत्यग्रे स्वयमेव वक्ष्यति । अतो नेदानीं तत्प्रपञ्च्यते ॥ ९ ॥

**आसीत् पुरञ्जनो नाम राजा राजन् बृहच्छ्रवाः ।**
**तस्याविज्ञातनामाऽऽसीत् सखाऽविज्ञातचेष्टितः ॥ १० ॥**

**प्रकाशिका** – अविज्ञातनाम तस्योपपादयति ॥ अविज्ञातेति । अविज्ञातमज्ञातं चेष्टितं यस्य स तथा ॥ १० ॥

**सोऽन्वेषमाणः शरणं बभ्राम पृथिवीं प्रभुः ।**
**नानुरूपं यदाविन्ददभूत् स विमना इव ॥ ११ ॥**

**प्रकाशिका** – शरणं पुरम् ॥ ११ ॥

**न साधु मेने ताः सर्वा भूतले यावतीः पुरः ।**
**कामान् कामयमानोऽसौ तस्य तस्याभिपत्तये ॥ १२ ॥**

**प्रकाशिका** – तस्य कामस्याभिपत्तये प्राप्तये ॥ १२ ॥

**स एकदा हिमवतो दक्षिणेष्वथ सानुषु ।**
**ददर्श नवभिर्द्वारैः पुरीं लक्षितलक्षणाम् ॥ १३ ॥**

**प्रकाशिका** – दक्षिणेषु सानुषु भारतभूप्रदेशेषु लक्षितानि दृष्टानि लक्षणानि यस्याम् ॥ १३ ॥

**प्राकारोपवनाट्टालपरिखैरुच्चतोरणैः ।**
**स्वर्णरौप्यायसैः शृङ्गैः संकुला सर्वतो गृहैः ॥ १४ ॥**

**प्रकाशिका** – प्राकारो दुर्गभित्तिरट्टालो भित्त्यन्तभूप्रदेशः परिखा भित्तेर्बहिः परितः खातनदी । परिखैरिति पुल्लिङ्गं छान्दसम् । शृङ्गैः शिखरैः ॥ १४ ॥

**नीलस्फटिकवैदूर्यमुक्तामरकतारुणैः ।**
**क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमिव ॥ १५ ॥**

**प्रकाशिका** – नीलपदमिन्द्रनीलपरम् । अरुणपदं माणिक्यपरम् । नीलादिभिः क्लृप्ता विरचिता हर्म्यस्थली यस्याः सा तथा । तां भोगवतीं नागपुरीम् ॥ १५ ॥

**सभाचत्वररथ्याभिराक्रीडायतनापणैः ।**
**चैत्यध्वजपताकाभिर्युक्तां विद्रुमवेदिभिः ॥ १६ ॥**

**प्रकाशिका** – चत्वरं चतुष्पथो रथ्या राजमार्ग आक्रीडायतनं द्यूतादिस्थानमापणं क्रयस्थानं चैत्यं जनानां विश्रामस्थानं ध्वजेषु पताकास्ताभिः ॥ १६ ॥

**पुर्यास्तु बाह्योपवने दिव्यद्रुमलताकुले ।**
**नदद्विहङ्गालिकुलकोलाहलजलाशये ॥ १७ ॥**

**प्रकाशिका** – स राजा बाह्योपवने स्थितस्तत्र यदृच्छयाऽऽगतां प्रमदोत्तमां ददर्शेति चतुर्थेनान्वयः । नदतां विहंगालिकुलानां कोलाहलो येषु ते जलाशया यस्मिन् ॥ १७ ॥

**हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना ।**
**चलत्प्रवालविटपिनलिनीतटसंपदि ॥ १८ ॥**

**प्रकाशिका** – हिमनिर्झराणां शीतलजलधाराणां विप्रुषो बिंन्दवस्तद्वत् कुसुमाकरः पुष्पस्थानं तत्संबन्धिना वायुना चलन्तः प्रवाला येषु ते तथा ते च विटपिनो वृक्षाश्चलत्प्रवाल-विटपिनस्तैर्युक्तानां नलिनीतटानां सरसतीराणां संपदो यस्मिंस्तत्तथा । तस्मिन् ॥ १८ ॥

**नानाऽरण्यमृगव्रातैरनाबाधे मुनिव्रतैः ।**
**आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः ॥ १९ ॥**

**प्रकाशिका** – अनाबाधे तत्कृतोद्रवशून्ये मुनिव्रतैरहिंस्रैः पांथ आत्मानमाहुतं मन्यते । कोकिलध्वनीनां मात्राविशेषैरात्मानमाहूतं कल्पयतीत्यर्थः ॥ १९ ॥

**यदृच्छयाऽऽगतां तत्र ददर्श प्रमदोत्तमाम् ।**
**भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः ॥ २० ॥**

**प्रकाशिका** – कथं भूतैर्भृत्यैः । एकैकं प्रत्येकं शतं बहुसंख्याका नायिकाः स्त्रियो येषाम् ॥ २० ॥

**तेषां परिवृढो राजन् सर्वेषां बलिमुद्वहन् ।**
**सखीकाणां सखा तस्या बहुरूपोऽग्रणीः स्त्रियः ॥ २१ ॥**

**प्रकाशिका** – तेषां भृत्यानां परिवृढः पतिः । तस्याः स्त्रियः सखा ॥ २१ ॥

**पञ्चशीर्षाहिना गुप्तां प्रतीहारेण सर्वतः ।**
**अन्वेषमाणामृषभमप्रौढां कामरूपिणीम् ॥ २२ ॥**

**प्रकाशिका** – प्रतीहारेण द्वारपालस्थानीयेन ऋषभं पतिम् । अप्रौढामनूढामपरिगृहीतपाणिमिव स्थितामित्यर्थः ॥ २२ ॥

**सुनासां सुदतीं बालां सुकपोलां वराननाम् ।**
**समविन्यस्तकर्णाभ्यां बिभ्रतीं कुण्डलश्रियम् ॥ २३ ॥**

**प्रकाशिका** – समं यथा भवति तथा विन्यस्तौ रचितौ कर्णौ यस्याः सा तथा ताभ्यां कुण्डलश्रियं कुण्डलशोभां बिभर्ती ॥ २३ ॥

**पिशङ्गनीवीं सुश्रोणीं श्यामां कनकमेखलाम् ।**
**पद्भ्यां क्वणद्भ्यां चलतीं नूपुरैर्देवतामिव ॥ २४ ॥**

**प्रकाशिका** – नूपुरैरिति जातौ बहुवचनम् ॥ २४ ॥

**स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ ।**
**वस्त्रान्तेन निगूहन्तीं व्रीडया गजगामिनीम् ॥ २५ ॥**

**प्रकाशिका** – व्यंजितं कैशोरं यौवनोपक्रमो याभ्यां समौ च वृत्तौ च ॥ २५ ॥

**तामाह ललितां वीरः सव्रीडस्मितशोभिनीम् ।**
**स्निग्धेनापाङ्गपुङ्खेन स्पृष्टः प्रेमभ्रमद्भ्रुवा ॥ २६ ॥**

**प्रकाशिका** – अपांगपुंखेन कटाक्षैकदेशेन प्रेम्णा भ्रमन्ती भ्रूस्तया च ॥ २६ ॥

**का त्वं कञ्जपलाशाक्षि कस्यासीह कुतः सति ।**
**इमामुपपुरीं भीरु किं चिकीर्षसि शंस मे ॥ २७ ॥**

**प्रकाशिका** – कुतः स्थानादिहागतोऽसि । हे सति । इमां पुरीं समीपे वर्तमानाम् ॥ २७ ॥

**क एतेऽनुपथा एत एकादशमहाभटाः ।**
**एता वा ललना सुभ्रु कोऽयं तेऽहिः पुरस्सरः ॥ २८ ॥**

**प्रकाशिका** – ते तव अनुवर्तिन एते के एकादशो महान् भटा येषु ते ॥ २८ ॥

**त्वं ह्रीर्भवान्यस्यथ वाग् रमा पतिं विचिन्वती किं मुनिवद् रहो वने ।**
**त्वदङ्घ्रिसाम्याप्तसमस्तकामः क पद्मकोशः पतितः कराग्रात् ॥ २९ ॥**

**प्रकाशिका** – मुनिवन्मौनवत्त्वादङ्घ्रिसाम्येनाप्ताः समस्ताः कामा येन स तथा ॥ २९ ॥

**नासां वरोर्वन्यतमा भुविस्पृक् पुरीमिमां वीरवरेण साकम् ।**
**अर्हस्यलङ्कर्तुमदभ्रकर्मणा लोकं परं श्रीरिव यज्ञपुंसा ॥ ३० ॥**

**प्रकाशिका** – हे वरोरु । तासां ह्रीप्रमुखानां मध्ये त्वमन्यतमाऽपि न भवसि । यतो भुविस्पृक् न हि देवता भुवि स्पृशन्ति । वीरवरेण मया । यज्ञपुंसा श्रीनारायणेन सह श्रियमिव परं लोकं वैकुण्ठम् ॥ ३० ॥

**यदेष माऽपाङ्गविखण्डितेन्द्रियं सव्रीडहासेक्षणविभ्रमद्भ्रुवः ।**
**तवोपसृष्टो भगवान् मनोभवः प्रबाधतेऽथानुगृहाण शोभने ॥ ३१ ॥**

**प्रकाशिका** – हे शोभने । यद्यस्मात्तवापांगेन विखण्डितमिन्द्रियं मनो यस्य तं मा मामेष मनोभवः कामो बाधतेऽथ तस्मादनुग्रहाण । कथंभूतो मनोभवः । व्रीडया सहितः सव्रीडः स चासौ हासश्च तेन युक्तेनेक्षणेन विभ्रमंत्यौ भ्रुवौ यस्याः सा तस्यास्तव सकाशादुपस्पृष्टः प्राप्तः ॥ ३१ ॥

**त्वदाननं सुभ्रु सुतारलोचनं व्यालम्बिनीलालकवृन्दसंवृतम् ।**
**उन्नीय मे दर्शय वल्गुवाचकं यद् व्रीडया नाभिमुखं शुचिस्मिते ॥ ३२ ॥**

**इत्थं पुरञ्जनं नारी याचमानमधीरवत् ।**
**अभ्यभाषत तं वीरं हसन्ती वीरमोहिनी ॥ ३३ ॥**

**प्रकाशिका** – हे शुचिस्मिते । शुभ्रमन्दहासे यद्व्रीडया नाभिमुखं संमुखं न भवति । त्वदाननं मुखमुन्नीय दर्शय । कथंभूतमाननम् । शोभने भ्रुवौ यस्मिन् शोभमाने तारे कनीनिके ययोस्ते लोचने यस्मिन् । व्यालंबिनो दीर्घा नीला येऽलकास्तेषां वृन्देन संवृतं वल्गूनि वाचकानि यस्मिन् ॥ ३२,३३ ॥

**न विदाम वयं सम्यक् कर्तारं पुरुषर्षभ ।**
**आत्मनश्च परस्यापि गोत्रं नाम च यत् कृतम् ॥ ३४ ॥**

**प्रकाशिका** – यत्पृष्टं कस्यासीति तस्योत्तरमाह ॥ न विदामेति । आत्मनो मम परस्य पित्रादेश्च कर्तारं वयं सम्यङ्न विदाम न विद्मः । अतो गोत्रं न विद्मः । का त्वमित्यस्योत्तरमाह ॥ नामेति । नाम च यत्कृतं च न विद्मः ॥ ३४ ॥

**इहाद्य सन्तमात्मानं विदाम न ततः परम् ।**
**येनेयं निर्मिता वीर पुरी शरणमात्मनः ॥ ३५ ॥**

**प्रकाशिका** – तर्हि चेतनत्वहानिरित्यत उक्तम् ॥ इहाद्येति । इहास्मिन्देशे काले सन्तं पदार्थम् । वर्तमानमात्रमिति यावत् । विदामो विद्मः । आत्मानं मामद्येदानीं जानीमहे । ततः परमसन्निकृष्टमवर्तमानं च न विद्म आत्मनो मम शरणमियं पुरी येन निर्मिता तं च न विद्मः ॥ ३५ ॥

**एते सखायः सख्यो मे नरा नार्यश्च मानद ।**
**सुप्तायां मयि जागर्ति नागोऽयं पालयन् पुरीम् ॥ ३६ ॥**

**प्रकाशिका** – क एतेऽनुपथा इति पृष्टस्योत्तरमाह ॥ एत इति । एते नरा मे सखायो नार्यश्च सख्यः ॥ ३६ ॥

**दिष्ट्याऽऽगतोऽसि भद्रं ते ग्राम्यान् भोगानभीप्ससे ।**
**उद्वहिष्यामि त्वां स्नेहं स्वबन्धुभिररिन्दम ॥ ३७ ॥**

**प्रकाशिका** – अभीप्ससे । मया सह भोक्तुमिति शेषः । तान् कामानुद्वहिष्यामि संपादयिष्यामि । स्वबन्धुभिः सखीभिः ॥ ३७ ॥

**इमां त्वमधितिष्ठस्व पुरीं नवमुखीं विभो ।**
**मयोपनीतान् गृह्णानः कामभोगाच्छतं समाः ॥ ३८ ॥**

**प्रकाशिका** – नवमुखीं नवद्वारामुपनीतान्संपादितान्समाः संवत्सराः ॥ ३८ ॥

**का नु त्वदन्यं रमयेदरतिज्ञमकोविदम् ।**
**असांपरायाभिमुखमश्वस्तनविदं पशुम् ॥ ३९ ॥**

**प्रकाशिका** – तत्संगममभिनन्दति पञ्चभिः ॥ का न्विति । अरतिज्ञं शब्दादि-विषयज्ञानरहितम् । एतत्कुत इत्यत उक्तम् । अकोविदमिति । शास्त्रजनितज्ञानशून्यमित्यर्थः । अत्रापिः हेतुकथनायोक्तम् ॥ असांपरायाभिमुखमिति । सांपरायोमोक्षस्तत्राभिमुखो न भवतीति असांपरायाभिमुखस्तमित्यर्थः । हेत्वन्तरमप्याह ॥ अश्वस्तनविदमिति । श्वस्तनं भविष्यन्न वेत्तीत्यश्वस्तनविदत एव पशुं पशुतुल्यम् ॥ ३९ ॥

**धर्मो ह्यत्रार्थकामौ च प्रजानन्दोऽमृतं यशः ।**
**लोका विशोका विरजा यान् न केवलिनो विदुः ॥ ४० ॥**

**प्रकाशिका** – अत्र गृहाश्रमे धर्मादयः सन्ति । प्रजानन्दः पुत्रसुखममृतं मोक्षो यान् गृहाश्रमप्राप्यान् केवलिनो ब्रह्मचारिणो यतयो वा ॥ ४० ॥

**पितृदेवर्षिमर्त्यानां भूतानामात्मनश्च ह ।**
**क्षेम्यं वदन्ति शरणं भवेऽस्मिन् यद् गृहाश्रमम् ॥ ४१ ॥**

**प्रकाशिका** – आत्मनोऽस्य देहस्य क्षेम्यं क्षेमाय योग्यं शरणमाश्रयं वदन्ति । यस्मात्तस्मादिति शेषः ॥ ४१ ॥

**का नाम वीर विख्यात वदान्यं प्रियदर्शनम् ।**
**न वृणीत पतिं प्राप्तं मादृशी त्वादृशं स्वयम् ॥ ४२ ॥**

**प्रकाशिका** – वदान्यं दानशूरं स्वयं स्वयमेव प्राप्तम् ॥ ४२ ॥

**कस्या मनस्ते भुजगेन्द्रभोगयोः स्त्रियो न सज्जेद् भुजयोर्महाभुज ।**
**योऽनाथवर्गाधिमलं घृणोद्धतस्मितावलोकेन चरस्यपोहितुम् ॥ ४३ ॥**

**प्रकाशिका** – त्वादृशमित्युक्तं विशदयति ॥ कस्या इति । कस्या अपि स्त्रियो मनो न सज्जेत्सक्तं न भवेत् । सर्वासामपि मनः सक्तं भवेत् । सर्वासां मनः सक्तं भविष्यतीत्याशयः । यो भवान् अनाथवर्गा अनाथसमूहा अस्मदादयस्तेषामाधिं मनोदुःखमलमत्यन्तमपोहितुं सर्वत्र चरसि ॥४३॥

**नारद उवाच–**

**इति तौ दम्पती तत्र समुद्य समयं मिथः ।**
**तां प्रविश्य पुरीं राजन् मुमुदाते शतं समाः ॥ ४४ ॥**

**प्रकाशिका** – केनापोहितुं घृणया दययोद्धतमुजृंभितं यस्मितं तत्पूर्वको योऽवलोकस्तेन समयं संकेतं समूह्य सम्यक् कृत्वा ।। ४४ ।।

**उपगीयमानो ललितं तत्र तत्र च गायकैः ।**
**क्रीडन् परिवृतः स्त्रीभिर्ह्रदिनीमाविशच्छुचौ ।। ४५ ।।**

**प्रकाशिका** – शुचौ ग्रीष्मर्तौ ।। ४५ ।।

**सप्तोपरि कृता द्वारः पुरस्तस्यास्तु द्वे अधः ।**
**पृथग् विषयगत्यर्थं तस्यां यः कश्चनेश्वरः ।। ४६ ।।**

**प्रकाशिका** – पुरो नवद्वारत्वमुक्तं विशदयति ।। सप्तेति । पुर उपरि सप्तद्वारः कृताः । द्वेऽधः। विषया देशाः तस्यापीश्वरो यः कश्चन नियत इत्यर्थः ।। ४६ ।।

**पञ्चद्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा ।**
**पश्चिमे द्वे अमूषां ते नामानि नृप वर्णये ।। ४७ ।।**

**प्रकाशिका** – सप्तसु मध्ये पञ्च द्वारः पौरस्त्याः पुरतो विद्यमानाः पूर्वदिगभिमुखा इत्यर्थः । दक्षिणा दक्षिणदिङ्मुखा उत्तरा उत्तरदिङ्मुखा पश्चिमे द्वेऽधोभागे द्वेऽमूषां नवद्वाराणाम् ।।४७।।

**खद्योताविर्मुखी च प्राग्द्वारावेकत्र निर्मिते ।**
**विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः ।। ४८ ।।**

**प्रकाशिका** – विभ्राजितं प्रकाशितं जनपदं विषयं द्युमांस्तन्नामा सखा यस्य तत्सहित इत्यर्थः । एवमग्रेऽपि ।। ४८ ।।

**नलिनी नालिनी च प्राग्द्वारावेकत्र निर्मिते ।**
**अवधूतसखस्ताभ्यां विषयं याति सौरभम् ।। ४९ ।।**

**प्रकाशिका** – सौरभं सौरभाख्यम् विषयं देशम् ।। ४९ ।।

**मुख्या नामपुरस्ताद् द्वास्तयाऽऽपणबहूदनौ ।**
**विषयौ याति पुरराट् रसज्ञविपणान्वितः ।। ५० ।।**

**प्रकाशिका** – पुरः राट् पुरंजन आपणबहूदनौ तन्नामानौ देशौ ।। ५० ।।

**पितृभूर्नृप पुर्या द्वा दक्षिणेन पुरञ्जनः ।**
**राष्ट्रं दक्षिणपाञ्चालं याति श्रुतधरान्वितः ॥ ५१ ॥**

**प्रकाशिका –** दक्षिणेन दक्षिणाभिमुखेयन ॥ ५१ ॥

**देवभूर्नाम पुर्या द्वा उत्तरेण पुरञ्जनः ।**
**राष्ट्रमुत्तरपाञ्चालं याति श्रुतधरान्वितः ॥ ५२ ॥**
**आसुरी नाम पश्चाद् द्वास्तया याति पुरञ्जनः ।**
**ग्राम्यकं नाम विषयं दुर्मदेन समन्वितः ॥ ५३ ॥**
**निर्ऋतिर्नाम पश्चाद्द्वास्तया याति पुरञ्जनः ।**
**वैशसं नाम विषयं लुब्धकेन समन्वितः ॥ ५४ ॥**

**प्रकाशिका –** उत्तरेण उत्तरदिगभिमुखेन ॥ ५२-५४ ॥

**अन्धावमीषां पौराणां निर्वाक्योपस्करावुभौ ।**
**अक्षण्वतामधिपतिस्ताभ्यां याति करोति च ॥ ५५ ॥**

**प्रकाशिका –** अन्धौ छिद्राभावात्पौराणां पुरसंबन्धिनाममीषां द्वाराणां मध्ये उभौ निर्वाक्योपस्करनामानौ पादहस्तस्थानीयौ अक्षण्वतामिन्द्रियवतामधिपतिः । पुरंजनः ॥ ५५ ॥

**स्वयं त्वन्तःपुरगतो विषूचिना समन्वितः ।**
**मोहं प्रसादं हर्षं वा याति जायात्मजोद्भवम् ॥ ५६ ॥**

**प्रकाशिका –** विष्वक् सर्वतोऽचतीति विषूचि मनस्तेन सहितः स्वयं पुरंजनः । जायात्मजेभ्य उद्भवो जन्म यस्य स तया तं मोहाद्यन्यतमं यातीत्यन्वयः । प्रसीदत्यनेनेति प्रसादः । परमानन्दो मुह्यत्यनेनेति मोहो निरयो हृष्यत्यनेनेति हर्षः स्वर्गस्तान् ॥ ५६ ॥

**एवं कर्मसु संसक्तः कामात्मा वञ्चितोऽबुधः ।**
**महिषी यद् यदीहेत तत् तदेवान्ववर्तत ॥ ५७ ॥**
**क्वचित् पिबन्त्यां पिबति मदिरां मदविह्वलः ।**
**अश्नन्त्यां क्वचिदश्नाति जक्षत्यां सह जक्षति ॥ ५८ ॥**

**क्वचिद् गायति गायन्त्यां रुदन्त्यां रुदति क्वचित् ।**
**क्वचिद्धसन्त्यां हसति जल्पन्त्यामनुजल्पति ॥ ५९ ॥**

**प्रकाशिका** – कर्मसु ग्राम्यकर्मसु काम्यन्त इति कामा विषयास्तेष्वात्मा मनो यस्य स तथा । वंचितः । देवेनेति शेषः । अबुधो विवेकज्ञानशून्यः । महितं ददातीति महिषी यद्यत्कर्म कारयितुमीहे तत्तत्कर्मान्ववर्ततान्वकरोदेव ॥ ५७-५९ ॥

**क्वचिद्धावति धावन्त्यां तिष्ठन्त्यामनुतिष्ठति ।**
**अनुशेते शयानायामन्वास्ते क्वचिदासतीम् ॥ ६० ॥**
**क्वचिच्छृणोति शृण्वन्त्यां पश्यन्त्यामनुपश्यति ।**
**क्वचिज्जिघ्रति जिघ्रत्यां स्पृशन्त्यां स्पृशति क्वचित् ॥ ६१ ॥**
**क्वचिच्च शोचतीं जायामनुशोचति दीनवत् ।**
**अनुघृष्यति संघृष्टां मुदितामनुमोदते ॥ ६२ ॥**

**प्रकाशिका** – आसतीमासीनाम् ॥ ६०-६२ ॥

**विप्रलब्धो महिष्यैवं सर्वप्रकृतिवञ्चितः ।**
**नेच्छन्ननुकरोत्यज्ञः क्लैब्यात् क्रीडामृगो यथा ॥ ६३ ॥**

'देवजीवाभिमानी तु ब्रह्मैव तु चतुर्मुखः । मानुषाणां तु जीवानामभिमानी पुरञ्जनः । स तु राजा हरेः पुत्रस्त्वासुराणां कलिः स्वयम् । जीवसंसृतिवत्तस्मात्पुरञ्जनकथापि तु । तस्माज्जीवसृतिज्ञप्त्यै पुरञ्जनकथां मुनिः । नारदोऽश्रावयद्विद्वान्नृपं प्राचीनबर्हिषम् । प्रायस्तु तत्कथा जीवे स्थिता प्रत्येकशोऽपि तु । प्रत्येकं यत्तु युज्येत तदुन्नेयं यथा तथा । उक्तं भागवतेऽप्येतत्पुराणे यावदिष्यते । प्रत्येकशस्तु जीवानां तदन्यत्तस्य केवलमि'ति तन्त्रभागवते ।

'ये पुरञ्जनभृत्याद्या भार्याद्याः सर्व एव च । तेऽपि मानुषबुध्यादेर्विज्ञेया अभिमानिनः । गायत्र्याद्यास्तु देवानां तेऽपि चैतेषु संस्थिताः । अलक्ष्मीद्वापराद्यास्तु आसुरास्तेऽपि मानुषा' इति च ।

'दक्षिणश्रोत्रमार्गेण देवलोकं व्रजत्यसौ । वामश्रोत्रेण पितृणामिति वेदविदो विदुरि'ति प्रवृत्तितन्त्रे ॥ ६३ ॥

**प्रकाशिका** – वञ्चिता सर्वप्रकृतिः स्वभावो यस्य सः सर्वप्रकृतिवञ्चितः सर्वैः प्रकृति-भिर्मन्त्र्यादिभिर्वञ्चित इति वा । नेच्छन्ननिच्छन् क्लैब्यात्पारवश्यात् । अत्र पुरंजननामानं राजानं

कल्पयित्वाऽविद्यमानैव तत्कथा पारोक्ष्येण जीवसंसारज्ञापनायोच्यत इत्याशङ्कां प्रमाणेनैव परिहरति ॥ देवजीवेति । देवाश्च ते जीवाश्च तेषामभिमानीत्यर्थः । ब्रह्मणः सर्वजीवाभिमानित्वेऽपि विशेषेण देवजीवाभिमानित्वमिति सूचनायाद्यस्तुशब्दः । तत्रापि तारतम्येनाभिमानित्वसूचनाय द्वितीयः । ब्रह्मैव न पुरंजनो नापि कलिरित्यर्थः । मानुषाणां त्वित्यत्र तुशब्दोऽवधारणार्थः । स त्वित्यत्र तुशब्दः प्रकृतत्वानुसंधानार्थः । असुराणां कलिः स्वयं स्वयमेवाभिमानी न पुरंजन इत्यर्थः । अत्र कलिब्रह्मणोरुक्तिः प्रसङ्गात् । जीवसंसृतिवज्जीवसंसृतिकथावत् । तस्मान्मानुषजीवाभिमानित्वात् । पुरञ्जनकथाऽपि प्रवर्तत इति शेषः । तुशब्दः प्रायश इत्यर्थे । तदन्यत्तस्य केवलमिति वक्ष्यमाणत्वात् । तस्मात्कथासाम्यात् । जीवसंसृतिज्ञप्त्यै । पारोक्ष्येणेति शेषः । प्रायस्तु प्राय एव । तत्कथा पुरंजनकथा । जीवे जीवविषये स्थिता । तत्प्रतिपादिकेति यावत् । प्रत्येकशोऽप्येकैकस्मिन्नपि । तुशब्दद्वयमवधारणे । यदेव प्रत्येकमुभयत्र युज्यते तदेव यथाऽस्ति तथैवोन्नेयं नेतरत् । भागवतेऽपि पुराणे एतत्पुरंजनचरितमुक्तम् । तत्र तुशब्दोऽप्यर्थः । जीवानां प्रत्येकशोऽपि यावत्पुरंजनचरितमिष्यते युज्यते तावदेवोन्नेयम् । तदन्यद्यज्जीवे न युज्यते तत्तस्य पुरंजनस्य केवलमसाधारणम् । उन्नेयमिति वर्तते । एतच्चोत्तरत्र प्रदर्शयिष्यामः ।

ननु पुरंजनस्य मानुषजीवाभिमानित्वात्तत्कथाया जीवसंसृतिज्ञापनार्थत्वेऽपि तद्भृत्यभार्यादिकथायाः कथं तदर्थत्वमित्याशङ्कायास्तदप्युपपादयति ॥ ये इति । आद्यादिपदेन तत्सखीनां द्युमदादीनां ग्रहणम् । द्वितीयेनाद्यपदेन भार्याभृत्यदशकादीनां ग्रहणम् । बुद्ध्यादेरित्यादिपदेनेन्द्रियादिग्रहणम् । प्रसंगादाह ॥ गायत्र्याद्या इति । आद्यपदेन वारुण्यादेर्ग्रहणम् । तुशब्दोऽवधारणे । देवादीनामेव बुद्ध्यादेरभिमानिनः । एतेषु मनुष्यबुद्ध्यादिषु चेत्यर्थे । अलक्ष्मीः कलिभार्या द्वापरं द्वापरयुगाभिमानी । आद्यशब्दः कालनेम्यादिसङ्ग्रहार्थः । असुरा असुरबुद्ध्याद्यभिमानिनो मानुषा मानुषबुद्ध्याद्यभिमानिनः । अत्र पितृभूर्नृपपुर्याद्वा दक्षिणेन पुरंजनः । राष्ट्रं दक्षिणपाञ्चालं याति श्रुतधरान्वितः । देवभूर्नामपुर्याद्वोत्तरेण पुरंजनः । राष्ट्रमुत्तरपाञ्चालं याति श्रुतधरान्वित इति श्लोकद्वयस्य जीवपक्षे योजना । पितृभूर्दक्षिणकर्ण उत्तरो देवभूः स्मृतः । प्रवृत्तं च निवृत्तं च शास्त्रं पाञ्चालसंज्ञितम् । पितृयानं देवयानं श्रोत्रात्श्रुतिधारद्व्रजेदिति वक्ष्यति । तेन दक्षिणकर्णस्य पितृयानसाधनत्वं वामकर्णस्य देवयानसाधनत्वं प्रतीयते । न हि तत्संभवति । दक्षिणकर्ण एव देवलोकसाधनमन्त्रोपदेशादेः संप्रदायसिद्धत्वात् । अतो न तत्र यथाश्रुतक्रमः किन्तु यथायोग एवेत्याशयेन तत्तात्पर्यं प्रमाणेनैवाह ॥ दक्षिणश्रोत्रेति । पितॄणां लोकमिति बुद्ध्या विविक्तमनुवर्तते । तथा च

पितृभूरुत्तरकर्णो देवभूर्दक्षिणकर्णः स्मृत इत्यन्वयः । पितृयानं पितृलोकमार्गमुत्तरकर्णेन देवयानं देवलोकमार्गं दक्षिणकर्णेन व्रजेदिति तच्छ्लोकयोजना कर्तव्येत्याशयः । एतद्बलादेव पितृभूर्नृपपुर्याद्विति श्लोकद्वये दक्षिणपाञ्चालमित्युत्तरश्लोके उत्तरपाञ्चालमिति पूर्वश्लोकेऽन्वितमिति ज्ञातव्यम् ॥ ६३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

## अथ षड्विंशोऽध्यायः ।

**नारद उवाच –**

**स एकदा महेश्वासो रथं पञ्चाश्वमाशुगम् ।**
**द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम् ॥ १ ॥**

**प्रकाशिका** – ॥ हरिः ॐ ॥ तस्य मृगयात्रां वक्तुमाह ॥ एकदेति । सः पुरंजनो महानिश्वासो धनुर्यस्य द्वे इषे यस्य तत् द्वीषम् । द्वे चक्रे यस्य तत् । द्विचक्रम् । त्रयो वेणवो ध्वजा यस्य तत् । पञ्च बन्धुराणि बंधनानि यस्य तत् ॥ १ ॥

**एकरश्म्येकदमनमेकनीडं द्विकूबरम् ।**
**पञ्चप्रहरणं सप्तवरूथं पञ्चविक्रमम् ॥ २ ॥**

**प्रकाशिका** – एको दमनः सारथिर्यस्य । एकं नीडमुपवेशस्थानं यस्य स तथा । द्वौ कूबरौ युगन्धरौ युगलधनू यस्य स तथा । पञ्च प्रहरणान्यायुधानि यस्मिन् । सप्त वरूथो रथार्थमावरक यस्य । पञ्च विक्रमाः गतिप्रकारा यस्य ॥ २ ॥

**हेमोपस्करमारुह्य स्वर्णवर्माक्षयेषुधिः ।**
**एकादशचमूनाथः पञ्चप्रस्थमगाद् वनम् ॥ ३ ॥**

**प्रकाशिका** – हेमोपस्करं सुवर्णाभरणम् । स्वर्णवर्मा सुवर्णमयकवचः । एकादश-संख्याकचमूनाथः । पञ्चप्रस्थं पञ्चधा विभक्तम् ॥ ३ ॥

**चचार मृगयां तत्र दृप्त आत्तेषु कार्मुकः ।**
**विहाय जायामतदर्हां मृगव्यसनलालसः ॥ ४ ॥**

**प्रकाशिका** – इषवश्च कार्मुकं चात्तं गृहीतं येन स तथा । मृगव्यसनलालसो हरिणादिमृगाणां हिंसनायोत्कटव्यापारवान् ॥ ४ ॥

**आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः ।**
**न्यहनन्निशितैर्बाणैर्वनेषु वनगोचरान् ॥ ५ ॥**

**प्रकाशिका** – आसुरीं हिंसालक्षणां वृत्तिम् । निर्गतोऽनुग्रहो दयालक्षणा यस्मात् । वनगोचरान्मृगान्न्यहनत् ॥ ५ ॥

**तीर्थेषु श्रुतिदृष्टेषु राजा मेध्यपशून्वने ।**
**यावदर्थमलं लुब्धो हन्यादिति नियम्यते ॥ ६ ॥**

**तात्पर्यम् – अलुब्धो लोकोपकारार्थं घ्नन्नात्मार्थादधिकमपि हन्यात् । 'उपकारः सतां येन तत्कृत्वा नैव दुष्यति । अतीव निन्दितमपि बहुहिंसायुगेव वा । अथवा ज्ञानिनः कर्म न दुष्टमपि लिप्यत' इत्यध्यात्मे ॥ ६ ॥**

**प्रकाशिका** – नन्वासुरीं वृत्तिमाश्रित्येति कथं मृगया निन्द्यते । राज्ञां मृगयाया विहितत्वादित्यत आह ॥ तीर्थेष्विति । न राज्ञोऽपि मृगया विधीयते रागप्राप्तत्वात्किन्तु नियम्यते । प्रवृत्तिः संकोच्यते । नियममेव दर्शयति ॥ यावदर्थमिति । यद्यलमत्यर्थं लुब्धो रागी सन् पशून्हन्यात्तर्हि तीर्थेषु श्रुतिदृष्टेषु श्राद्धादिष्वेव राजैव मेध्यानेव वने हन्यात् । यावदर्थं यावदुपयोगमेवेति । यद्वा श्रुतिदृष्टेषु श्रुतिस्मृतिविहितेषु तीर्थेषु तत्तत्स्थानेषु राजा स्वविहिताचार-निष्ठया शोभमानो यान्मेध्यान्पशून् अजमृगप्रभृतीन्यावदर्थं यावत्प्रयोजनं लुब्धः फलार्थी हन्यादिति । अलं नियम्यते विधिवाक्यैरिति शेषः । अत्र लुब्ध इत्यस्य व्यावर्त्त्यं दर्शयति ॥ अलुब्ध इति । अलुब्धो रागशून्यः । लोकोपकारार्थं सज्जनोपकारार्थं घ्नन्नप्यात्मार्थादधिकमपि हन्यात् । तदधिकहननेऽपि न दोष इत्यर्थः । अत्र प्रमाणमप्याह ॥ उपकार इति । अथवेति व्यवस्थितो विकल्पः । अलुब्धो राजा द्विविधः । जिज्ञासुर्ज्ञानी च । तत्र जिज्ञासुर्येन कर्मणा सतामुपकारः स्यात्तदतीवनिन्दितमपि बहुहिंसायुगेव वा कृत्वा नैव दुष्यति । ज्ञानिनो लुब्धस्यापि न दुष्कर्मलेपप्रसक्तिः किम्वलुब्धस्येत्यर्थः । अनेन य एवमित्युत्तरश्लोकतात्पर्य-मुक्तमित्यवगन्तव्यम् । तथा चैतादृशालुब्धव्यावृत्त्यर्थं मूले लुब्धमित्युक्तमित्याशयः ॥ ६ ॥

**य एवं कर्म नियतं विद्वान् कुर्वीत वा न वा ।**
**कर्मणा तेन राजेन्द्र ज्ञानेन स न लिप्यते ॥ ७ ॥**

**प्रकाशिका** – नियम्यत इत्युक्तो नियमो नापरोक्षज्ञानिनं प्रतीत्याह ॥ य एवमिति । कर्म हिंसारूपम् । न वेत्यनेन नियतकरणमनियताकरणं च ग्राह्यम् । यो नियतं विद्वान् जानन् एवं विधं पापं पुण्यं वा कर्म कुर्वीत न वा कुर्वीत तेनोभयविधेन कर्मणा स ज्ञानी ज्ञानेन निमित्तेन न लिप्यते । केन निमित्तेनेत्यत उक्तम् ॥ ज्ञानेति । कर्मलेपाभावे ज्ञानं कारणमित्यर्थः । तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवंविदि पापकर्म न श्लिष्यत इति श्रुतेः ॥ ७ ॥

**अन्यथा कर्म कुर्वाणः कामरूढो निबद्ध्यते ।**
**गुणप्रवाहपतितो नष्टप्रज्ञो व्रजत्यधः ॥ ८ ॥**

**प्रकाशिका** – लुब्धस्योक्तक्रमोल्लङ्घने बाधकमाह ॥ अन्यथेति । अन्यथोक्तान्विहाय कर्म हिंसात्मकम् । निबद्धचत इत्युक्तमेव विशदयति ॥ गुणप्रवाहेति । तथा चासुरीं वृत्तिमाश्रित्ये-त्युक्तनिन्दात्यक्तोक्तनियमानां राज्ञामित्युक्तं भवति ॥ ८ ॥

**तत्र निर्भिण्णगात्राणां चित्रवाजैः शिलीमुखैः ।**
**विप्लवोऽभूद् दुःखितानां दुस्सहः करुणात्मनाम् ॥ ९ ॥**
**शशान् वराहान् महिषान् गवयान् रुरुशल्यकान् ।**
**मेध्यानन्यांश्च विविधान् विनिघ्नन् श्रममध्यगात् ॥ १० ॥**

**प्रकाशिका** – एवं प्रासङ्गिकं समाप्य प्रकृतमाह ॥ तत्रेति । तत्र वने । चित्रा वाजाः पक्षा येषां ते तैः शिलीमुखैर्बाणैर्विप्लवो नाशः । करुणात्मनां कृपालूनां दुःसहः ॥ ९,१० ॥

**ततः क्षुत्तृट्परिश्रान्तो निवृत्तो गृहमेयिवान् ।**
**कृतस्नानोचिताहारः संविवेश गतक्लमः ॥ ११ ॥**
**आत्मानमर्हयाञ्चक्रे धूपलेपस्रगादिभिः ।**
**साध्वलंकृतसर्वाङ्गो महिष्यामादधे मनः ॥ १२ ॥**

**प्रकाशिका** – वनान्निवृत्तः संविवेश शय्यामाश्रितः ॥ ११,१२ ॥

**तृप्तो हृष्टः सुदृप्तश्च कन्दर्पाकृष्टमानसः ।**
**न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम् ॥ १३ ॥**

**प्रकाशिका** – गृहमेधिनीं गृहस्थाश्रमोचितधर्मानुकूलाम् ॥ १३ ॥

**अन्तःपुरस्त्रियोऽपृच्छद् विमना इव वेदिषन् ।**
**अपि वः कुशलं रामाः सेश्वरीणां यथा पुरा ॥ १४ ॥**

**प्रकाशिका** – हे वेदिषन् प्राचीनबर्हे । हे रामाः । सेश्वराणां वः कुशलमपि किम् ॥ १४ ॥

**न तथैतर्हि रोचन्ते गृहेषु गृहसम्पदः ।**
**यदि न स्याद् गृहे माता पत्नी वा पतिदेवता ॥ १५ ॥**

**प्रकाशिका** – एतर्हीदानीम् ॥ १५ ॥

व्यङ्गे रथ इव प्राज्ञः को नामासीत दीनवत् ।
क्व वर्तते सा ललना मज्जन्तं व्यसनार्णवे ।
या मामुद्धरति प्रज्ञां दीपयन्ती पदे पदे ॥ १६ ॥

**प्रकाशिका** – व्यंगे चक्राश्वादिरहिते पदे पदे प्रतिक्षणम् ॥ १६ ॥

**रामा ऊचुः** –

नरनाथ न जानीमस्त्वत्प्रिया यद् व्यवस्यति ।
भूतले निरवस्तारे शयानां पश्य शत्रुहन् ॥ १७ ॥

**प्रकाशिका** – यद्व्यवस्यति यन्निश्चित्य तिष्ठति तन्न जानीम इत्यन्वयः । निरवस्तारे आस्तरणरहिते भूतले ॥ १७ ॥

**नारद उवाच**–

पुरञ्जनः स्वमहिषीं निरीक्ष्यावधुतां भुवि ।
तत्सङ्गोन्मथितज्ञानो वैक्लव्यं परमं ययौ ॥ १८ ॥

**प्रकाशिका** – अवधुतां त्यक्तदेहादराम् । वैक्लवं पारवश्यम् ॥ १८ ॥

सान्त्वयन् श्लक्ष्णया वाचा हृदयेन विदूयता ।
प्रेयस्याः प्रेमसंरम्भलिङ्गमात्मनि नाध्यगात् ॥ १९ ॥

**प्रकाशिका** – प्रेमसंरंभः प्रणयकोपः । तस्य लिङ्गं कुटिलदृष्ट्यादि तदात्मनि स्वस्मिन्नाध्यगान्न लब्धवान् ॥ १९ ॥

अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः ।
पस्पर्श पादयुगलमाह चोत्सङ्गलालिताम् ॥ २० ॥

**प्रकाशिका** – उत्सङ्गमारोप्य लालिताम् ॥ २० ॥

नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे ।
कृतागः स्वात्मसात् कृत्वा शिक्षादण्डं न युञ्जते ॥ २१ ॥

**प्रकाशिका –** हे शुभे । ईश्वराः स्वामिनो येषु कृतागस्सु कृतापराधेषु भृत्येष्वात्मसात्कृत्वा स्वाधीनान्कृत्वा शिक्षारूपदण्डं न युंज्यते ते भृत्या नूनं निश्चितम् । अकृतपुण्या मन्दभाग्या इत्यर्थः ॥ २१ ॥

**परमानुग्रहो दण्डो भृत्येषु प्रभुणाऽर्पितः ।**
**बालो न वेद तत् तन्वि बन्धुकृत्यममर्षणः ॥ २२ ॥**

**प्रकाशिका –** यतः परमानुग्रहो दण्डो यस्त्वेवं न वेद स मूर्ख इत्याह ॥ बाल इति । बन्धुकृत्यं शिक्षाकरणममर्षणः क्रोधाधीनः । ततश्चाहमपराधी त्वद्भृत्यश्च तस्मान्मयि त्वया दण्डः प्रयोज्य इत्याशयः ॥ २२ ॥

**सा त्वं मुखं सुदति सुभ्र्वनुरागभारव्रीडा विलम्बविलसद्धसितावलोकम् ।**
**नीलालकालिभिरुपस्कृतमुन्नसं नः स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम् ॥२३॥**

**प्रकाशिका –** हे सुभ्रु हे सुदति हे मनस्विनि । सा त्वं स्वानामस्माकं वक्त्रं मुखं दर्शय । कीदृशम् । अनुरागभारेण व्रीडया विलंबो मधुरता तेन विलसद्धसितावलोको यस्मिन् । नीलालका एवालयः । तैरुपस्कृतं भूषितम् । उन्नसमुच्चनासिकम् । वल्गु वाक्यं यस्मिंस्तत् ॥२३॥

**तस्मिन् दधे दममहं तव वीरपत्नि योऽन्यत्र भूसुरकुलात् कृतकिल्बिषस्तम् ।**
**पश्ये न वीतभयमुन्मुदितं त्रिलोक्यां क्रुद्धस्य वै मुररिपोरितरत्र दासात् ॥ २४ ॥**

**प्रकाशिका –** हे वीरपत्नि । वीरस्य मम भार्ये । यो तव त्वयि कृतकिल्बिषस्तस्मिन्नहं भूसुरकुलाद्ब्राह्मणकुलादन्यत्रान्यस्मिन् मुररिपोर्हरेर्दासादितरत्रेतरस्मिन् दमं दण्डं दधे करोमि । किञ्च त्वदपराधीनं वीतभयं विगतभयमुन्मुदितमुच्चैर्मुदितं त्रिलोक्यामन्यत्र लोकत्रयाद्बहिरपि न पश्यामि । स यत्र स्थितस्तत्र मद्भयग्रस्त एव स्थास्यतीति भावः ॥ २४ ॥

**वक्त्रं न ते वितिलकं मलिनं विहर्षं संरम्भभीममविमृष्टमपेतरागम् ।**
**पश्ये स्तनावपि शुचोपहतौ सुजातौ बिम्बाधरं विगतकुङ्कुमपङ्करागम् ॥ २५ ॥**

**प्रकाशिका –** संरंभभीमं कोपेन भयङ्करमविमृष्टमलक्षितमनज्वलितमिति वा । अपेतरागं स्नेहशून्यम् । सुजातौ शौभनौ । शुचोपहतौ शोकाश्रुभिरुपहतौ । अत एव विगतः कुंकुमपरागो याभ्यां तौ । बिंबफलवदरुणम् । मधुरं पश्यन् अहं शं सुखं न पश्यामि ॥ २५ ॥

**तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य स्वैरं गतस्य मृगयां व्यसनातुरस्य ।
का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्यमुशती न भजेत कृत्ये ।। २६ ।।**

**प्रकाशिका –** तत्तस्मात्कृतं किल्बिषमपराधो येन । तस्य किल्बिषमेवाह ।। स्वैरं गतस्येति । स्वैरं स्वातन्त्र्येण त्वामपृष्ट्वा मृगयां गतस्येत्यर्थः । देवो देवनं क्रीडा तां रातीति देवरः पतिस्तम् । कुसुमास्त्रवेगस्तस्य वेगेन विस्रस्तं श्लथितं पौंस्यं पुरुषत्वं यस्य स तथा तम् । उशती कामयमाना । कृत्ये कर्तुं योग्येऽर्थे उपस्थिते सति का न भजेत् । सर्वाऽपि भजेदेव । अतो मयि कृपां कुर्वित्याशयः ।। २६ ।।

इति श्रीमद्भागवते चतुर्थस्कन्धे षड्विंशोऽध्यायः ।। २६ ।।

## अथ सप्तविंशोऽध्यायः ।

नारद उवाच–

इत्थं पुरञ्जनं सध्र्यग् वशमानीय विभ्रमैः ।
पुरञ्जनी महाराज रेमे रमयती पतिम् ॥ १ ॥

**प्रकाशिका** – ॥ हरिः ॐ ॥ सध्र्यक् सम्यक् । विभ्रमैर्विलासैः ॥ १ ॥

स राजा महिषीं राजन् रुचिराम्बरसंवृताम् ।
कृतस्वस्त्ययनां तृप्तामभ्यनन्ददुपागताम् ॥ २ ॥

**प्रकाशिका** – रुचिरेण कमनीयेनांबरेण वस्त्रेण संवृतां युक्तम् । कृतस्वस्त्ययनं मङ्गलं कुंकुमादिभिर्यया ताम् ॥ २ ॥

तयोपगूढः परिरब्धकन्धरो रहोऽनुमन्त्रैरपकृष्टचेतनः ।
न कालरंहो बुबुधे दुरत्ययं दिवा निशेति प्रमदापरिग्रहः ॥ ३ ॥

**प्रकाशिका** – उपगूढः परिरब्धकंधरः यस्या येन । रह एकान्तेऽनुमन्त्रैरनुकूलविचारैरपकृष्टं चेतनं स्वरूपज्ञानं यस्य । कालरंहः कालवेगम् । आयुर्व्यय इति यावत् । प्रमदैव परिग्रहो यस्य ॥ ३ ॥

शयानमुन्नद्धमदो महामना महार्हतल्पे महिषीभुजोपधे ।
तामेव वीरोऽमनुत व्यवायतस्तमोऽभिभूतो न निजं परं हि तत् ॥ ४ ॥

**प्रकाशिका** – महार्हतल्पे उत्कृष्टशय्यायां शयानो महिष्या भुजमुपाधिमुपरुंधानमुच्छीर्षकं यस्य। तस्मिंस्तां महिषीमेव परं केवलममनुत पुरुषार्थमित्यमन्यत । तत्र कारणमाह ॥ व्यवायेति । व्यवायतो मैथुनात्तमोऽभिभूत इति । परमित्यस्य व्यावर्त्यं दर्शयति ॥ निजमिति । निजमात्मीयं यत्प्रसिद्धं परं ब्रह्म तन्नामनुत नामन्यत ॥ ४ ॥

तस्यैवं रममाणस्य कामकश्मलचेतसः ।
क्षणार्धमिव राजेन्द्र व्यतिक्रान्तं नवं वयः ॥ ५ ॥

**प्रकाशिका** – व्यतिक्रान्तं गतप्रायमिवासीत् ॥ ५ ॥

**तस्यामजनयत् पुत्रान् पुरञ्जन्यां पुरञ्जनः ।**
**शतान्येकादश विराडायुषोऽर्धमथात्यगात् ॥ ६ ॥**

**प्रकाशिका** – विराट् संम्राट् ॥ ६ ॥

**दुहितॄर्दशोत्तरशतं पितृभ्रातृयशस्करीः ।**
**शीलौदार्यगुणोपेताः पौरञ्जन्यः प्रजापते ॥ ७ ॥**

**स पाञ्चालपतिः पुत्रान् पितृवंशविवर्धनात् ।**
**दारैः संयोजयामास दुहितॄः सदृशैर्वरैः ॥ ८ ॥**

**पुत्राणां चाभवन् पुत्रा एकैकस्य शतं शतम् ।**
**यैर्वै पौरञ्जनो वंशः पाञ्चालेषु समेधितः ॥ ९ ॥**

**प्रकाशिका** – पुरंजनकन्यात्वात्पौरंजन्यः । हे प्रजापते ॥ ७-९ ॥

**तेषु तद्रिक्थहारेषु गृहकोशानुजीविषु ।**
**निगूढेन ममत्वेन विषयेष्वन्वबध्यत ॥ १० ॥**

**प्रकाशिका** – विषयेष्वात्महितेषु ॥ १० ॥

**ईजे च क्रतुभिर्विप्रैर्दीक्षितः पशुमारकैः ।**
**देवान् पितॄन् भूतपतीन् नानाकामो यथा भवान् ॥ ११ ॥**

**प्रकाशिका** – देवान्काम्यफलदान् भूतपतीन् भैरवादीन् ॥ ११ ॥

**युक्तेष्वेवं प्रमत्तस्य कुटुम्बासक्तचेतसः ।**
**आससाद स वै कालो योऽप्रियः प्रिययोषिताम् ॥ १२ ॥**

**प्रकाशिका** – स वै प्रसिद्धः कालः संहारकः । गन्धर्वाधिपतिराससाद । प्रिया योषितो येषां तेषामप्रियः ॥ १२ ॥

**चण्डवेग इति ख्यातो गन्धर्वाधिपतिर्नृप ।**
**गन्धर्वास्तस्य बलिनः षष्ट्युत्तरशतत्रयम् ॥ १३ ॥**

**प्रकाशिका** – तस्य नामान्याह ॥ चण्डवेग इतीति ॥ १३ ॥

**गन्धर्व्यस्तावतीरस्य मैथुन्यश्च सितासिताः ।**
**परिवृत्त्या विलुम्पन्ति सर्वकामान् विनिर्मितान् ॥ १४ ॥**

**प्रकाशिका** – मैथुन्यो मिथुनीभूय वर्तमानाः सितासिताः केचिच्छुक्लाः केचित्कृष्णाः । परिवृत्या परिभ्रमणेन पुनः पुनरावर्तनेन कामान्विषयान्विलुंपन्ति क्षपयन्ति ॥ १४ ॥

**ते चण्डवेगानुचराः पुरञ्जनपुरीं यदा ।**
**हर्तुमारेभिरे तत्र प्रत्यषेधत् प्रजागरः ॥ १५ ॥**

**प्रकाशिका** – प्रजागरः पुररक्षणाय सदा जागरणशीलः ॥ १५ ॥

**स सप्तभिः शतैरेको विंशकेन शतं समाः ।**
**पुरञ्जनपुराध्यक्षो गन्धर्वैर्युयुधे बली ॥ १६ ॥**

**प्रकाशिका** – विंशकेन सहितैः सप्तभिः शतैर्विंशत्यधिकसप्तशतैरित्यर्थः । शतंसमाः शतवर्षपर्यन्तम् । गन्धर्वैर्गन्धर्वा गन्धर्व्यश्च गन्धर्वास्तैः ॥ १६ ॥

**क्षीयमाणे स्वसामर्थ्ये एकस्य बहुभिर्युधि ।**
**चिन्तां परां जगामार्तः सराष्ट्रपुरबान्धवः ॥ १७ ॥**

**प्रकाशिका** – राष्ट्रेण पुरुषेण बांधवैः सह वर्तमानः ॥ १७ ॥

**स एव पुर्यां मधुभुक् पाञ्चालेषु स्वपार्षदैः ।**
**उपनीतं बलिं गृह्णन् स्त्रीजितो नाविदद् भयम् ॥ १८ ॥**

**प्रकाशिका** – पाञ्चालेषु विद्यमानैः स्वपार्षदैरुपनीतं मधुभुक् सुखभोक्ता । भयं वैरिपराभवरूपं नाविंदन्नाज्ञासीत् ॥ १८ ॥

**कालस्य दुहिता काचित् त्रिलोकीं वरमिच्छती ।**
**पर्यटन्ती न बर्हिष्मन् प्रत्यनन्दत कश्चन ॥ १९ ॥**

**प्रकाशिका** – कालस्य गन्धर्वाधिपतेः । दुहिता जरा नाम्नी जराभिमानिनी ॥ १९ ॥

**दौर्भाग्येनात्मनो लोके विश्रुता दुर्भगेति सा ।**
**यां तुष्टो राजऋषये पितादात् पूरवे वरम् ॥ २० ॥**

**प्रकाशिका –** आत्मनः शरीरस्य दौर्भाग्येन सौन्दर्याभावेन लोके दुष्टो भगो यस्याः सा तथेति विश्रुतायां जरामुद्दिश्य तुष्टः पिता ययातिः । राजर्षये पुरूरवे स्वपुत्राय वरमदात् । स ययातिः शुक्रशापाज्जरां प्राप्य स्वपुत्रानुवाच । इमां यः स्वीकरिष्यति तस्मै ददामीति । तदा तां ज्येष्ठाश्चत्वारो न गृहीतवन्तः । पुरुस्तु जगृहे । ततो ययातिस्तस्मै वरं ददाविति भारते प्रसिद्धम् ॥ २० ॥

**कदाचिदटमाना सा ब्रह्मलोकान्महीं गतम् ।**
**वव्रे बृहद्व्रतं मां तु जानन्ती काममोहिता ॥ २१ ॥**

**प्रकाशिका –** बृहद्व्रतमूर्ध्वरेतसं जानन्नपि ब्रह्मलोकान्महीमागतं मां वव्र इत्यन्वयः । तत्र हेतुः ॥ काममोहितेति ॥ २१ ॥

**मयि संरभ्य विपुलमदाच्छापं सुदुःसहम् ।**
**स्थातुमर्हसि नैकत्र मद्याञ्चाविमुखो मुने ॥ २२ ॥**

**प्रकाशिका –** प्रख्यातवती मयि संरभ्य क्रोधं कृत्वा नैकत्र स्थातुमर्हसीति शापमदात् ॥२२॥

**ततो विहतसङ्कल्पा कन्यका यवनेश्वरम् ।**
**मयोपदिष्टमासाद्य वव्रे नाम्ना भयं पतिम् ॥ २३ ॥**

**प्रकाशिका –** सा कन्या यवनेश्वरं नानाऽऽधिव्याधीनामीश्वरं स्वामिनं भयं भयनामकं तस्याभिमानिनं वव्रे वरणाय प्रार्थनां चक्रे ॥ २३ ॥

**ऋषभं यवनानां त्वां वृणे वीरेप्सितं पतिम् ।**
**सङ्कल्पस्त्वयि भूतानां कृतः किल न रिष्यति ॥ २४ ॥**

**प्रकाशिका –** न रिष्यति न नश्यति ॥ २४ ॥

**द्वाविमावनुशोचन्ति बालावसदवग्रहौ ।**
**यल्लोकशास्त्रोपनतं न राति न तदिच्छति ॥ २५ ॥**

**तात्पर्यम् – 'अलौकिकं च शास्त्रीयं कर्तव्यं लौकिकं कुतः । लोकार्थं शास्त्रहा याति निरयं त्वितरः सुरानि'ति पाद्मे ॥ २५ ॥**

**प्रकाशिका –** असन्नवग्रह आग्रहो ययोस्तौ तथा बालौ स्वकार्यानभिज्ञौ । कौ तौ । लोकतः शास्त्रत उपनतमनिषिद्धतया प्राप्तं यत्तद्याचमानं यो न राति ददाति दीयमानं तद्यो नेच्छति न गृह्णाति

ताविमौ द्वौ प्रत्यनुशोचन्ति सन्तः । अत्र लोकशास्त्रोपनतमित्युक्त्या तदुभयप्राप्तपरित्यागे निन्दा क्रियते । न च सा संभवति । शास्त्रीयकर्तव्यसंरक्षणार्थं लौकिककर्तव्यपरित्यागस्यानिन्द्यत्वात् । अतोऽत्र विवक्षिततात्पर्यं प्रमाणेनैवाह ।। अलौकिकं चेति । लौकिकं शास्त्रीयं चेत्कर्तव्यमिति कुतः किं वाच्यमित्यर्थः । लोकार्थं लोकप्राप्तसंरक्षणार्थं शास्त्रहा तदुक्तपरित्यागी । इतरः शास्त्रसंरक्षणार्थं लोकप्राप्तपरित्यागी । तथा च मूले उभयपरित्यागीवैकमात्रपरित्यागी लोकार्थं शास्त्रपरित्यागी निन्द्यतयाऽभिप्रेतो न तु शास्त्रार्थं लौकिक-परित्याग्यपीति भावः ।। २५ ।।

**अथो भजस्व मां भद्र भजतीं मे दयां कुरु ।**
**एतावान् पौरुषो धर्मो यदार्ताननुकम्पते ।। २६ ।।**

**प्रकाशिका** – यस्मादिदं शास्त्रीयमथो तस्मात्पुरुषेण कर्तव्यो धर्मः पौरुषः ।। २६ ।।

**कालकन्योदितां वाचं निशम्य यवनेश्वरः ।**
**चिकीर्षुर्देवगुह्यं स सस्मितं तामभाषत ।। २७ ।।**

**प्रकाशिका** – यवनेश्वरो भयनामा मृत्युर्देवगुह्यं मरणं तद्धि प्राणिनां वैराग्यजननाय देवैर्गोप्यते । अथवा । देवस्य विधातुर्गुह्यं रहस्यं वक्ष्यमाणमर्थं सस्मितमभाषत ।। २७ ।।

**मया निरूपितस्तुभ्यं पतिरात्मसमाधिना ।**
**नाभिनन्दति लोकोऽयं त्वामभद्रामसम्मताम् ।। २८ ।।**

**प्रकाशिका** – आत्मसमाधिना ज्ञानदृष्ट्याऽयं लोकोऽसंमतां त्वां नाभिनन्दतीति यस्मात् ।२८।

**त्वमज्ञातमतिर्भुङ्क्ष्व लोकं कर्मविनिर्मितम् ।**
**याहि मे पृतनायुक्ता प्रज्वरस्त्वां प्रणेष्यति ।। २९ ।।**

**प्रकाशिका** – तस्मात्त्वमज्ञातगतिर्लोकं भुंक्ष्व । तथा च सर्वो लोकस्तव भोग्यो भविष्यतीत्याशयः । तथाऽपि पत्या भाव्यमित्यपेक्षायामाह ।। प्रज्वर इति । ज्वर इत्यर्थः । त्वां प्रणेष्यति गृहीष्यति ।। २९ ।।

**प्रज्वारोऽयं मम भ्राता त्वं च मे भगिनी भव ।**
**चराम्युभाभ्यां लोकेऽस्मिन्नव्यक्तो भीमसैनिकः ।। ३० ।।**

**प्रकाशिका** – भीमा भयंकराः सैनिकाः सेनापतयो यस्य स तथा ।। ३० ।।

इति श्रीमद्भागवते चतुर्थस्कन्धे सप्तविंशोऽध्यायः ।। २७ ।।

## अथ अष्टाविंशोऽध्यायः ।

**नारद उवाच–**

**सैनिका भयनाम्नो ये बर्हिष्मन् दिष्टकारिणः ।**
**प्रज्वारकालकन्याभ्यां विचेरुरवनीमिमाम् ॥ १ ॥**

**प्रकाशिका** – ॥ हरिः ॐ ॥ इदानीं पुरंजनस्य पुंदेहत्यागप्रकारकथनपूर्वकं स्त्रीजन्मप्राप्तिप्रकारमाह ॥ सैनिका इत्यादिना राजसिंहस्य वेश्मनीत्यन्तेन । दिष्टमादिष्टं तत्कारिणो मृत्योरादेशकारिण इत्यर्थः ॥ १ ॥

**त एकदा तु रभसा पुरञ्जनपुरीं नृप ।**
**रुरुधुर्भौमभोगाढ्यां जरत्पन्नगपालिताम् ॥ २ ॥**

**प्रकाशिका** – भौमभोगा अशनपानवसनादयः ॥ २ ॥

**कालकन्याऽपि बुभुजे पुरञ्जनपुरीं बलात् ।**
**ययाऽभिभूतः पुरुषः सद्यो निस्सारतामियात् ॥ ३ ॥**

**प्रकाशिका** – बुभुजे प्रविवेश ॥ ३ ॥

**तयोपभुज्यमानां वै यवनाः सर्वतो दिशम् ।**
**द्वार्भिः प्रविश्य सुभृशं प्रार्दयन् सकलां पुरीम् ॥ ४ ॥**

**तस्यां प्रपीड्यमानायामभिमानी पुरञ्जनः ।**
**अवापोरुविधांस्तापान् कुटुम्बी ममताकुलः ॥ ५ ॥**

**प्रकाशिका** – द्वार्भिर्नवभिः ॥ ४,५ ॥

**कन्योपगूढो नष्टश्रीः कृपणो विषयात्मकः ।**
**नष्टप्रज्ञो हृतैश्वर्यो गन्धर्वयवनैर्बलात् ॥ ६ ॥**

**विशीर्णां स्वपुरीं वीक्ष्य प्रतिकूलाननादृतान् ।**
**पुत्रपौत्रानुगामात्यान् जायां च गतसौहृदाम् ॥ ७ ॥**

**प्रकाशिका** – विषयात्मको विषयनिविष्टमानसः ॥ ६,७ ॥

**आत्मानं कन्यया ग्रस्तं पाञ्चालानरिदूषितान् ।**
**दुरन्तचिन्तामापन्नो न लेभे तत्प्रतिक्रियाम् ॥ ८ ॥**

**प्रकाशिका** – कन्यया जराख्यया निमित्तया ॥ ८ ॥

**कामानभिलषन् दीनो यातयामांश्च कन्यया ।**
**मतात्मसंविन्निस्स्नेहः पुत्रदारांश्च लालयन् ॥ ९ ॥**

**प्रकाशिका** – यातयामान् गतसारान् कामानभिलषन्विगतात्मगतिर्नष्टपरमात्मज्ञानोऽत एव निःस्नेहो विरुद्धस्नेहो वा ॥ ९ ॥

**गन्धर्वयवनाक्रान्तां कालकन्योपमर्दिताम् ।**
**हातुं प्रचक्रमे राजा तां पुरीमनिकामतः ॥ १० ॥**

**प्रकाशिका** – अनिकामतोऽनिच्छयाऽपि ॥ १० ॥

**भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः ।**
**ददाह तां पुरीं कृत्स्नां भ्रातुः प्रियचिकीर्षया ॥ ११ ॥**

**प्रकाशिका** – भ्रातुर्मृत्युनाम्नो हितकरेच्छया ॥ ११ ॥

**तस्यां संदह्यमानायां सपौरः सपरिच्छदः ।**
**कौटुम्बिकः कुटुम्बिन्या उपातप्यत सान्वयः ॥ १२ ॥**

**प्रकाशिका** – सपरिच्छदो भृत्यवर्गसहितः कुटुंबेनेदं दीव्यतीति कौटुंबिकः सान्वयः पुत्रादिसहितः ॥ १२ ॥

**यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया ।**
**पुर्यां प्रज्वारसंस्पृष्टः पुरपालोऽन्वतप्यत ॥ १३ ॥**

**प्रकाशिका** – पुरपालः पुरंजनः । अन्वतप्यतेति पुनरनुतापोक्तिरेकमात्रविवक्षया । पूर्वं तु कुटुंबादिसहितस्यातो न पुनरुक्तिरिति ध्येयम् ॥ १३ ॥

**न शेके सेवितुं तत्र पुरुकृच्छ्रोरुवेपथुः ।**
**गन्तुमैच्छत् ततो वृक्षकोटरादिव सानलात् ॥ १४ ॥**

**शिथिलावयवो यर्हि गन्धर्वैर्हृतपौरुषः ।**
**यवनैरररिभी राजन्नुपरुद्धो रुरोद ह ॥ १५ ॥**

**प्रकाशिका** – सानलादग्नियुताद्वृक्षकोटरादिव वृक्षबिलादिव ॥ १४,१५ ॥

**दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान् ।**
**स्मृत्वाऽवशिष्टं यत्किञ्चिद् गृहकोशपरिच्छदम् ॥ १६ ॥**

**प्रकाशिका** – दुहित्रादीन्दध्यावित्युत्तरेणान्वयः । जामयोऽत्र स्नुषाः । स्वत्वमात्रेण अवशिष्टं भोगेन प्रागेव क्षीणम् ॥ १६ ॥

**अहं ममेति स्वीकृत्य गृहेषु कुमतिर्गृही ।**
**दध्यौ प्रमदया दीनो विप्रयोग उपस्थिते ॥ १७ ॥**

**प्रकाशिका** – विप्रयोगे मरणे ॥ १७ ॥

**लोकान्तरं गतवति मय्यनाथा कुटुम्बिनी ।**
**वर्तिष्यते कथं त्वेषा बालकाननुशोचती ॥ १८ ॥**

**प्रकाशिका** – ध्यानमेवाह । लोकान्तरमिति ॥ १८ ॥

**न मय्यनशिते भुङ्क्ते नास्नाते स्नाति मत्परा ।**
**मयि तुष्टे सुसंतुष्टा भर्त्सिते यतवाग् भयात् ॥ १९ ॥**

**प्रकाशिका** – अनशितेऽभोजिते । भर्त्सिते भर्त्सने कृते । यतवाक् तूष्णीं भावमाश्रिता भवति ॥ १९ ॥

**प्रबोधयति माऽविज्ञं व्युषिते शोककर्षिता ।**
**वर्त्मैतद् गृहमेधीयं वीरसूरपि नेष्यति ॥ २० ॥**

**प्रकाशिका** – अविज्ञमविवेकिनं मा मां प्रबोधयति । व्युषिते देशान्तरं गते । गृहमेधीयं वर्त्म गृहधर्मं नेष्यति नानुवर्तिष्यति । मद्विरहमसहमाना मरिष्यतीत्यर्थः । तत्र पुत्रवत्या निषिद्धमिति सूचनाय वीरसूरपीत्युक्तम् ॥ २० ॥

**कथं नु दारिका दीना दारका मत्परायणाः ।**
**वर्तिष्यन्ते मयि गते भिन्ननाव इवोदधौ ॥ २१ ॥**

**प्रकाशिका –** दारकाः पुत्रा दारिकाः पुत्र्योऽपरायणा न विद्यते परमयनमाश्रयो येषां ते तथा। भिन्ना नौर्येषां ते भिन्ननावः ॥ २१ ॥

**एवं कृपणया बुद्ध्या शोचन्तमतदर्हणम् ।**
**ग्रहीतुं कृतधीरेनं भयनामाऽभ्यपद्यत ॥ २२ ॥**

**प्रकाशिका –** अतदर्हणं शोकायोग्यं मरणयोग्यमिति वा । वस्तुतस्तस्य तत्स्वभावत्वा-दित्याशयः ॥ २२ ॥

**पशुवद् यवनेनैष नीयमानः स्वकं क्षयम् ।**
**अन्वद्रुवन्ननुपथाः शोचन्तो भृशमातुराः ॥ २३ ॥**

**प्रकाशिका –** क्षयं स्थानम् । अनुपथाः भार्यादयः ॥ २३ ॥

**पुरीं विहायोपगत उपरुद्धो विहङ्गमः ।**
**तदा तमेवानुपुरी विशीर्णा प्रकृतिं गता ॥ २४ ॥**

**प्रकाशिका –** उपरुद्ध उपरुद्धपुरः । यदा भुजंगमः पुरीं विहायोपगतस्तदा तमनुपुरी विशीर्णा सति प्रकृतिं पञ्चभूतात्मतां गताम् ॥ २४ ॥

**विकृष्यमाणः प्रसभं यवनेन बलीयसा ।**
**नाविन्दत् तमसाऽऽविष्टः सखायं सुहृदं परम् ॥ २५ ॥**

**प्रकाशिका –** विकृष्यमाणः पुरंजनः । तमसाऽऽविष्टोऽज्ञाननिमित्तमोहं प्राप्तः सखायम-विज्ञातनामानं परं सदा सहवर्तमानं परमात्मानं सुहृदमनिमित्तबन्धुं नाविन्दन्नोऽस्मरत् ॥ २५ ॥

**तं यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना ।**
**कुठारैश्चिच्छिदुः क्रुद्धाः स्मरन्तो वैशसं तु तत् ॥ २६ ॥**

**प्रकाशिका –** अदयालुना क्रूरेण संज्ञप्ता हिंसिताः । वैशसं हिंसनम् । तुशब्देन हरिस्मरणाद्यंगसाकल्ये वैधुर्यं सूचयति ॥ २६ ॥

**अनन्तपारे तमसि मग्नो नष्टस्मृतिः समाः ।**
**शाश्वतीरनुभूयार्तीः प्रमदासङ्गदूषितः ॥ २७ ॥**

**प्रकाशिका** – अनन्तपारे बहुकालीने तमसि नरके शाश्वतीः समा आर्तिमनुभूय ॥ २७ ॥

**तामेव मनसा गृह्णन् बभूव प्रमदोत्तमा ।**
**अनन्तरं विदर्भस्य राजसिंहस्य वेश्मनि ॥ २८ ॥**

**प्रकाशिका** – तामेव मनसा गृह्णन् स्मरन् पूर्वम् मरणकाल इति शेषः । अनन्तरं नरकभोगानन्तरं प्रमदोत्तमा बभूव । सुंदरस्त्रीजन्म प्राप्तवानित्यर्थः । राजसिंहस्य राजश्रेष्ठस्य ॥ २८ ॥

**उपयेमे वीर्यपणां वैदर्भीं मलयध्वजः ।**
**युधि निर्जित्य राजन्यान् पाण्ड्यः परपुरञ्जयः ॥ २९ ॥**

**प्रकाशिका** – वीर्यपणां वीर्यमेव पणं मौल्यं यस्यास्ताम् ॥ २९ ॥

**तस्यां सञ्जनयांचक्रे आत्मजामसितेक्षणाम् ।**
**यवीयसः सप्तसुतान् सप्तद्रविडभूभृतः ॥ ३० ॥**
**एकैकस्याभवत् तेषां राजन्नर्बुदमर्बुदम् ।**
**भोक्ष्यते यद्वंशधरैर्मही मन्वन्तरं परम् ॥ ३१ ॥**

**प्रकाशिका** – द्रविडभूभृतो द्रविडदेशराजानः ॥ ३०,३१ ॥

**अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम् ।**
**यस्यां दृढच्युतो जात इध्मवासात्मजो मुनिः ॥ ३२ ॥**

**प्रकाशिका** – प्राक् प्रथमोत्पन्नां पूर्वमिध्मवाहात्मजः ॥ ३२ ॥

**विभज्य तनयेभ्यः क्ष्मां राजर्षिर्मलयध्वजः ।**
**आरिराधयिषुः कृष्णं स जगाम कुलाचलम् ॥ ३३ ॥**
**हित्वा गृहान् सुतान् भोगान् वैदर्भी मदिरेक्षणा ।**
**अन्वधावत पाण्ड्येशं ज्योत्स्नेव रजनीकरम् ॥ ३४ ॥**

**प्रकाशिका** – कृष्णं पूर्णानन्दमारिराधयिषुरपरोक्षीकर्तुकामः ॥ ३३,३४ ॥

**तत्र चन्द्रवटा नाम ताम्रपर्णी परोदका ।**
**तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो मृजन् ॥ ३५ ॥**

**प्रकाशिका** – तत्पुण्यसलिलैस्तासां चन्द्रवटादीनां सलिलैरित्यर्थः । आत्मनोऽन्तःकरण-स्योभयत्रान्तर्बहिर्विद्यमानं बाह्यं दुर्युक्तिमलं मृजन् शोधयन् ॥ ३५ ॥

**कन्दादिभिर्मूलफलैः पुष्पपर्णैस्तृणोदकैः ।**
**वर्तमानः शनैर्गात्रकर्षणं तप आस्थितः ॥ ३६ ॥**

**प्रकाशिका** – वर्तमानः शरीरयात्रां कुर्वाणः ॥ ३६ ॥

**शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये ।**
**सुखदुःखे इति द्वन्द्वान्यजयत् समदर्शनः ॥ ३७ ॥**

**प्रकाशिका** – अजयत्सहमानो वर्तते ॥ ३७ ॥

**तपसा विद्यया पक्वकषायो नियमैर्यमैः ।**
**युयुजे ब्रह्मणाऽऽत्मानं विजिताक्षानिलाशयः ॥ ३८ ॥**
**आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थितः ।**
**वासुदेवे भगवति नान्यद् वेदोद्वहन् रतिम् ॥ ३९ ॥**

**प्रकाशिका** – आत्मानमन्तःकरणं ब्रह्मणा युयुजे ब्रह्मज्ञानं चकारेत्यर्थः ॥ ३८,३९ ॥

**स व्यापकतयाऽऽत्मानं व्यतिरिक्ततयाऽऽत्मनि ।**
**विद्वान् स्वप्न इवामृश्य साक्षिणं विरराम ह ॥ ४० ॥**

**तात्पर्यम् – 'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीती'ति श्रुतिप्रसिद्धः । स्वप्न इवेति दृष्टान्तत्वेनोच्यते । स्वप्ने हि जीवस्यास्वातन्त्र्यं प्रसिद्धम् । अतस्तत्र परमेश्वराधीनत्वं प्रसिद्धमेव । अतो जीवव्यतिरिक्त ईश्वरः सिद्धः । 'स्वप्नो यतो न स्वतन्त्रस्तत्र तद्दर्शकः परः । जीवादन्यस्तु विज्ञेयः स विष्णुरवधार्यतामि'ति वाराहे ॥ ४० ॥**

**प्रकाशिका** – स मलयध्वज आत्मनि मनसि जीवे वा विद्यमानं साक्षिणं साक्षाद्द्रष्टारमात्मानं परमात्मानं स्वव्यापकतया स्वतन्त्रतयाऽत एव व्यतिरिक्ततया विद्वान्स्वप्ने इवामृश्य स्वप्ने यथा जीवव्यतिरिक्तेश्वरस्तदवस्थाप्रेरको विज्ञेयस्तथाऽत्राप्यामृश्य मनसि दृढीकृत्य विरराम संसारा-द्विरक्तो जीवन्मुक्त्यवस्थामापेत्यर्थः । हेत्यनेनात्र प्रमाणप्रसिद्धिं दर्शयति । अत्र स्वप्न इवेति दृष्टान्तोक्त्या स्वप्ने जीवव्यतिरिक्तेश्वरः सिद्ध इति सूचयति । तत्कथमित्यतो हेत्यनेनसूचितं प्रमाणं

दर्शयंस्तदुपपादयति ।। स्वप्नेनेति । प्रसिद्धजीवव्यतिरिक्तेश्वर इति शेषः । अनुमानेनापि तत्र जीवव्यतिरिक्तेश्वरसिद्धिं वक्तुमाह ।। स्वप्न इति । हिशब्दो यस्मादित्यर्थे । तत्र स्वप्ने परमेश्वराधीनत्वम् जीवस्येति शेषः । परमेश्वरस्य जीवस्वप्नावस्थाप्रदर्शकत्वमिति यावत् । इदानीमनुमानमाह ।। अत इति । स्वप्नावस्थाप्रदर्शकत्वात् । सिद्धः स्वप्न इति शेषः । तथा चेश्वरः स्वप्नावस्थायां जीव-व्यतिरिक्तस्तदा तस्य स्वप्नार्थप्रदर्शकत्वात् । न चासिद्धिः । जीवस्य तस्यामस्वातन्त्र्यात् । अन्यस्यासंभवात् । ईश्वर एव तत्सिद्धेः इत्युक्तं भवति । अत्र प्रमाणसंवादमाह ।। स्वप्न इति । परः स्वतन्त्रः स च विष्णुरन्यस्यासंभवात् । तस्माज्जीवादन्य इति अवधार्यतामित्यर्थः ।। ४० ।।

**साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृपः ।**
**विशुद्धज्ञानदीपेन स्फुरता विश्वतो मुखम् ।। ४१ ।।**

**प्रकाशिका** – केनेदं ज्ञानं प्राप्तमित्याशङ्कां परिहरन्नुक्तमेव विशदयति ।। साक्षादिति । विश्वतो मुखं यथा स्यात्तथा स्फुरता । बहुविषयकेणेति यावत् ।। ४१ ।।

**परे ब्रह्मणि चात्मानं परं ब्रह्म तथाऽऽत्मनि ।**
**वीक्षमाणो विहायेक्षामस्मादुपरराम ह ।। ४२ ।।**

**पतिं परमधर्मज्ञं वैदर्भी मलयध्वजम् ।**
**प्रेम्णा पर्यचरद्धित्वा भोगान् सा पतिदेवता ।। ४३ ।।**

**प्रकाशिका** – आत्मानं स्वात्मानमात्मनि स्वस्मिन् ईक्षां तादृशवृत्तिज्ञानमपि विहाय वाऽस्माच्छरीरात्संसाराद्वा । हेत्यनेन प्रमाणप्रसिद्धिं दर्शयति ।। ४२,४३ ।।

**चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा ।**
**बभावुपपतिं शान्ता शिखाशान्तमिवानलम् ।। ४४ ।।**

**प्रकाशिका** – उपपतिं पत्युः समीपे शिखाशान्तं ज्वालाशान्तं निर्धूमम् ।। ४४ ।।

**अजानती प्रियतमं यदोपरतमङ्गना ।**
**सुस्थिरासनमासाद्य यथा पूर्वमुपाचरत् ।। ४५ ।।**

**प्रकाशिका** – उपरतं मृतम् । अजानती । अज्ञाने कारणमाह ।। सुस्थिरेति । तदानीमपि सुस्थिरमासनं यस्येति ।। ४५ ।।

यदा नोपलभेताङ्घ्रावूष्माणं पत्युरर्चती ।
आसीत् संविग्नहृदया यूथभ्रष्टा मृगी यथा ॥ ४६ ॥
आत्मानं शोचती दीनमबन्धुर्विक्लवाऽश्रुभिः ।
स्तनावासिच्य विपिने सुस्वरं प्ररुरोद सा ॥ ४७ ॥
उत्तिष्ठोत्तिष्ठ राजर्षे इमामुदधिमेखलाम् ।
दस्युभ्यः क्षत्रबन्धुभ्यो बिभ्यतीं पातुमर्हसि ॥ ४८ ॥

प्रकाशिका – पत्युरङ्घ्रिमर्चती ॥ ४६-४८ ॥

एवं विलपती बाला विपिनेऽनुगता पतिम् ।
पतिता पादयोर्भर्तू रुदन्त्यश्रूण्यवर्तयत् ॥ ४९ ॥

प्रकाशिका – अवर्तयत्प्रवर्तयामास ॥ ४९ ॥

चितिं दारुमयीं कृत्वा तस्यां पत्युः कलेवरम् ।
आदीप्य चानुमरणे विलपन्ती मनो दधे ॥ ५० ॥

प्रकाशिका – आदीप्य दग्ध्वा ॥ ५० ॥

तत्र पूर्वतरः कश्चित् सखा ब्राह्मण आत्मवान् ।
सान्त्वयन् वल्गुना साम्ना तामाह रुदतीं प्रभो ॥ ५१ ॥

प्रकाशिका – सखा ईश्वरः । ब्राह्मणो ब्राह्मणरूपी । आत्मावान्मनस्वी । साम्ना प्रियवाक्येन ॥ ५१ ॥

का त्वं कस्यासि को वाऽयं शयानो यस्य शोचसि ।
जानासि किं सखायं मां येनाग्रे विचचर्थ ह ॥ ५२ ॥

प्रकाशिका – का किं जातिः कस्यासि कं पुरुषमाश्रित्य तिष्ठसि । यस्य शोचस्ययं शयानः कः । अग्रे पूर्वजन्मनि येन मया विचचर्थ सख्यसुखमनुभूतवानसि । तं मां जानासि किम् ॥५२॥

अपि स्मरसि चात्मानमविज्ञातसखं सखे ।
हित्वा मां पदमन्विच्छन् भौमभोगरतो गतः ॥ ५३ ॥

**प्रकाशिका** – यद्यपि मां न जानासि तथाऽप्यात्मानं त्वां चाविज्ञातसखमविज्ञातनाम कश्चिन्मे सखाऽऽसीदित्येवं स्मरसि किम् । सख इति पुल्लिङ्गेन संबोधनं प्राक्तनपुंस्त्वस्मरणाय । सख्यं स्मारयन्वैराग्यजननाय स्ववियोगकृतमनर्थमाह ॥ हित्वेति । पदं स्थानं मृगयार्थं वनं गत इत्यर्थः ॥ ५३ ॥

**हंसावहं च त्वं चार्य सखायौ मानसायनौ ।**
**अवात्स्व रमणौ चोभौ सहस्रपरिवत्सरान् ॥ ५४ ॥**
**स त्वं विहाय मां बन्धो गतो ग्राम्यमतिर्महीम् ।**
**विचरन् पदमद्राक्षीः कयाचिन्निर्मितं स्त्रिया ॥ ५५ ॥**

**प्रकाशिका** – हे आर्य प्राज्ञ । अहं त्वं च हंसौ शुद्धौ । सहस्रपरिवत्सरान् बहुकालं रमणौ रममाणौ अवात्स्व । मानससरोवराश्रयौ । मानसं हृदयम् ॥ ५४,५५ ॥

**पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् ।**
**षट्कुलं पञ्चविपणं पञ्चप्रकृति स्त्रीधवम् ॥ ५६ ॥**

**प्रकाशिका** – पञ्चारामा उपवनानि यस्मिन् त्रीणि कोष्टानि यस्मिन् षट्कलानि यस्मिन् पञ्च विपणं हृदा यस्मिन्पंचप्रकृतयो यस्मिन् । स्त्रीधवः पतिर्यस्मिन् ॥ ५६ ॥

**पञ्चेन्द्रियार्था आरामा द्वारो घ्राणादयः प्रभो ।**
**तेजोबन्नानि कोष्ठानि गोलकेन्द्रियसंग्रहः ॥ ५७ ॥**

**तात्पर्यम् – इन्द्रियाणि यत्र सङ्गृह्यन्ते स गोलकेन्द्रियसङ्ग्रहः ॥ ५७ ॥**

**प्रकाशिका** – इमं श्लोकमध्यात्मपक्षे स्वयमेव व्याख्याति ॥ पञ्चेति । श्रोत्रादि-पञ्चेन्द्रियाणामर्थाः शब्दादय आरामा भोगार्थत्वसाम्यात् । नवद्वारः प्राणादय इन्द्रियछिद्राणि । तेजोऽबन्नानि पृथिव्यप्तेजोभूतानि । षट्कलमाह गोलकेति । गोलकेन्द्रियेत्यनेनेन्द्रिय-संग्रहग्रहणमित्यस्याप्रतीतेरर्थमाह ॥ इन्द्रियाणीति । इन्द्रियाणि ज्ञानेन्द्रियाणि यत्र संगृह्यन्ते स गोलकः इन्द्रियसङ्ग्रहशब्देन विवक्षित इत्यर्थः । गोलकश्चासाविन्द्रियसङ्ग्रहश्चेति कर्मधारयः । कचित्स गोलक इन्द्रियसङ्ग्रह इत्येव पाठः ॥ ५७ ॥

**विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया ।**
**शक्त्यधीशः पुमानत्र प्रविष्टो नावबुद्धयते ॥ ५८ ॥**

**प्रकाशिका** – क्रियाणां कर्मणां जनने शक्तिर्यस्य कर्मेन्द्रियसमूहस्य स तथा । अव्यया प्रकृतिरुपादानं कार्यकारणनाशेऽपि नाशाभावादव्ययेत्युक्तम् । स्त्रीधवमित्यस्यार्थमाह ॥ शक्त्यधीश इति । शक्तिर्बुद्धिरधीशा यस्य स पुमान् । अत्र शरीराख्ये पुरे प्रविष्टोऽपि न पतित्वेनात्र बुद्ध्यते । बुद्ध्यधीनत्वात्किन्तु बुद्धेरेव पतित्वेनावबुद्ध्यते । अतः स्त्रीधवमित्युच्यते इत्यर्थः । एकः प्राणः पालो यस्येति स्पष्टत्वान्नोक्तम् । यद्यपीदमुत्तराध्याये एव वक्तव्यं तथाऽप्येतज्ज्ञानस्य वैराग्यजनकतया तत्कथनप्रसङ्गतयाऽत्रैवोक्तमिति मन्तव्यम् ॥ ५८ ॥

**तस्मिंस्त्वं रामया स्पृष्टो रममाणो हतस्मृतिः ।**
**तत्सङ्गादीदृशीं प्राप्तो दशां पापीयसीं विभो ॥ ५९ ॥**

**प्रकाशिका** – स्पृष्टोऽभिभूतो हतस्मृतिः शास्त्रज्ञानरहितः ॥ ५९ ॥

**न त्वं विदर्भदुहिता नायं वीर सुहृत् तव ।**
**न पतिस्त्वं पुरञ्जन्या रुद्धो नवमुखे यया ॥ ६० ॥**

**प्रकाशिका** – स्वाभाविकीस्थितिं वक्तुमाह ॥ न त्वमिति । स्वभावतो विदर्भदुहितानां नायं स्वभावतः पतिः । न पतिः स्वभावतः । नवद्वारे पुरे यथा रुद्धोऽसि ॥ ६० ॥

**माया ह्येषा मया सृष्टा यत् पुमांसं स्त्रियं पतिम् ।**
**मन्यसे नोभयं यद् वै हंसं पश्यात्मनो गतिम् ॥ ६१ ॥**

**प्रकाशिका** – तस्याः पूर्वजन्मनि पुमांसमिदानीं च स्त्रियं यन्मन्यसे माया प्रकृतिर्मयास्पृष्टत्वात् । बन्धकतयेति शेषः । प्रकृतिबन्ध निमित्तमेतदित्याशयः । नोभयं पूर्वतनः पुंदेह इदानींतन-स्त्रीदेहश्चेत्युभयं न स्वाभाविकमित्यर्थः । यद्यस्माच्च स्वभावतो हंसं निर्मलं स्वरूपं पश्य । आत्मनः परमात्मनो गतिं स्थितिं पश्य ॥ ६१ ॥

**अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भो ।**
**न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि ॥ ६२ ॥**

**तात्पर्यम्** – **'जीवसत्ताप्रदत्वाच्च सदृशत्वाच्च केशवः । कथ्यते तदभेदेन न तु जीवः स्वरूपत' इति च ॥ ६२ ॥**

**प्रकाशिका** – का सा परमात्मनो गतिरित्यपेक्षायामाह ॥ अहं भवानिति । अत्राभेदकथनस्य तात्पर्यं प्रमाणेनैवाह ॥ जीवसत्तेति । जीवस्वरूपतो जीवस्वरूपाभेदेनैव यतः केशव इति योजना

॥ तथा चायमर्थः ॥ भो जीव । भवानहं मत्तोऽन्यो मदधीनसत्ताको न । न केवलमेतावत् । किन्तु त्वमहं च मत्सदृशश्चेत्येवं विचक्ष्व । न स्वरूपाभेदेनेत्येवकारार्थः । तथा चास्योक्त-रूपप्रतिबिंबत्व एव तात्पर्यमित्याशयः । अत्र ज्ञानिप्रत्यक्षं प्रमाणयति ॥ ननाविति । जातु कदाचिदपि नावावयोर्मनागपीषदपि छिद्रमवकाशं नियम्यनियामकशून्यत्वं न पश्यन्ति । सर्वदैव जीवसत्ताप्रदत्वमीश्वरस्य पश्यन्तीत्यर्थः ॥ ६२ ॥

**यथा पुरुष आत्मानमेकमादर्शचक्षुषोः ।**
**द्विधाभूतमिवेक्षेत तथैवान्तरमावयोः ॥ ६३ ॥**

**प्रकाशिका** – नन्वेवं जीवस्य भगवत्प्रतिबिंबत्वे कथं जीवे दुःखादिरूपवैसादृश्यं कथं चैकप्रतिबिंबानां जीवानां मिथो वैचित्र्यमित्याशङ्काद्वयं दृष्टान्तमुखेन परिहरति ॥ यथेति । यथा पुरुष आदर्शाद्युपाधौ प्रतिबिम्बितमात्मानं स्वात्मानमेकविधं द्विधा वैसादृश्येन मालिन्यादि युक्ततयेक्षते । तथैवावयोरन्तरं वैसादृश्यमीक्षेत मालिन्यादिवत् । दुःखादिरूपवैसादृश्यमीक्षते । दुःखादिरूपं वैसादृश्यं देहाद्युपाधिकृतमित्याशयः । अत्रादर्श इत्येव वक्तव्ये चक्षुषोऽपि ग्रहणेन द्वितीयशङ्कोत्तरमपि सूचितम् । तथाहि । यथा पुरुष आत्मानं बिम्बरूपमेकमप्यादर्शे परचक्षुषि च प्रतिबिम्बितं द्विधाभूतं परस्परविलक्षणमीक्षते । तथैवैके भगवत्प्रतिबिंबानामस्माकमन्तरं परस्पर वैचित्र्यमीक्षेत बिम्बस्यैकत्वेऽपि दुःखाद्युपाधिवैचित्र्यात्प्रतिबिम्बवैचित्र्यमित्याशयः ॥ ६३ ॥

**एवं स मानसो हंसौ हंसेन प्रतिबोधितः ।**
**स्वस्थस्तद्व्यभिचारेण नष्टामाप पुनः स्मृतिम् ॥ ६४ ॥**

**प्रकाशिका** – मानसो हंसस्तत्तुल्यः । पुरंजनो हंसेन निर्मलत्वेन भगवता तद्व्यभिचारेण तद्वियोगेन नष्टां तिरोहिताम् ॥ ६४ ॥

**बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम् ।**
**यत् परोक्षप्रियो देवो भगवान् विश्वभावनः ॥ ६५ ॥**

**प्रकाशिका** – उक्तकथायाः कथं प्रकृतोपयोग इत्यपेक्षायामाह ॥ बर्हिष्मन्निति । आत्मानं जीवमधिकृत्य वर्तमानं संसारस्वरूपं पारोक्ष्येण राजकथामिषेण । अत्र हेतुः ॥ यद्यस्मादिति । परोक्षप्रियः परोक्षोपदेशप्रियः । प्रत्यक्षोपदेशोऽसुराणामपि ज्ञानप्राप्तिप्रसङ्गेन भगवतो न प्रिय इत्याशयः ॥ ६५ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे अष्टाविंशोऽध्यायः ॥ २८ ॥

## अथ एकोनत्रिंशोऽध्यायः ।

**प्राचीनबर्हिरुवाच –**

**भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते ।**
**कवयस्तद्विजानन्ति न वयं कर्ममोहिताः ॥ १ ॥**

**प्रकाशिका –** ॥ हरिः ॐ ॥ कथमुक्तकथाया अध्यात्मपरतेत्याशयेन राजा पृच्छति ॥ भगवंस्त इति । वचो राजकथारूपं कवयोऽध्यात्मविदोऽस्माभिरस्मादृशैः प्रवक्तृबोधकशक्त्य-भावपरिहारार्थं सम्यगिति । कर्ममोहिताः कर्मणैव पुरुषार्थो भवतीति भ्रमवन्तः ॥ १ ॥

**नारद उवाच–**

**पुरुषं पुरञ्जनं विद्याद् यद् व्यनक्त्यात्मनः पुरम् ।**
**एकद्वित्रिचतुष्पादं बहुपादमपादकम् ॥ २ ॥**

**प्रकाशिका –** पुरुषं मानुषजीवं पुरंजनशब्दवाच्यं विद्यात् । कथमित्यतस्तत्प्रयोगं दर्शयति ॥ यदिति । यद्यस्मादात्मनः स्वस्य पुरं सूक्ष्मदेहं व्यनक्ति कर्मवशात्स्थूलं करोति । ततश्च पुरं जनयतीति योग इत्युक्त इति ज्ञातव्यम् । तथा च पुरंजनगुणकर्मादिकं पूर्वमुक्तं तज्जैवमित्याशयः। कर्मवशाज्जायमानं पुरमपि नैकविधमित्याह ॥ एकेति । एकपादादिजातिजन्तुशरीरापेक्षया पिशाचशरीरमपेक्ष्य वा । द्वौ पादौ मनुष्यादेस्त्रयः पादो ज्वरादेश्चत्वारः पादः पश्वादेर्बहुपादः सहस्रपादादेरपादकं सर्पादि ॥ २ ॥

**योऽविज्ञाताह्वयस्तस्य पुरुषस्य सखेश्वरः ।**
**यन्न विज्ञायते रूपैर्नामभिर्वा क्रियागुणैः ॥ ३ ॥**

**प्रकाशिका –** तस्याविज्ञातनामासीत्सखेत्युक्तः प्रकृते क इत्यपेक्षायामाह ॥ योऽविज्ञाताव्हय इति । ईश्वरेऽविज्ञातनामार्थं दर्शयति ॥ यन्नेति । रूपैरित्यादि विशिष्टार्थकथनम् । तथा च न केनापि विशेषेण ज्ञात इत्यविज्ञातनामनिर्वचनं सूचयति । तथा चाविज्ञातनामकस्य सख्युर्यच्चेष्टितमुक्तं तदीश्वरसंबन्धीत्युक्तमिति ज्ञातव्यम् ॥ ३ ॥

**यदा जिघृक्षन् पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान् ।**
**नवद्वारं द्विहस्ताङ्घ्रि पुरं मनुत साध्विति ॥ ४ ॥**

**प्रकाशिका** – सोऽन्विष्यमाणशरणमित्यादिश्लोकत्रयस्य प्रकृते विवक्षितमर्थं दर्शयति ॥ यदेति। पुरुषो जीवो यदा प्रकृतेर्गुणान्विकारभूतान्विषयान्कात्स्न्र्येन सामस्त्येन जिघृक्षुर्गृहीतुमिच्छति तदा नवद्वारं पुरं साध्विति मनुते । पश्वादिशरीरव्यावृत्त्यर्थमुक्तं द्वौ हस्तावाङ्घ्री च यस्य तद्विहस्ताङ्घ्रीति । अङ्घ्रिमिति पाठे बिन्दुश्छान्दसः । अनेन लक्षितलक्षणमित्येतद्विवृतमिति ज्ञातव्यम् । तत्र तेषु पुरेषु मध्ये पश्वादिशरीराणि न सर्वविषयभोगाय पर्याप्तानि मनुष्यशरीरं तु तादृशमिति ज्ञातवानिति जीवपक्षे श्लोकत्रयार्थो ज्ञातव्य इति भावः । तथा च नवद्वारपुरसंबन्धि यत्कालकन्याभिभूतत्वादिकमुक्तं तस्य मनुष्यशरीरस्योक्तमिति ज्ञातव्यम् ॥ ४ ॥

**बुद्धिं तु प्रमदां विद्यान्ममाहमिति यत्कृतम् ।**
**यामधिष्ठाय देहेऽस्मिन् पुमान् भुङ्क्तेऽक्षिभिर्गुणान् ॥ ५ ॥**

**प्रकाशिका** – प्राकारोपवनेत्यादिश्लोकषट्कोक्तं पुरवर्णादिकं न जीवपक्षेऽभिप्रेतमत एव तदन्यत्तस्य केवलमित्युक्तमित्याशयेन तद्विहाय यदृच्छयाऽऽगतां तत्रेत्यस्य प्रकृते तात्पर्यमाह ॥ बुद्धिमिति । तुशब्दोऽन्तःकरणविशेषद्योतकः । अत एव ममाहमिति ज्ञानं यद्यया कृतमिति बुद्धेः प्रमदात्वं कथमित्यतो भोगसाधनत्वसाम्यादित्याशयेनाह ॥ यामिति । अधिष्ठायाश्रित्याक्षिभिरिन्द्रियैर्गुणान्विषयान् । अनेन प्रकर्षेण मदयति सुखयति प्रमदेति निर्वचनं सूचितम् ॥५॥

**सखाय इन्द्रियगणो ज्ञानं कर्म च यत्कृतम् ।**
**सख्यस्तद्वृत्तयः प्राणः पञ्चवृत्तिर्यथोरगः ॥ ६ ॥**

**प्रकाशिका** – भृत्यैर्दशभिरित्यस्य तात्पर्यमाह ॥ सखाय इति । अनेन पूर्वमुक्तो भृत्यशब्दः सखिपर इति सूचयति । कुत इन्द्रियगणस्य सखित्वमित्यत उपकारित्वसाम्यादित्याशयेनाह॥ ज्ञानमिति । यद्येन इन्द्रियगणेन । एकैकशतनायकैरित्यत्रोक्ता नायकाः प्रकृते का विवक्षिता इत्यपेक्षायामाह ॥ सख्यस्तद्वृत्तय इति । तेषामिन्द्रियाणां वृत्तयः । कार्याणि ज्ञानकर्मरूपाणि । सख्यो नायकाः । तथा च नायकशब्दः सखिपर इति भावः । पञ्चशीर्षाहिनेत्युक्ताहिस्थानीयः क इत्यत आह ॥ प्राण इति । बाह्यपुरे यथा पञ्चशीर्षोहिः पालक उक्तस्तथा तत्स्थानीयोऽत्र पञ्चवृत्तिः प्राण इत्यर्थः । उरस्तु वक्षसि श्रेष्ठ इत्यभिधानादुरः श्रेष्ठश्च गमको ब्रह्मप्रापकश्चेत्युरगो मुख्यप्राणः स एनान् गमयतीति श्रुतेरन्यत्रोरसा वक्षसा गच्छतीत्युरगः सर्पः पञ्चवृत्तिः । पञ्चधा वृत्तिर्यस्य स पञ्चवृत्तिविस्तृतव्यापारो वा ॥ ६ ॥

**बृहद्बलं मनो विद्यादुभयेन्द्रियनायकम् ।**
**पञ्चालाः पञ्चविषयाः यन्मध्ये नवखं पुरम् ॥ ७ ॥**

**प्रकाशिका –** तेषां परिवृढ इत्यत्रोक्तं परिवृढं प्रकृते दर्शयति ।। बृहद्बलमिति । बृहद्बलं यस्मादित्यर्थः । अनेन सर्वेषां बलमुद्वहन्नित्येतदनूदितमिति ज्ञातव्यम् । उभयेन्द्रियनायकमित्यनेन परिवृढत्वम् । कर्म ज्ञानेन्द्रियाणां विषयं प्रति नेतृत्वात् । दक्षिणपाञ्चालमुत्तरपाञ्चालमित्यत्र पाञ्चाल शब्दार्थमाह ।। पञ्चाला इति । नन्वेवं पुरंजनपुरवच्छरीरस्यापि दक्षिणोत्तरविषयमध्यस्थेन भाव्यमित्यतस्तदप्यस्तीत्याह ।। यन्मध्य इति । दक्षिणोत्तरमध्य इत्यर्थः । नवखं नवछिद्रं पुरं शरीरम् । अन्वेषमाणमृषभमित्यारभ्य ह्रदिनीमाविशच्छुचावित्यन्तमपि तदन्यत्तस्य केवलमिति वचनाद्राजपक्ष एव योज्यम् । सुप्तायामपि जागर्ति नागोऽयं पालयन्पुरीमित्यनेन सुप्त्यवस्थायां बुद्ध्याद्युपरमेऽपि प्राणो जागर्तीति सूचयति । सप्तोपरिकृता द्वार इत्यादेः शरीरपक्षयोजना स्पष्टमेव ।। ७ ।।

**अक्षिणी नासिके कर्णौ मुखं शिश्नगुदाविति ।**
**द्वे द्वे द्वारौ बहिर्याति तत्तदिन्द्रियसंयुतः ।। ८ ।।**

**प्रकाशिका –** खद्योताविर्मुखेत्यादेः संक्षेपेणार्थमाह ।। अक्षिणीति । द्वे द्वे द्वारौ खद्योतादि शब्दवाच्यतयाऽत्र विवक्षिते । ताभिर्बहिर्याति बाह्यार्थानवगच्छति । द्युमत्सखोऽवधूतसख इत्यादेस्तात्पर्यं तत्तदिन्द्रियसंयुत इति । अत्रेन्द्रियशब्देनाभिमानिदेवा अपि ग्राह्याः ।। ८ ।।

**अक्षिणी नासिके आस्यमिति पञ्च पुरस्कृताः ।**
**दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः ।। ९ ।।**

**प्रकाशिका –** पञ्चद्वारस्तु पौरस्त्या इत्यत्रोक्ताः पञ्चद्वारः प्रकृते दर्शयति ।। अक्षिणीति । पुरः पूर्वभागे कृताः । दक्षिणैकातथोत्तरेत्येतदनूद्य व्याख्याति दक्षिणेति दक्षिणद्वाः प्रकृते दक्षिणः कर्णो विवक्षित इत्यादिरूपयोजना । उत्तरो वामः ।। ९ ।।

**पश्चिमे इत्यधोद्वारौ गुदशिश्नाविहोदिते ।**
**खद्योताविर्मुखी चात्र नेत्रे एकत्र निर्मिते ।। १० ।।**

**प्रकाशिका –** पश्चिमे द्वे इत्युक्तस्यार्थमाह ।। पश्चिमे इतीति । पश्चिमे इत्यनेनोक्ते द्वेऽधो द्वारौ गुदशिश्ननामके इह जीवपक्षे उदिते । खद्योताविर्मुखीत्यादिकस्य मोहं प्रसादं हर्षं वा यातीत्यस्य प्रकृते विवक्षितमर्थं क्रमेण दर्शयति ।। खद्योतेति । खद्योताविर्मुखी शब्दाभ्यामत्र जीवपक्षे नेत्रे एव विवक्षिते इत्यर्थः । अत्र खद्योतादिशब्दानां नेत्रादिषु निर्वचनप्रकारः सर्वज्ञकृत-ग्रन्थादवगन्तव्यः ।। १० ।।

**रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः ।**
**नलिनी नालिनी नासे गन्धः सौरभ उच्यते ।। ११ ।।**

**प्रकाशिका** – ताभ्यां विभ्राजितमित्यनूद्य रूपमिति व्याख्यातम् । बहिर्यातीत्यस्य तात्पर्यम् ।। रूपं चक्षुषा विचष्ट इति । जीवो न तत्र स्वतन्त्रः किं त्विश्वर एवेति प्रदर्शनायेश्वर इत्युक्तम् । नलिनीनालिनी शब्दाभ्यां प्रकृते वासे विवक्षिते । सौरभशब्देनात्र गन्ध उच्यत इत्यर्थः ।। ११ ।।

**घ्राणोऽवधूतो मुख्याऽऽस्यं विपणो रसविद् रसः ।**
**आपणो व्यवहारोऽत्र चित्रमन्धो बहूदनम् ।। १२ ।।**

**प्रकाशिका** – अवधूत इत्यनूद्य घ्राण इति व्याख्यानम् । मुख्येत्यनूद्यास्य इति व्याख्यानम् । रसज्ञविपणान्वित इत्यत्र विपणरसज्ञपदयोरर्थमाह ।। विपण इति । विपणशब्देन वागिन्द्रियं विवक्षितमित्यर्थः । रसविद्रसज्ञस्तच्छब्दवाच्यो रसो रसनेन्द्रियमित्यर्थः । आपणबहूदन शब्द-योरर्थमाह ।। आपण इति । अत्र जीवपक्षे बहूदनशब्दार्थश्चित्रमन्धश्चित्रान्नमित्यर्थः ।। १२ ।।

**पितृभूर्दक्षिणः कर्ण उत्तरो देवभूः स्मृतः ।**
**प्रवृत्तं च निवृत्तं च शास्त्रं पाञ्चालसंज्ञितम् ।। १३ ।।**

**प्रकाशिका** – देवभूर्दक्षिणकर्णः पितृभूरुत्तरो वामकर्ण इति योज्यम् । दक्षिणोत्तरपाञ्चाल शब्दयोरर्थान्तरमाह ।। प्रवृत्तमिति । प्रवृत्तं प्रवृत्तकर्माभिधायकम् । निवृत्तं निवृत्तकर्माभिधायकम् ।। १३ ।।

**पितृयानं देवयानं श्रोत्रात् श्रुतधरो व्रजेत् ।**
**आसुरी मेढ्र मर्वाग् द्वार्व्यवायो ग्रामिणां रतिः ।। १४ ।।**
**उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते ।**
**वैशसं नरकं पायुर्लुब्धकोऽन्धौ तु मे शृणु ।। १५ ।।**

**प्रकाशिका** – प्रवृत्तनिवृत्तकर्माभिधायकग्रन्थान्तरविरोधपरिहारायाह ।। पितृयानं देवयान-मिति। निवृत्तकर्माभिधायकशास्त्रं देवयानसाधनत्वाद्देवयानशब्देनोच्यते । तथा प्रवृत्तकर्माभि-धायकशास्त्रं पितृयानसाधनत्वात्पितृयानशब्देनोच्यते । अतो ग्रन्थान्तरे पितृयानादिकं व्रजेदित्युक्तावपि न विरोध इत्याशयः । श्रुतधरान्वित इत्यस्य व्याख्यानम् ।। श्रुतिधरो व्रजेदिति । ततः श्रुतिधर शब्दार्थमाह ।। श्रोत्रादिति । व्रज्रेद्व्रजति । आसुरीशब्दार्थमाह ।।

आसुरीमेढ्रमिति । अर्वाक् द्वा अर्वाक् द्वारवत्वेनोक्ता । आसुरीं मेढ्रं गुह्येन्द्रियस्थानमित्यर्थः । ग्राम्यकं नाम विषयमित्यस्यार्थमाह ॥ ग्रामिणां रतिरिति । तथा च ग्रामशब्दो ग्रामिपरः कशब्दो रतिवाचीति भावः । एवमर्थतस्तदुपपाद्यार्थमाह ॥ व्यवायो मैथुनमिति ॥ १४,१५ ॥

**हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च ।**
**अन्तःपुरं च हृदयं विषूचिर्मन उच्यते ॥ १६ ॥**

**प्रकाशिका** – विषूचीनपदार्थानुवादः विषूचिरिति । तद्गुणैर्मनोगुणैस्तम आदिभिः ॥ १६ ॥

**तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः ।**
**यथा यथा विक्रियते गुणाक्तो विकरोति वा ॥ १७ ॥**

**प्रकाशिका** – महिषीयद्यदीहेतेत्यादेरर्थं संगृह्याह ॥ यथेति । बुद्धिर्यथा यथा विक्रियते श्रोत्रादीन्द्रियानुग्राहिका सती श्रवणादिवृत्तिरूपेण विक्रियते विकारं प्राप्नोति । वाशब्दो व्यवस्थितविकल्पे । कदाचिद्वागादिकर्मेन्द्रियानुग्राहिका सती विकरोति विविधं कर्म करोति । करणे कर्तृत्वोपचारः ॥ १७ ॥

**तथा तथोपद्रष्टाऽऽत्मा तद्वृत्तिरिति कीर्त्यते ।**
**देहो रथस्त्विन्द्रियाश्वः संवत्सरवयोगतिः ॥ १८ ॥**

**प्रकाशिका** – तथा तथा गुणोक्तः सत्त्वादिगुणबद्ध आत्मा जीवस्तद्वृत्तिः । अत्र वृत्तिशब्द उभयेन्द्रियकार्यपरः । तथा च सोभयेन्द्रियजन्या वृत्तिर्यस्य स तथा कीर्त्यते । कुतः । यत उपद्रष्टा बुद्ध्यादिकरणसमीपे द्रष्टतया कर्मतया चायमेव व्यवस्थितः । तथा च क्वचित् शृणोति शृण्वन्त्यामित्यादेः क्वचिद्गायति गायन्त्यामित्यादेश्च सर्वस्य सङ्ग्रहो भवतीति ज्ञातव्यम् ॥

रथं च पञ्चाश्वमाशुगमित्यादेः प्रकृते विवक्षितमर्थमाह ॥ देहो रथ इत्यादिना । पञ्चेन्द्रियाण्येवाश्वा यस्य स तथा । आशुगमित्येतद्व्याचष्टे ॥ संवत्सरेति । संवत्सरलक्षणै-र्वयोभिर्गतिर्यस्य स तथा ॥ १८ ॥

**द्विकर्मचक्रस्त्रिगुणध्वजः पञ्चासुबन्धुरः ।**
**मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वन्द्वकूबरः ॥ १९ ॥**

**प्रकाशिका** – द्वेऽहंममतालक्षणे इषे दण्डिके यस्येति द्वीषमिति स्पष्टत्वान्न व्याख्यातम् । द्विचक्रमित्यस्यार्थमाह ॥ द्विकर्मेति । द्वे पुण्यपापलक्षणे कर्मणी चक्रे यस्य । एकः सूत्रात्मा

वायुरक्षो यस्येत्यपि स्पष्टत्वान्न व्याख्यातम् । त्रिवेणुमित्यस्यार्थमाह ।। त्रिगुणध्वज इति । त्रयः सत्त्वादिगुणा एवात्र ध्वजस्थानीया इत्यर्थः पञ्चबन्धुरमित्यस्यार्थः ।। पञ्चास्विति । पञ्चासवः प्राण एव बन्धुरा बन्धनस्थानीया यस्य । एकरश्मिरित्यस्यार्थः ।। मनोरश्मिरिति । एकदमनमित्यस्यार्थः ।। बुद्धिः सूत इति । एकनीडमित्यस्यार्थः ।। हृन्नीड इति । द्विकूबरशब्दार्थमाह ।। द्वन्द्वेति । द्वौ शीतोष्णादिरूपो द्वन्द्वौ कूबरौ यस्येत्यर्थः ।। १९ ।।

**पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः ।**
**आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति ।। २० ।।**

**तात्पर्यम् – 'सुखवद्दूरतो दृश्यं तत्काले दुःखमेव यत् । मृगतृष्णेत्यतः प्राहुर्भोगं वैषयिकं बुधा' इति शब्दनिर्णये ।। २० ।।**

**प्रकाशिका –** पञ्चप्रहरणमित्येतद्व्याचष्टे ।। पञ्चेन्द्रियेति । पञ्चानामिन्द्रियाणां स्वार्थेषु प्रहरणं प्रक्षेपः सन्निकर्ष आयुधस्थानीयो यस्मिन्नित्यर्थः । सप्तवरूथमित्यस्यार्थमाह ।। सप्त धात्विति । पञ्चविक्रममित्यत्र विक्रमशब्दस्य विवक्षितमर्थमाह ।। आकूतिरिति । आकूतिरभिप्रायः । तथा च पञ्चसु विषयेषु विक्रम आकूतिर्यस्येति पञ्चविक्रममित्येतद्व्याख्येयमिति भावः । आकृतिरिति पाठे पञ्चभिः कर्मेन्द्रियैः आ सम्यक् कृतिः करणं यस्येति व्याख्येयम् । हेमोपस्करमारुह्य स्वर्णवर्माक्षयेषु धीरित्येतदपि तदन्यत्तस्य केवलमिति राजपक्षे एवं योज्यम् । पञ्चप्रस्थमगाद्वन-मित्यस्यार्थमाह ।। बाह्य इति । बाह्ये बहिर्विद्यमानपञ्चविषयभोगार्थं मृगतृष्णां मरुमरीचिकाजलं प्रतीव धावति । बाह्य इत्यनेन पञ्चप्रस्थेत्यत्र मृगतृष्णामित्यनेन वनमित्यस्यार्थ उक्तः । लुप्तोपमेयमिति ज्ञातव्यम् । अत्र मृगतृष्णादृष्टान्तकथनेन वैषयिकभोगस्य मिथ्यात्वमुच्यत इति भाति । अतस्तदभिप्रायं प्रमाणेनैव दर्शयति ।। सुखवदिति । यद्यस्मात्कारणाद्दूरतः सुखवत्सुखसाधनवद्दृश्यते तत्काले तत्प्राप्तिकाले दुःखमेव दुःखसाधनमेवात एव तस्मादेव साधर्म्याद्वैषयिकं भोगं मृगतृष्णेति प्राहुर्न मिथ्यात्वादित्यर्थः ।। २० ।।

**एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत् ।**
**संवत्सरश्चण्डवेगः कालो येनोपलक्षितः ।। २१ ।।**

**प्रकाशिका –** एकादशचमूनाथ इत्यस्यार्थमाह ।। एकादशेन्द्रियाण्येव चमूर्यस्येति । चचार मृगयां तत्रेत्यादेस्तात्पर्यमाह ।। पञ्चसूनेति । विषयभोगार्थं छेदभेदनादिरूपं पञ्चसूना-लक्षणविनोदकृत् । तत्करणसमयेन पापशङ्केति सूचनाय विनोद कृदित्युक्तम् । प्रधावतीति पूर्वेणान्वयः ।।

ततः क्षुत्तृट्परिश्रान्त इत्यारभ्य कुटुंबासक्तचेतस इत्यन्तं जीवसंसारासक्तिप्रदर्शनार्थं प्रवृत्तं राजपक्ष एव योज्यमित्याशयेन तावत्त्यक्त्वाऽऽससाद स वै काल इत्यादेस्तात्पर्यमाह ॥ संवत्सर इत्यादिना । चण्डवेगशब्दवाच्यः प्रकृते संवत्सरो विवक्षित इत्यर्थः । स एव द्विपरार्धादिकाल-ज्ञापकत्वात्काल शब्दवाच्य इत्याशयेनाह ॥ काल इति । येन संवत्सरेण कालो द्विपरार्धायुर्लक्षण उपलक्षितो ज्ञातव्यः ॥ २१ ॥

**तस्याहानीह गन्धर्वा गन्धर्व्यो रात्रयः स्मृताः ।**
**हरन्त्यायुः परिक्रान्त्या षष्ट्युत्तरशतत्रयम् ॥ २२ ॥**

**प्रकाशिका** – परिक्रान्त्या परिभ्रमणेन ॥ २२ ॥

**कालकन्या जरा साक्षाल्लोकस्तां नाभिनन्दति ।**
**स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः ॥ २३ ॥**

**प्रकाशिका** – कालस्य कर्मानुसारिज्ञापनाय प्रवृत्तं ते चण्डवेगानुचरा इत्यारभ्य नाविदद्भय-मित्यन्तं राजपक्ष एव याज्यमित्याशयेन तत्परित्यज्य कालस्य दुहितेत्यादेस्तात्पर्यमाह ॥ कालकन्येति या कालकन्योक्ता सा जरेत्यर्थः । साक्षादित्यनेन दिवसादीनां यथा गन्धर्वादि-स्थानीयत्वेन ततो भेदो न तथाऽत्रेति सूचयति । जरा शब्देन तदभिमानिन्यपि विवक्षिता ॥

यो यवनेश्वर उक्तः सोऽत्र मृत्युः क्षयाय । जगत इति शेषः । स्वसारं जगृहे भगिनीत्वेन जगृहे। उभयोरपि कालजन्यत्वात् । न भार्यात्वेनेत्याशयः ॥ २३ ॥

**आधयो व्याधयस्तस्य सैनिकाः यवनाः खलाः ।**
**भूतोपसर्गा अरयः प्रज्वारो विविधो ज्वरः ॥ २४ ॥**

**प्रकाशिका** – लोकानां क्षयाय यवनेश्वर इत्युक्तयवनानाह ॥ आधय इति । चरा वनसंचारिण इत्यर्थः । यवनैररिभी राजन् उपरुद्ध इत्यत्रारिशब्द विवाक्षितानाह ॥ भूतोपसर्गा इति । ग्रहोपद्रवा इत्यर्थः । विविधः शीतोष्णरूपेण ॥ २४ ॥

**एवं बहुविधैर्दुःखैर्दैवभूतात्मसंभवैः ।**
**क्लिश्यमानः शतं वर्षं देहे देही तमोवृतः ॥ २५ ॥**

**प्रकाशिका** – एवं परोक्षत्वेनोक्तार्थं व्याख्याय सज्जनानुग्रहाय स्पष्टमेवोपदिशति ॥ एवमित्यारभ्य विचक्रमेणेत्यन्तेन ॥ २५ ॥

**प्राणेन्द्रियमनोधर्मानात्मन्यध्यस्य निर्गुणः ।**
**शेते कामलवं ध्यायन् ममाहमिति कर्मकृत् ॥ २६ ॥**

**प्रकाशिका** – प्राणधर्माः श्वासादय इन्द्रियधर्मा ज्ञानानि कर्माणि च मनोधर्माः सुखदुःखादयः । तथा च प्राणेन्द्रियमनांसि तद्धर्माश्चात्मनि स्वस्मिन्ममाहमित्यध्यस्य ममैतानि प्राणेन्द्रियमनांसि तद्धर्माणामहमेव कर्तेत्यारोप्येत्यर्थः । अध्यासत्वोपपादनायोक्तम् ॥ निर्गुण इति स्वातन्त्र्येणोक्तकार्यरहितेत्यर्थः । अध्याससाध्यमाह ॥ कामेति । कामलवं विषयसुखलेशा-नित्यर्थः ध्यायंस्तदनुसारि कर्मकृत् देहे शेत इत्यन्वयः ॥ २६ ॥

**यदाऽऽत्मानमविज्ञाय भगवन्तं परं गुरुम् ।**
**पुरुषस्तु विषज्जेत गुणेषु प्राकृतेष्वदृक् ॥ २७ ॥**

**प्रकाशिका** – एतदेव विशदयति ॥ यदात्मानमिति । तमोवृत इत्यस्यार्थः ॥ अदृक् अज्ञानीति । यदा भगवन्तमात्मानं स्वान्तर्नियामकमविज्ञाय प्राकृतेषु प्रकृतिनिर्मितेषु गुणेष्विन्द्रियादिकार्येषु विषज्जते ममाहमित्यध्यासवान् भवति ॥ २७ ॥

**गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः ।**
**शुक्लं कृष्णं लोहितं वा यथाकर्माभिजायते ॥ २८ ॥**

**प्रकाशिका** – तदा गुणाभिमानी देहेन्द्रियाद्यभिमानी जीवः शुक्लं सात्त्विकं कृष्णं तामसं लोहितं राजसं वेत्येवं रूपाणि कर्माणिकुरुते । तत्र स्वातन्त्र्यवारणायावशः परमात्मवशः सन्नित्युक्तम् । वा शब्दान्न सात्त्विकादिकर्मणां यौगपद्यमिति सूचयति । ततः किमित्यत आह ॥ यथाकर्मेति । सात्त्विकादिकर्मानुसारेण सात्त्विकादिजन्म प्राप्नोतीत्यर्थः ॥ २८ ॥

**शुक्लान् प्रकाशभूयिष्ठान् लोकानाप्नोति कर्हिचित् ।**
**दुःखोदर्कान् क्रियायासान् तमश्शोकोत्कटान् क्वचित् ॥ २९ ॥**

**प्रकाशिका** – एतदेव प्रकाशयति ॥ शुक्लानिति द्वाभ्याम् । प्रकाशो भूयिष्ठो येषु तान् लोकान्देवादिदेहान् । दुःखोदर्कं सुखापेक्षयोत्कृष्टं येषु तान् क्रिययाऽऽयासो येषु तान् क्रिययाऽऽयासो येषु मनुष्यदेहान् लोहितादाप्नोति । तमोऽज्ञानं तमःशोकावुत्कृष्टौ येषु तान्पश्वादिदेहान्कृष्णादाप्नोति ॥ २९ ॥

**क्वचित् पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः ।**
**देवो मनुष्यस्तिर्यग् वा यथाकर्मगुणं भवः ॥ ३० ॥**

**प्रकाशिका** – कचित्कचिदिति बहुजन्मापेक्षया । नोभयं नपुंसकत्वं प्रकाशभूयिष्ठानित्युक्तं प्रपञ्चयति ॥ देव इति । यथाकर्मगुणं कर्मगुणावनतिक्रम्य भवो जन्म ॥ ३० ॥

**क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम् ।**
**चरन् विन्दति यद् दिष्टं दण्डमोदनमेव वा ॥ ३१ ॥**

**प्रकाशिका** – तेषु जन्मसु दैववशेन सुखदुःखे प्राप्नोतीति सदृष्टान्तमाह ॥ क्षुत्परीत इति द्वाभ्याम् । क्षुधया परीतो व्याप्तः सारमेयः श्वा । दण्डं ताडनम् ॥ ३१ ॥

**तथा कामाशयो जीव उच्चावचपथा भ्रमन् ।**
**उपर्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम् ॥ ३२ ॥**

**प्रकाशिका** – कामेषु विषयेष्वाशयोऽन्तःकरणं यस्य स तथा दिष्टं दैवतः प्राप्तम् ॥ ३२ ॥

**दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु ।**
**जीवस्य न व्यवच्छेदः स्याच्चेत् तत्तत्प्रतिक्रिया ॥ ३३ ॥**

**तात्पर्यम् – तत्प्रतिक्रियाऽपि दुःखमेव ॥ ३३ ॥**

**प्रकाशिका** – ननु संसारे सुखं तावदस्ति कदाचिद्दुःखप्रसक्तौ तत्प्रतीकारसंभवात्कुतः समत्वं तस्येत्यत आह ॥ दुःखेष्विति । चेदित्यनेनेदं सूचयति । दुःखस्य न प्रतीकारोऽस्ति स्याच्चेत्तस्य प्रतिक्रिया तथाऽपि त्रिविधेषु दुःखेषु मध्ये एकतरेणापि दुःखेन व्यवच्छेदो वियोगो नास्तीति । ननु पतिक्रियायामपि दुःखस्य व्यवच्छेदो नास्तीति विरुद्धं कथमुच्यत इत्यतोऽस्याभिप्रायमाह ॥ तदिति । दुःखमेव दुःखाविनाभूतैवेत्याशय इति शेषः । तस्य दुःखस्य प्रतिक्रिया परिहारो दुःखमेव ॥ ३३ ॥

**यथा हि पुरुषा भारं शिरसा गुरुमुद्वहन् ।**
**तं स्कन्धेन स आधत्ते तथा सर्वाः प्रतिक्रियाः ॥ ३४ ॥**

**प्रकाशिका** – प्रतिक्रियाया दुःखाविनाभूतत्वे दृष्टान्तमाह ॥ यथा हीति । स्कन्धस्य दुःखं यथा भवति तथा सर्वाः प्रतिक्रिया इत्यनन्तरं दुःखाविनाभूता इति शेषः ॥ ३४ ॥

**नैकान्ततः प्रतीकारः कर्मणां कर्म केवलम् ।**
**द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ ॥ ३५ ॥**

**प्रकाशिका** – ननु दुःखमूलभूतकर्मणां प्रायश्चित्तादिरूपकर्मनिर्वृत्तौ सर्वथा दुःखाभावः स्यादित्यत आह ॥ नैकान्तत इति । कर्मणां दुःखमूलभूतानां नारायणार्पणरहितं केवलं प्रायश्चित्तरूपमेकान्ततो नियमेन । सर्वथेति यावत् । प्रतीकारो निवर्तकं न हि । हि यस्मान्निवर्त्यं निवर्तकं च कर्माविद्योपसृतमज्ञानप्राप्तम् ॥ तस्मादिति शेषः । अत्र दृष्टान्तमाह ॥ स्वप्ने इति । यथा स्वप्ने दृष्टस्य करितुरगादेरुच्छेदार्थं स्वाप्नोयत्नः सर्वथा न तन्निवर्तकः । तत्कारणज्ञानानिवर्तकत्वात्तथैवेत्यर्थः ॥ ३५ ॥

**अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।**
**मनसा लिङ्गरूपेण स्वप्ने विचरतो यथा ॥ ३६ ॥**

**तात्पर्यम् – 'संसृतेः स्वप्नसाम्यं तु यथार्थज्ञानवर्जनमि'ति च । 'जाग्रत्यविद्यमानं तु देहात्मत्वादि केवलम् । अविद्यमानं स्वप्ने तु जाग्रत्त्वज्ञानमेव चे'ति षाड्गुण्ये ॥ ३६ ॥**

**प्रकाशिका** – नन्वहंममतादिरूपस्वातन्त्र्यभ्रमनिमित्तो हि दुःखादिरूपसंसारः । स च स्वप्नवत्स्वत एव तादृशभ्रमनिवृत्तौ निवृत्तो भविष्यतीत्यपेक्षायामाह ॥ अर्थ इति । पूर्वश्लोकेऽविद्योपसृतं द्वयमित्युक्त्याऽनिर्वचनीयाविद्याकल्पितत्वेन स्वप्नसाम्यं संसृतेरुच्यत इति भाति । अत्राप्यर्थे ह्यविद्यमान इत्यसत्वं प्रतीयतेऽतः श्लोकद्वयतात्पर्यं क्रमेण प्रमाणेनैवाह ॥ संसृतेरिति । संसृतेरविद्याकार्यत्वेन स्वप्नसाम्यवचनं यथार्थज्ञानवर्जनमेवाभिप्रेत्य न कल्पितत्वमित्यर्थः । तथा चाविद्योपसृतमित्येतद्यथार्थज्ञानाभावप्राप्तमिति व्याख्येयमिति भावः । द्वितीयश्लोके यदविद्यमानमुक्तं तज्जाग्रति जाग्रदवस्थायां केवलं देहात्मत्वादिदेहात्मनोः स्फुटतरविवेकाग्रहादिकमेव । न सुखदुःखादिकं सर्वम् । आदिशब्दादहंममतादिरूपस्वातन्त्र्यं ग्राह्यम् । तुशब्दौ प्रकृतत्वानुसन्धानार्थौ । जाग्रत्वेन ज्ञानं यस्य तत्तथा । जाग्रद्दृष्टपदार्थतादात्म्यमित्यर्थः । चशब्दाद्ग्राह्यमृदाद्युपादानकत्वादि- सङ्ग्रहः ॥ तथा चायमर्थः ॥ अर्यत इति व्युत्पत्त्याऽर्थशब्दो ज्ञेयवाची । तथा चाहंममतादिरूपे देहात्मत्वादिरूपे वाऽर्थे विषयेऽविद्यमानेऽपि । तत्ज्ञानस्य भ्रमत्वेऽपीति यावत् । तन्मूला दुःखादिरूपा संसृतिर्न निवर्तते। तत्कारणस्य देहात्मनोः स्फुटतरविवेकाभावस्य च स्वातन्त्र्यभ्रमस्य च स्वत एव निवृत्तेरसंभवादित्याशयः । कुत इत्यत उक्तम् ॥ लिङ्गरूपेण मनसेति । लिङ्गशरीरान्तर्गतमनसा निमित्तेनेत्यर्थः । स्वरूपमनोव्यावृत्त्यर्थम् ॥ लिङ्गरूपेणेति । तत्रापि मनसः प्राधान्यसूचनाय मनोग्रहणम् । तथा चानादिजडमनोलक्षणकारणसत्वेनोक्तरूपभ्रमोऽनुवर्तत एवेत्याशयः । अत्र दृष्टान्तमाह ॥ स्वप्न इति । यथा लीनमर्थं गमयतीति लिङ्गवासना तद्रूपेण तदात्मकेन मनसा

निमित्तेन स्वप्ने विचरतो जाग्रद्दृष्टपदार्थभेदेन स्वप्नपदार्थान्विजानतः स्वाप्नसंसृतिर्न सर्वथा निवर्तते। वासनायुतस्य मनसः सत्वेन प्रत्यहं जायमानत्वात्तथैवेत्यर्थः ॥ ३६ ॥

**अथात्मनोऽर्थभूतस्य यतोऽनर्थपरम्परा ।**
**संसृतिस्तद्व्यवच्छेदो भक्त्या परमया हरौ ॥ ३७ ॥**

**प्रकाशिका** – एवं संसृतिप्रवृत्तिप्रकारमुक्त्वेदानीं तन्निवृत्तिप्रकारमुपदिशति ॥ अथेति । यस्मात्केवलकर्मणो दुःखहेतुः संसारः सति भगवत्ज्ञाने च निवर्ततेऽथ तस्माल्लिङ्गरूपमनसः संसारमूलकारणत्वादर्थभूतस्य स्वभावतो निर्दुःखानन्दात्मकस्य पुरुषार्थयोग्यस्य वाऽऽत्मनो जीवस्य यतो लिङ्गमनसो हरेरज्ञानाद्वाऽनर्थपरंपररूपा संसृतिर्भवति । तस्य लिङ्गमनसोर्व्यवच्छेदो वियोगो हरौ परमया भक्त्यैवेत्यर्थः ॥ ३७ ॥

**वासुदेवे भगवति भक्तियोगः समाहितः ।**
**सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति ॥ ३८ ॥**

**प्रकाशिका** – ननु वैराग्यं ज्ञानं चान्यत्र संसृतिनिवर्तकत्वेनोक्तम् । अतः कथं भक्त्यैवेत्युच्यत इत्यत आह ॥ वासुदेव इति । तथा च भक्त्युक्तेर्वैराग्यादिद्वारैव मोक्षजनकत्वमुक्तं न साक्षादतो न विरोध इत्याशयः । ननु वैराग्यं ज्ञानं च भक्तेः पूर्वभावी तत्कथमत्र साध्यतयोच्यत इत्यत उक्तम् ॥ सध्रीचीनेनेति । सध्रीचीनेन समीचीनप्रकारेण प्राणायामादिवन्हिना निर्दग्ध-मलेनान्तःकरणेनेति यावत् । समाहितः सम्यक् स्थापितः सध्रीचीनेन निष्कामेन पुरुषेणेति वा । तथा च समीचीनं ज्ञानं वैराग्यं चात्र साध्यं न पूर्वभावीत्याशयः ॥ ३८ ॥

**सोऽचिरादिव राजर्षे स्यादच्युतकथाश्रयः ।**
**शृण्वतः श्रद्धधानस्य नित्यदा स्यादधीयतः ॥ ३९ ॥**

**प्रकाशिका** – नन्वेतादृशो भक्तियोग एवं कथं स्यादित्यत आह ॥ स इति । स भक्तियोगो नित्यदा शृण्वतः । हरिकथामिति शेषः । अचिरात्स्यादाविरासीत् । कुतः यतोऽच्युतकथा हरिकथाऽऽश्रयोत्पादिका यस्य स तथा ॥ ३९ ॥

**यत्र भागवता राजन् साधवो विशदाशयाः ।**
**भगवद्गुणानुकथनश्रवणाव्यग्रचेतसः ॥ ४० ॥**

**प्रकाशिका** – ननु हरिकथाऽपि कुत्र स्यादित्यपेक्षायामाह ॥ यत्रेति । अव्यग्रचेतसस्त-देकचित्ताः ॥ ४० ॥

**तस्मिन् महन्मुखरिता मधुभिच्चरित्र-**
**पीयूषतोयसरितः परितः स्रवन्ति ।**
**ता ये पिबन्त्यनुसवं नृप गाढकर्णै-**
**स्तान् न स्पृशन्त्यशनतृड्भयशोकमोहाः ॥ ४१ ॥**

**प्रकाशिका** – यस्मिन्देशे सतां समाजे महद्भिर्मुखरिताः कीर्तिताः । मधुभिदो हरेश्चरितमेव पीयुषं तल्लक्षणतोयपूर्णाः सरितः सन्तीत्यर्थः । पीयूषशेषेति पाठे पीयूषस्य शेष एकदेशो यास्विति व्याख्येयम् । ननु क्षुत्तृडादिभिः पीडितानां कथं हरिकथाश्रवणं नित्यदा स्यादित्यत आह ॥ ता इति । अवितृषोऽलम्बुद्धिरहिताः सन्तो गाढैः सावधानकर्णैस्ताः सरितः पिबन्ति । आदरेण शृण्वन्ति । अशनशब्देन क्षुधा लक्ष्यते । तान्न स्पृशन्ति । तान्पुरुषान्न बाधत इत्यर्थः ॥ ४१ ॥

**एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः ।**
**न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥ ४२ ॥**

**प्रकाशिका** – नन्वेवं हरिकथां श्रुत्वा सर्वे कुतो न मुच्यन्त इत्यत आह ॥ एतैरुपद्रुत इति । एतैरशनादिभिः । स्वभावजैः शरीरस्वभावजातैः ॥ ४२ ॥

**प्रजापतिपतिः साक्षाद्भगवान् गिरिशो मनुः ।**
**दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः ॥ ४३ ॥**

**तात्पर्यम् – 'प्रजापतिपतिर्ब्रह्मा विरिञ्चश्चेति कथ्यत' इति शब्दनिर्णये ॥**

**प्रकाशिका** – भक्तियोगेनापि भगवान्साकल्येन केनापि ज्ञातुं न शक्य इत्याह ॥ प्रजापतिरिति । अत्र प्रजापतिशब्दविवक्षितमर्थं प्रमाणेनैवाह ॥ प्रजापतीति । नैष्ठिका ऊर्ध्वरेतसः ॥ ४३ ॥

**मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।**
**भृगुर्वसिष्ठ इत्येते मदन्ता ब्रह्मवादिनः ॥ ४४ ॥**

**प्रकाशिका** – अहमेवान्तो येषां ते मदन्ताः ॥ ४४ ॥

**अद्यापि वाचस्पतयस्तपोविद्यासमाधिभिः ।**
**पश्यन्तोऽपि न पश्यन्ति तद् विष्णोः परमं पदम् ॥ ४५ ॥**

**प्रकाशिका** – वाचस्पतयोऽपि न पश्यन्ति साकल्येन । तपोविद्यासमाधिभिरित्यत्र भक्तिरपि ग्राह्या । यत्पश्यन्तोऽपि न पश्यन्ति तद्विष्णोः परमं पदमित्यन्वयः ॥ ४५ ॥

**शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे ।**
**मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम् ॥ ४६ ॥**

तात्पर्यम् – **'मन्त्रलिङ्गैर्व्यवच्छिन्नं वेदशब्दोक्तमात्रकम् । वेदो वदन्नपि हरिं न सम्यग्वक्ति कुत्रचित् । नारोहयत्यनुभवमप्रसिद्धस्वरूपतः । अथाप्यनुभवारोहः प्रसन्ने केशवे भवेत् । किञ्चिदेव सुसम्यक् च स्वयं त्वनुभवत्यमुमि'ति वाराहे ॥ ४६ ॥**

**प्रकाशिका** – एतदेव विशदयति ॥ शब्दब्रह्मणीति । निर्दोषशब्द आगम इति निर्दोषशब्दराशौ दुष्पारेऽनन्ते । कुत इत्यत उक्तम् । उरु विस्तरे चरन्तो विचारयन्तो मन्त्रलिङ्गैः श्रीपतित्वादिरूपैर्व्यवच्छिन्नमितरव्यावृत्ततया ज्ञातं परमात्मानं भजन्त उपासमाना अपि परं परमात्मानं न विदुः । अत्र ज्ञातं न विदुरिति व्याहतमिवाभाति । अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैवाह ॥ मन्त्रलिङ्गैरिति । वेदशब्दो वेदे विद्यमानं नाम न सम्यग्वक्ति । न सम्यगित्युक्तं विवृणोति ॥ नारोहत्यनुभवमिति । अनुभवारूढं न करोतीत्यर्थः । अत्रानुभवारूढो नाम कचिद्युगपदणुत्वमहत्वादावसंभावनादिराहित्येन निश्चयः । नन्वनुभवारोहाभावे कथं ध्यानादिना तदपरोक्षज्ञानमित्यत उक्तम् ॥ अथाऽपीति । किञ्चिदेवानुभवारोहः । अनेन यदेत्युत्तरश्लोक-तात्पर्यमप्युक्तमित्यवमन्तव्यम् । सु सम्यगनुभवारोहः कस्य भवतीत्यपेक्षायामाह ॥ सु सम्यगिति। स्वयमेवामुं केशवमनुभवति । तथा च सम्यगनुभवारोहो यथा स्यात्तथा न विदुरिति मूलाशयः । अतो न व्याहतिशङ्केति भावः ॥ ४६ ॥

**सर्वेषामपि जन्तूनां सततं देहपोषणे ।**
**अस्ति प्रज्ञा समायत्ता को विशेषस्तया नृणाम् ॥ ४७ ॥**

**प्रकाशिका** – ननु साकल्यानुभवारोहाभावे किं तज्ज्ञानेन लौकिकप्रज्ञयैवालमित्याशङ्का-परिहाराय लौकिकमात्रज्ञाननिन्दापूर्वकं योग्यतानुसारेणेश्वरज्ञानिनः स्तौति ॥ सर्वेषामिति श्लोकद्वयेन । इह भारतवर्षे सर्वेषां जन्तूनां सन्ततं देहपोषणे प्रज्ञा बुद्धिः समायत्ता सन्ततास्ति । नृणां तया प्रज्ञया को विशेषः । पश्वादिभ्य इति शेषः ॥ ४७ ॥

**लब्ध्वेहान्ते मनुष्यत्वं हित्वा देहाद्यसद्ग्रहम् ।**
**आत्मसृत्या विहायेदं जीवात्मा स विशिष्यते ॥ ४८ ॥**

**प्रकाशिका** – इह कर्मभुवि बहुजन्मनामन्ते भगवदुद्बोधितपूर्वादृष्टविशेषान्मनुष्यत्वं लब्ध्वा ममाहमिति देहाद्यसद्ग्रहं संसारे देही हित्वाऽऽत्मसृत्या परमात्मज्ञानेनेदं शरीरं विहाय यो जीवात्मा वर्तते स विशिष्यत इत्यर्थः । अतः स्वयोग्येश्वरज्ञानाय प्रयत्नः कार्य इत्याशयः ॥४८॥

**यदा यस्यानुगृह्णाति भगवानात्मभावितः ।**
**स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥ ४९ ॥**

**तात्पर्यम् – 'यदा त्वनुभवी भूयाच्छब्दमात्रानुरोधनम् । त्यक्त्वाऽथ तं विदुः प्राज्ञास्त्यक्तवेद इति स्म ह । यदैव त्यक्तवेदः स्यादथास्मान्मुच्यते भयात् । प्रायस्तु वैदिका एव रुद्राद्या अपि वै पुरा । वैदिकस्त्यक्तवेदश्च ब्रह्मैवैकः प्रजापतिः । ततस्तु केशवं भक्त्या सम्पूज्य बहुजन्मसु । त्यक्तवेदत्वमापन्नाः प्रसादात्परमेष्ठिन' इति महासंहितायाम् । 'केवलं वेदशब्देन जानन्वैदिक उच्यते । वेदं विनाप्यनुभवाज्जानंस्तु त्यक्तवैदिक' इत्यध्यात्मे ॥ 'तत्त्वं वेदानुसारेण चिन्तयन्वैदिको भवेत् । वेद ऊहामनुसरेद्यस्य स त्यक्तवैदिक' इति षाड्गुण्ये ॥ ४९ ॥**

**प्रकाशिका –** केचिदनुभवारोहोऽप्यधिकारिणो न स्वप्रयत्नेन भवतीत्याह ॥ यदा यस्येति । अत्र वेदे च मतिं जहातीति वेदपरित्याग उच्यते । स तु प्रमाणविरुद्धोऽतोऽत्र विवक्षितं वेदपरित्यागं प्रमाणेनैव दर्शयति ॥ यदात्विति । शब्दमात्रानुरोधनं वैदिकशब्दानुसारेणैवानुभवारोहं त्यक्त्वा यदाऽनुभवी स्वभावसिद्धप्रतिभयैव वैदिकार्थानुभवारोहवान् भूयात् । अथ तदा त्यक्तवेद इति विदुः । एतादृशवेदपरित्यागो नानर्थफलक इत्याह ॥ यदेवमिति । एतादृशस्त्यक्तवेदो दुर्लभ इत्याशयेनाह ॥ प्रायस्त्विति । तुशब्दो वैदिकत्वे तारतम्यरूपविशेषद्योतकः । पुराऽपि रुद्रादीनां कदाचित्त्यक्तवेदस्यापि सत्वात्प्राय इत्युक्तम् । पुराऽनादितो रुद्रादीनामपि त्यक्तवेदत्वस्य सत्वात्कथं ब्रह्मैवैक इत्युक्तमित्यत आह ॥ ततस्त्विति । ततो वैदिकत्वानन्तरम् । तु तारतम्यरूपविशेषेण परमेष्ठिनः प्रसादात्त्यक्तवेदत्वमापन्ना रुद्राद्याः । न तु ब्रह्मवदनादितः । अतो ब्रह्मैवैकमित्युक्तमिति भावः । वैदिकत्यक्तवैदिकशब्दयोरत्र विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ केवलमिति । केवलं वेदशब्देन तदनुसारेण जानन् अनुभवारोहवान् । वेदं विना वेदानुसरणं विनाऽनुभवादपि स्वभावसिद्धप्रतिभाबलादपि जानन् अनुभवारोहवान् । तुशब्दोऽवधारणे । त्यक्तवैदिक उच्यते । नन्वेवंविधयोर्वैदिकत्वत्यक्तवैदिकत्वयोः परस्परविरुद्धयो रुद्रादौ कालभेदेन समावेशसंभवेऽपि न ब्रह्मणि तयोः पूर्वोक्तः सर्वदा समावेशः संभवतीत्याशङ्कायां तत्र वैदिकत्यक्तवैदिकशब्दयोर्विवक्षितमर्थान्तरं प्रमाणेनैवाह ॥ तत्त्वमिति ॥ वेदानुसारेणेति । अत्र केवलमिति न विवक्षितमतो न विरोध इत्याशयः । चिन्तयन् अनुभवारूढं कुर्वन्यस्योहां प्रतिभामनुसरेत्स त्यक्तवैदिकोऽत्र विवक्षितो भवेदित्यर्थः । एतादृशं वैदिकत्वं त्यक्तवैदिकत्वं च ब्रह्माणं विना नान्यत्रास्तीत्याशयः ॥ ततश्चायं श्लोकार्थः ॥ यदात्मना भावित आत्मना मनसा भावितो ध्यातो

भगवान् यस्योपासकस्यानुगृह्णाति प्रसन्नः सन् स्वभावसिद्धया प्रतिभयैवानुभवारूढो भवति । सोऽधिकारी लोके पौरुषेये भारतादौ वेदे च परिनिष्ठितां मतिं तत्रत्यलिङ्गशब्दाद्यनुरोधेनैवानु-भवारोहं जहाति ॥ ४९ ॥

**तस्मात् कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु ।**
**माऽर्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ॥ ५० ॥**

**प्रकाशिका** – एवं मोक्षसाधनपरमात्मविद्यां स्पष्टतयोपदिश्येदानीं तत्र रुच्युत्पादनाय काम्यकर्मरतित्यागमुपदिशति ॥ तस्मादिति । यस्मात्ज्ञानेनैव मोक्षस्तस्मादज्ञानाद्भगवत्तत्त्वा-परिज्ञानात्परमपुरुषार्थाज्ञानाद्वाऽर्थकारिषु प्रयोजनसाधनत्वेन प्रकाशमानेष्वग्निष्टोमादिलक्षणेषु कर्मसु अर्थदृष्टिं पुरुषार्थसाधनदृष्टिं मा कृथा न कुरुत । तत्प्रवृत्तौ निमित्तमाह ॥ अस्पृष्टेति । अस्पृष्टवस्तुषु परमात्माख्यवस्तुसंबन्धरहितेषु ॥ ५० ॥

**स्वलोकं न विदुस्ते वै यत्र देवो जनार्दनः ।**
**आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः ॥ ५१ ॥**

**प्रकाशिका** – तर्हि कथं प्रेक्षावतां प्रवृत्तिरित्यतो न ते प्रेक्षावन्त इत्याह ॥ स्वलोकमिति । ये कर्मनिष्ठास्ते यत्र लोके जनानर्दयतीति जनार्दनोऽस्ति । तं स्वलोकं स्वेन गम्यं वैकुण्ठादिस्थानं कर्मासाध्यं न विदुरित्यन्वयः । अन्यथा विदुश्चेत्याह ॥ आहुरिति । धूम्रे धूमतरे धूममार्गे धीर्येषां ते धूम्रधियः । वेदं सकर्मकं कर्मण्येव तात्पर्योपेतमाहुः । कुतः । यतोऽतद्विदस्तत्तात्पर्यज्ञान-शून्याः ॥ ५१ ॥

**आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम् ।**
**ततो बृहद्वधान्मानी कर्म नावैषि यत् परम् ॥ ५२ ॥**

**प्रकाशिका** – त्वमपि तेष्वेक इत्याह ॥ आस्तीर्येति । बृहतां बहूनां वधात्संज्ञपन-लक्षणाद्यष्टाऽहमिति मानी त्वं यत्परं मोक्षजनकं भगवत्प्रीत्यर्थं क्रियमाणं कर्म तन्नावैषि न जानासि । प्राचीनाग्रदर्भास्तरणं कृत्वा पशुसंज्ञपनमेव जानासि न तु कर्मस्वरूपमित्यर्थः ॥५२॥

**तत् कर्म हरितोषं यत् सा विद्या तन्मतिर्यया ।**
**हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥ ५३ ॥**

**प्रकाशिका** – ननु कर्मविद्योक्तकर्मणा कर्म कुर्वाणोऽहं कथमज्ञानी स्यामित्यत आह ॥ तत्कर्मेति । यद्धरेस्तोषोऽनुग्रहलक्षणो यस्मात्कर्मणस्तद्धरितोषं तदेव कर्म नेतरत् । तस्य भगवतो मतिर्ज्ञानं यया विद्यया सैव विद्या वेदार्थज्ञानलक्षणा न कर्ममात्रपरेत्यर्थः । तथा च कर्मकाण्डस्यापि हरिपरत्वे एव विद्यात्वं तदुक्तस्य च कर्मणो हरितोषकत्वे एव कर्मपरत्वं नान्यथेत्याशयः । कोऽसौ हरिरित्यपेक्षायों तत्स्वरूपं दर्शयंस्तज्ज्ञानिनः स्तौति । हरिरिति द्वाभ्याम् । यो दुरितहरणशीलत्वाद्धरिर्देहभृतां जीवानामात्मांऽतर्यामी स्वयमनन्याधीन एव प्रकृतिः प्रकृष्टकृतिमान् ईश्वरोऽणिमाद्यष्टैश्वर्यरूप एषां गुणानामधिकरणभूतः स हरिरिति ज्ञातव्यम् ॥ ५३ ॥

**तत्पादमूलं शरणं यतः क्षेमो नृणामिह ।**
**सवै प्रियतमो ह्यस्य यतो न भयमण्वपि ।**
**इति वेद स वै विद्वान् यो विद्वान् स्वगुरुर्हरिः ॥ ५४ ॥**

**नारद उवाच–**

**प्रश्न एवं हि संच्छिन्नो भवतः पुरुषर्षभ ।**
**अत्र मे वदतो गुह्यं निशामय सुनिश्चितम् ॥ ५५ ॥**

**प्रकाशिका** – अस्याधिकारिणो यो वै प्रियतमः । स्वदेहादेरप्यतिशयेन प्रियो यतोऽण्वपि भयं नास्ति । स एव हरिर्यो विद्वान्सर्वज्ञोऽत एव स गुरुर्व्यासादिरूपेण हितोपदेष्टा सोऽपि हरिरिति यो वेद स एव हि विद्वान्मतिमानित्यर्थः ॥ ५४,५५ ॥

**क्षुद्रश्चरं सुमनसां शरणे मथित्वा**
**रक्तं षडङ्घ्रिगणसामसुलुब्धकर्मणम् ।**
**अग्रे वृकानसुहृदोऽविगणय्य यान्तं**
**पृष्ठे मृगं मृगयुलुब्धकबाणभिन्नम् ॥ ५६ ॥**

**अस्यार्थः सुमनसां सधर्माणां स्त्रीणां शरण आश्रमे पुष्पमधुगन्धवत् क्षुद्रतमं काम्य-कर्मविपाकजं कामसुखलवं जैह्वयौपस्थ्यादि विचिन्वन्तं मिथुनीभूय तदभिनिवेशित-मनसं षडङ्घ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितरामतिप्रलोभितकर्ण-मग्रे वृकयूथवदात्मन आयुर्हरतोऽहोरात्रान्तान् कालविशेषानविगणय्य गृहेषु**

**विहरन्तं पृष्ठत एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तः शरेण यमिह परिविध्यति तमिममात्मानमहो राजन् भिन्नहृदयं द्रष्टुमर्हसीति ॥ ५६ ॥**

**प्रकाशिका** – वैराग्यपूर्वकं हरिभजनाय मृगसाम्यं स्वात्मनो विद्धीत्याह ॥ क्षुद्रं चरमिति द्वाभ्याम् ॥ क्षुद्रमल्पं चरतीति । अलुक् समासः । सुमनसां पुष्पाणां शरणे आश्रमे वाटिकायां मिलित्वा मिथुनीभूय । स्त्रिया सह मिलित्वेति यावत् । रक्तं तत्रैवासक्तं षडङ्घ्रयो भ्रमरास्तेषां सामसु गीतेषु लुब्धौ कर्णौ यस्य तमविगणय्यागणयित्वा पृष्ठे लुब्धकस्य बाणेन भिन्नं मृगं मृगय विचारपूर्वकं पश्य ॥ ५६ ॥

**स त्वं विचक्ष्व मृगचेष्टितमात्मनोऽन्त-**
**श्चित्तं नियच्छ हृदि कर्णधुनीं च चित्तिम् ।**
**जह्यङ्गनाश्रममसत्तमयूथगाथं**
**प्रीणीहि हंसशरणं विरम क्रमेण ॥ ५७ ॥**

**तात्पर्यम्** – **'चित्तिर्बुद्धिरिति ज्ञेया चित्तं तु स्मृतिकारणमि'ति शब्दनिर्णये ॥ ५७ ॥**

**प्रकाशिका** – ततश्च किमित्यत आह ॥ स त्वमिति । यः काम्यकर्मासक्तः स त्वमित्यर्थः । आत्मनः स्वस्य मृगवच्चेष्टितं मृगतुल्यचेष्टां विचक्ष्व । कुतः । यस्मात्त्वमपि परिणामविरसत्वेन पुष्पसमानानां स्त्रीणामाश्रमे मिथुनीभूय स्थितस्तासुरक्तं षडङ्घ्रिगणगीततुल्यमनोहरवनितादि-जनगीतेषु लुब्धकर्णोऽग्रे वृकयूथवदसुहृदः प्राणहारिण आयुर्हरत कालविशेषान् अगणयित्वा यासि पृष्ठे हिंसकतया लुब्धकसदृशयमस्य दण्डेन भिन्नो विदारितश्च यासीत्यर्थः । अत एवं विचार्यात्मनस्तवचित्तं हृदन्तःस्थिते भगवति सर्वपापहरे हृन्नाम्नि हरौ नियच्छ तत्रैव स्थापय । उपलक्षणतया कर्णादीन्द्रियाणि धुनोतीति कर्णधुनी तां चित्तं च नियच्छ । अत्र चित्तिचित्त-शब्दयोः पौनरुक्त्या पदार्थभेदं प्रमाणेनैवाह ॥ चित्तिरिति । तथा स्मृतिकारणीभूतं चित्तं बुद्धिरवध्यवसानायेति वचनादध्यवसानकारणीभूतां बुद्धिं च केशवे स्थापयेति मूलार्थ इत्याशयः । असत्तमानामतिशयेन दुष्टानां विषयाणां यूथस्य समूहस्य गाथा विषयवार्ता यस्मिंस्तमङ्गनाश्रमं गृहाश्रमं जहि त्यज । अङ्गनाभ्रममिति पाठेऽङ्गनानां भ्रमो यस्मिन्निति गृहाश्रममित्येवार्थः ॥५७॥

**राजोवाच–**

**श्रुतमन्वीक्षितं ब्रह्मन् भगवान् यदभाषत ।**
**नैतज्जानन्त्युपाध्यायाः किन्न ब्रूयुर्विदुर्यदि ॥ ५८ ॥**

**संशयोऽत्र न मे विप्र संच्छिन्नस्तत्कृते महान् ।**
**ऋषयोऽपि हि मुह्यन्ति यत्र नेन्द्रियवृत्तयः ॥ ५९ ॥**

**प्रकाशिका** – राजा प्रमेयान्तरं प्रष्टुमेतावत्पर्यन्तं यत्त्वयोक्तं तत्सम्यगवगतं मयेत्याह ॥ श्रुतमिति । ब्रह्मन्नारद । ममोपाध्यायाः कर्मोपदेष्टार एतत्प्रष्टव्यं न जानन्ति । सावधानं श्रुतमन्वीक्षितं विचारितं चेति । अतोऽत्र प्रष्टव्ये प्रमेये मे संशयो न छिन्नः । तत्कृत उपाध्याया-ज्ञाननिमित्तः । तत्कृते इति पाठे तदर्थं (*) वक्ष्यमाणविषये इत्यर्थः ॥ ५८,५९ ॥

**कर्माण्यारभते येन पुमानिह विहाय तम् ।**
**अमुत्रान्येन देहेन जुष्टान्यसकृदश्नुते ॥ ६० ॥**

**इति वेदविदां वाचः श्रूयन्ते तत्र तत्र ह ।**
**कर्म च क्रियते प्रोक्तं परोक्षं न प्रकाशते ॥ ६१ ॥**

**प्रकाशिका** – तमेव संशयविषयं प्रष्टव्यमर्थं दर्शयति ॥ कर्मणीति द्वाभ्याम् । पुमान्कर्माणि येन देहेन करोति तस्य प्रारब्धकर्मक्षये तं देहमिहैव विहायामुत्र लोकान्तरेऽन्येन देहेन जुष्टानि कर्मफलानि स जीवोऽसकृदश्नुत इति यत् तत् कथं तज्जीवैक्येऽपि तत्कर्तृत्वभोक्तृत्वा-पादकयोर्देहयोर्भेदात् उभयानुस्यूत देहान्तरस्यचाभावात् । अन्यथा कृतहान्यकृताभ्युपम प्रसङ्ग इति भावः । नदेहे भेदोऽप्रामाणिक इत्याह ॥ इतीति । प्रश्नान्तरं करोति ॥ कर्म चेति । प्रोक्तं वेदोक्तं कर्म क्रियते जनैस्तच्चानन्तरक्षण एव परोक्षं न प्रकाशते नश्यति । तथा च कर्मणो नष्टत्वाद्भोगस्य लोकान्तरे कथमित्याशयः ॥ ६०,६१ ॥

**नारद उवाच–**

**येनैवारभते कर्म तेनैवामुत्र तत् पुमान् ।**
**भुङ्क्ते ह्यव्यवधानेन लिङ्गेन मनसा स्वकम् ॥ ६२ ॥**

**प्रकाशिका** – स्थूलदेहे भेदेऽपि कर्तृत्वभोक्तृत्वापादकमनःप्रधानकस्य लिङ्गदेहस्योभयत्रैक-स्यैवानुस्यूतत्वान्नोक्तदोष इत्याशयेन प्रथमस्योत्तरमाह ॥ येनैवेति । लिङ्गशरीरस्य मनःप्रधान-कत्वाल्लिङ्गेन मनसेति सामानाधिकरण्यम् । येन मनःप्रधानकेन लिङ्गेनाव्यवधानेनोभयत्रानुस्यूतेन पुमान्कर्मारभते । तेनैवामुत्र स्वर्गादौ स्वकं कर्म भुङ्क्ते तत्फलं सुखदुःखलक्षणमनुभवतीत्यन्वयः । स्थूलदेहयोरपि मनोद्वारेणैव कर्तृत्वभोक्तृत्वापादकत्वाद्येनैव तेनैवेत्युक्तम् ॥ ६२ ॥

**शयानमिममुत्सृज्य श्वसन्तं पुरुषो यथा ।**
**कर्मात्मन्याहितं भुङ्क्ते तादृशेनेतरेण वा ॥ ६३ ॥**

**प्रकाशिका** – स्थूलदेहे भेदेऽपि मनस एकत्वेन भोक्तृत्वं स्वप्नदृष्टान्तेनोपपादयति ॥ शयान-मिति । इमं जाग्रदवस्थायां विद्यमानं श्वसन्तं जीवन्तमुत्सृज्य तदभिमानं त्यक्त्वाऽऽत्मनि मनसि संस्काररूपेणाहितं सन्निहितं कर्म कर्मफलभूतं स्वाप्नसुखदुःखादिकं तादृशेन शयान-देहसदृशेनेतरेण तद्विलक्षणेन पश्चादिदेहेन वा भुङ्क्ते । यथैव तथैव लोकान्तरेऽपीत्यर्थः ॥ ६३ ॥

**ममेति मनसा यद् यदसावहमिति ब्रुवन् ।**
**गृह्णीयात् तत् पुमान् राद्धं कर्म येन पुनर्भवः ॥ ६४ ॥**

**प्रकाशिका** – अहंममेत्यभिमान एव कर्तृत्वभोक्तृत्वापादक इति शङ्कापरिहाराय मनस एव कर्तृत्वभोक्तृत्वापादकं विशदयति ॥ ममेति । मनसा ममैते पुत्रादय इति सोऽहं कर्तेति च ब्रुवन् अभिमानं कुर्वन्यः पुमान्यद्यत्कर्म गृह्णीयादुपादत्ते । संपादयतीति यावत् । स एव पुमांस्तद्राद्धं सिद्धं संपादितं कर्म भुङ्क्ते । येन भुक्तकर्मशेषेण कर्मणा पुनर्भवः पुनरुत्पत्तिः । मर्त्यलोके इति शेषः । अनेनादृष्टमुत्पाद्यैव कर्म नश्यति । कथमन्यथा कर्मानुसारिणी पुनरुत्पत्तिरिति द्वितीय-प्रश्नस्याप्युत्तरं सूचितमिति ध्येयम् ॥ ६४ ॥

**यथाऽनुमीयते चित्तमुभयैरिन्द्रियेहितैः ।**
**एवं प्राग्देहजं कर्म लक्ष्यते चित्तवृत्तिभिः ॥ ६५ ॥**

**प्रकाशिका** – यत्कर्म नश्यतीति सूचितं तद्दृष्टान्तमुखेनोपपादयति ॥ यथेति । अभिमानोऽपि मानस एवातो नोक्तशङ्केत्याशयः । उभयैरुभयविधैरिन्द्रिये हितैर्ज्ञानिकर्मेंद्रियजन्यव्यापारैः सात्त्विकादिभेदेन भिन्नैश्चित्तं तज्जननानुकूलं सात्त्विकादिरूपमेवानुमीयते । एवं चित्तवृत्तिभिः सात्त्विकादिभेदेन भिन्नाभिः प्राग्देहजं पूर्वदेहसंपादितं कर्म सात्त्विकादिरूपं तत्तद्वृत्ति-जन्यजनकतया लक्ष्यतेऽनुमीयत इत्यर्थः । कथमन्यथा केषाञ्चिच्चित्तवृत्तिः सात्त्विकी केषाञ्चिद्राजसी केषाञ्चित्तामसीति विभाग इति भावः ॥ ६५ ॥

**नानुभूतं क्व चानेन देहेनादृष्टमश्रुतम् ।**
**कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥ ६६ ॥**

**प्रकाशिका** – पूर्वोत्तरदेहयोर्मनस एकत्वमित्येतदुपपादयति ॥ नानुभूतमिति । अनेन वर्तमानेन देहेन क्वच कुत्रचिदपि यन्नानुभूतमननुभूतमस्यैव विवरणमदृष्टमश्रुतं च यद्रूपं यदात्मकं

यादृग्यत्प्रकारं च तत्कदाचिदस्माकं स्वप्नावस्थायां महतां जाग्रदवस्थायामेवात्मनि मनसि उपलभ्येत ॥ ६६ ॥

**तेनास्य तादृशो राजन् लिङ्गिनो देहसम्भवः ।**
**श्रद्धस्वाननुभूतार्थं न मनः स्प्रष्टुमर्हति ॥ ६७ ॥**

**प्रकाशिका** – तेन हेतुनाऽस्य लिङ्गिनो मनःप्रधानकलिङ्गशरीरवतो जीवस्य तादृशं तादृग्रूपादित्युक्तं देहसंभवं पूर्वदेहसंभवं श्रद्धस्व निश्चयेन मन्यस्व । एतदेव व्यतिरेकमुखेनोपपादयति ॥ अननुभूतार्थं इति । यः सर्वथाऽननुभूतोऽर्थः सः मनःस्पृष्टं मनसि स्फुरितं नार्हति । तथा च पूर्वोत्तरदेहयोरेकमेव मनोऽस्तीत्यङ्गीकार्यमित्याशयः ॥ ६७ ॥

**मन एव मनुष्यस्य पूर्वरूपाणि शंसति ।**
**भविष्यतश्च भद्रं ते तथैव नभविष्यतः ॥ ६८ ॥**

**प्रकाशिका** – यथेदानीन्तनकार्यबलेन मनस्तदनुकूलं पूर्वदेहं ज्ञापयति तथैव भूतभविष्यत्कालयोः कर्माप्यस्तीति ज्ञापयतीत्याह ॥ मन एवेति । पूर्वरूपाणि शरीराण्युक्तरीत्या शंसति ज्ञापयति यथा तथैव भविष्यतः स्वार्गादिकं प्राप्स्यतो न भविष्यतो वर्तमानस्य च ते तव भद्रं पूर्वोत्तरकालगतं पुण्यरूपमदृष्टं मन एव शंसत्यस्तीति ज्ञापयति । कथमन्यथा ते तवेदानीं साम्राज्याधिपत्यमुत्तरत्र च स्वर्गप्राप्तिः स्यादित्याशयः । अत्र भद्रमिति वचनेन कर्मनाशेऽपि तज्जन्यमदृष्टं न नश्यतीति सूचयति । तस्यैतदनुभवारूढं कर्तुं तवेत्युक्तम् ॥ ६८ ॥

**अदृष्टमश्रुतं चेह क्वचिन्मनसि दृश्यते ।**
**यथा तथाऽनुमन्तव्यं देशकालक्रियाश्रयम् ॥ ६९ ॥**

**प्रकाशिका** – एतदेव विशदयति ॥ अदृष्टमिति । यथेह जन्मन्यदृष्टमश्रुतं च क्वचित्कदाचिन्मनसि उक्तरीत्या दृश्यते । तेन तत्पूर्वजन्मनि दृष्टं श्रुतं चेति कल्प्यते । तथेह जन्मनि क्वचिद्देशे काले च शब्दादिरूपं विषयजातं भोग्यं तत्क्रियासाध्यं दृश्यते तेन तदनुगुणदेशकालक्रियाश्रयं क्रमिकदेशकालविशेषकृतकर्मसाध्यमदृष्टमनुमन्तव्यमित्यर्थः ॥ ६९ ॥

**सर्वे क्रमानुरोधेन मनसीन्द्रियगोचराः ।**
**आयान्ति वर्गशो यान्ति सर्वे सुमनसो जवात् ॥ ७० ॥**

**प्रकाशिका** – देशकालक्रियाश्रयमित्यनेन सूचितस्य क्रमिकत्वस्य प्रयोजनमाह ॥ सर्व इति । तस्मादित्यादौ ग्राह्यम् । तत्तद्देशकालकृतकर्मणां क्रमिकत्वात्तत्साध्याः सर्वेन्द्रियगोचराःशब्दादयः

क्रमानुरोधेन क्रममनुसृत्यैव मनसि भोग्यतयाऽऽयान्ति । अन्यथा युगपदेव प्राप्ताः स्युरित्यर्थः । नन्वेवं क्रमिककर्मणामनन्तत्वात्तत्साध्यविषयभोग एव पुनःस्यान्न मुक्तिरित्यत आह ।। वर्गश इति । सुमनसः परिपक्वध्यानयुतमनसो जवाद्वेगात् । तद्वृत्तिरूपापरोक्षज्ञानादिति यावत् । सर्वेन्द्रिय गोचराः सर्वशः समस्तशो यान्ति न प्राप्नुवन्ति । तन्मूलानां कर्मणां नाशादित्याशयः ।। ७० ।।

**सत्त्वैकनिष्ठे मनसि भगवत्पार्श्ववर्तिनि ।**
**तमश्चन्द्रमसीवेदमुपरज्यावभासते ।। ७१ ।।**

**प्रकाशिका** – नन्वपरोक्षज्ञानिनामपि विषयप्राप्तिदर्शनात्कथमेतदित्यत आह ।। सत्त्वैकनिष्ठ इति । केवलसत्त्वकार्यज्ञानभक्त्यादियुक्त इत्यर्थः । अत एव भगवत्पार्श्ववर्तिनि सर्वदा भगवदनुसंधानयुक्ते मनसीदं प्रारब्धकर्मसाध्यं विषयजातमुपरज्य दूरादेव संबद्ध्यावभासते । प्राप्तमपि तत् हर्यनुसंधानप्राप्तसुखभग्नो तन्न गणयतीत्याशयः । दूरादेव संबध्यावभासत इत्यत्र दृष्टान्तमाह ।। तम इति । चन्द्रमसि तमो राहुरिवेति ।। ७१ ।।

**नाहंममेति भावोऽयं पुरुषे व्यवधीयते ।**
**तावद् बुद्धिमनोऽक्षार्थगुणव्यूहो ह्यनादिमान् ।। ७२ ।।**

**प्रकाशिका** – ननु लिङ्गमनसोऽहंममेत्यभिमानद्वारेणैव कर्तृत्वभोक्तृत्वापादकत्वं न केवलस्येत्युक्तम् । तथात्वेऽहंममेत्यभिमानस्य कदाचिदकस्मान्नाशे संसारानुवृत्तिर्न स्यादित्याशङ्कायां लिङ्गदेहे सत्वे तन्नाशो न संभवतीत्याह ।। नाहमिति । पुरुषो जीवोऽहंममेति भावेन व्यवधीयते न कदाचिदपि विरहितो भवति । कियत्पर्यन्तम् । अनादिमान् अनादिर्बुद्ध्यादीनां व्यूहः समूहस्तदात्मकलिङ्गदेहो यावदस्ति तावत्पर्यन्तम् । अक्षाणीन्द्रियाणि अर्था भूतानि गुणाः सत्त्वादयः ।। ७२ ।।

**सुप्तिमूर्च्छोपतापेषु प्राणायनविघाततः ।**
**नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि ।। ७३ ।।**

**प्रकाशिका** – नन्विदमयुक्तं । सुप्त्यादौ लिङ्गदेहसद्भावेऽप्यहंममेत्यभिमानाभावादित्यत आह ।। सुप्तीति । उपताप इष्टवियोगादिदुःखम् । प्रज्वारो ज्वरस्तेषु । अहमिति ज्ञानमहंममेति ज्ञानं नेहते न प्रकाशते । न भवतीति यावत् । प्राणायनानामिन्द्रियाणां विघातत उपरमाल्लिङ्गदेहस्थितिपर्यन्तमहंममेति भावेन वर्तन्त इत्यस्य लिङ्गदेहस्य स्थितिमात्रं नाहंममेत्यभिमानप्रयोजकं किन्तु लिङ्गदेहजस्थूलदेहोत्पत्ताविन्द्रियैः स्वस्वविषयज्ञानेषूत्पादितेषु सत्स्वहंममाभिमानो भवति । न चैवं सुप्त्यादौ चोदनावकाश इति भावः ।। ७३ ।।

**गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं तदा ।**
**लिङ्गं न दृश्यतेऽयूनः कुह्वां चन्द्रमसो यथा ॥ ७४ ॥**

**प्रकाशिका** – ननु तथाऽपि गर्भस्थे बाल्ये च लिङ्गदेहस्य स्थूलदेहेन्द्रियजज्ञानद्वारा सत्वात्कृतोऽहंममताभिमानानुत्पत्तिरित्यत आह ॥ गर्भेति । गर्भे गर्भस्थत्वावस्थायां बाल्ये बाल्यावस्थायां वर्तमानस्यायूनो बालस्य दशेन्द्रियाणि मनश्चैकादशविधं लिङ्गं न दृश्यते । स्वकार्याहंममाभिमानजनकतयेति शेषः । अपौष्कल्यादनुपचितावयवत्वात् । इन्द्रियाणामिति शेषः । स्वतोऽपि स्वकार्याक्षमतयाऽदृश्यत्वे दृष्टान्तः । यथा कुह्वाममावास्यायां चन्द्रमसो लिङ्ग-स्वरूपं तथैवेति । तथा च पौष्कलैरेवेन्द्रियैरर्थार्थग्रहणद्वारताया विवक्षितत्वादित्याशयः ॥ ७४ ॥

**अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।**
**ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ७५ ॥**

**प्रकाशिका** – नन्वहंममेत्यभिमानस्याविद्यमानस्वातन्त्र्यविषयकस्य स्वत एव कदाचिन्निवृत्तौ तन्मूलो दुःखाद्यनुभवरूपः संसारोऽपि निवृत्तो भविष्यति । अतस्तदर्थं प्रीणीहि हंसशरणमिति कथमुक्तमित्यत आह ॥ अर्थे हीति । अर्थेऽहंममेत्यभिमानविषयस्वातन्त्र्यादिरूपे ज्ञानलक्षणे वाऽविद्यमानेऽपि । तदभिमानस्य भ्रमत्वेऽपीति यावत् । तन्मूलावस्थस्य जीवस्य संसृतिर्न निवर्तत। कुत इत्यतो हेतुगर्भविशेषणमाह ॥ विषयान्ध्यायत इति । पुनः पुनर्विषय-ध्यानेनोक्तभ्रमनिवर्तकभगवत्प्रीत्यनुदयेऽभिमानरूपभ्रमनिवृत्तिरेवासंभाविनीत्याशयः ॥ अत्र दृष्टान्तमाह ॥ स्वप्न इति । स्वप्ने स्पप्नदृष्टकरितुरगादौ जाग्रत्वरूपेऽर्थेऽविद्यमानेऽपि । तत्ज्ञानस्य भ्रमत्वेऽपीति यावत् । तन्निवर्तकप्रबोधाभावे यथा तत्र तन्मूलकस्वाप्नदुःखादिरूपानर्थस्यागमः प्राप्तिस्तथैवेत्यर्थः ॥ ७५ ॥

**एकं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तरम् ।**
**एष चेतनया युक्तो जीव इत्यभिधीयते ॥ ७६ ॥**

**तात्पर्यम् – 'प्राणेन्द्रियान्तःकरणभेदेन त्रिविधं मतम् । पञ्च पञ्चैव ते सर्वे प्राणबुद्धीन्द्रियाणि च । कर्मेन्द्रियाणि च तथा तस्मात्पञ्चविधं स्मृतम् । लिङ्गं षोडशकं प्राहुर्मनसा सह तत्पुनरि'ति ब्राह्मे ॥ ७६ ॥**

**प्रकाशिका** – ननु ग्रन्थान्तरे षोडशकलो जीव एवाहंममाभिमानद्वारा संसृतिहेतुरित्युच्यते । अतस्तद्विरोध इत्यत आह ॥ एकमिति । अत्र षोडशत्वविवरणायैकं पञ्चविधं त्रिवृदित्युक्तम् ।

तेन नवविधत्वमेव प्रतीयते । अतोऽत्राभिप्रायं प्रमाणेनैव दर्शयति ॥ प्राणेन्द्रियेति । त्रिवृदित्यस्य विवरणम् ॥ प्राणेति । पञ्चविधमित्यत्र प्रत्येकमिति शेषमित्यभिप्रेत्यार्थमाह ॥ पञ्च पञ्चैवेति । प्रकारान्तरेणापि तदभिप्रायमाह ॥ कर्मेन्द्रियाणि चेति । तथा च पूर्वमिन्द्रियशब्देन ज्ञानेन्द्रियाण्येव गृहीतान्यत्र तु दशेन्द्रियाणि । पाञ्चविध्ये बुद्धिर्मनःशब्देनैव ग्राह्येत्याशयः । मनसा सहेत्यनेनैकविधत्वमित्येतदुक्तार्थः । एष इत्यस्यार्थः ॥ लिङ्गमिति । विधेयापेक्षया पुल्लिङ्गप्रयोगः ॥ ततश्चायं श्लोकार्थः ॥ एकमेकेन मनसा सहितं त्रीन्प्राणेन्द्रियान्तःकरणाख्यान्वृणोतीति त्रिवृत्तत्प्रत्येकं प्राणेन्द्रियान्तःकरणभेदेन पञ्चविधम् । अथवा । पञ्चप्राणाः पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणीति प्रत्येकं पञ्चविधम् । पञ्चविधमन्तःकरणमेकशब्देन ग्राह्यम् । एवं षोडशभिर्विस्तारं विस्तारो यस्य तल्लिङ्गशरीरम् । एष एव जीवशब्देन ग्रन्थान्तरे तदभिमानजनकतयाऽभिधीयते प्रतीपाद्यतया विवक्षितः । तत्र निमित्तमाह ॥ चेतनयेति । चेतनेन युक्तो यत इत्यर्थः । तथा जीवसंबन्धे लिङ्गे जीवशब्दो लक्षणया प्रयुज्यते । अतो न विरोध इत्याशयः ॥ ७६ ॥

**अनेन पुरुषो देहानुपादत्ते विमुञ्चति ।**
**हर्षं शोकं भयं दुःखं सुखं चानेन विन्दति ॥ ७७ ॥**

**प्रकाशिका** – नाहंममेति भावोऽयं पुरुषे व्यवधीयत इत्यत्रोक्तलिङ्गशरीरस्य स्थूलशरीराहंममाभिमानद्वारा संसृतिकारणत्वं प्रपञ्चयति ॥ अनेनेति । लिङ्गदेहेनेत्यर्थः । हर्षं शोकमैहिकं भयं पारलौकिकम् । अतो न पुनरुक्तिः ॥ ७७ ॥

**यथा तृणजलूका च नोपयात्यपयाति च ।**
**न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः ॥ ७८ ॥**

**प्रकाशिका** – ननु मरणानन्तरं देहप्राप्तौ विलम्बश्रवणात्कथं न व्यवधीयत इत्युक्तमित्यतस्तदुपपादयति ॥ यथेति । तृणजलूका कीटविशेषो यावदन्यत्तृणं न विन्देत तावन्नोपयाति । यदा तद्विन्देत तदाऽपयाति । पूर्वतनं परित्यज्य तृणान्तरं प्रति गच्छति । तथा म्रियमाणोऽपि जीवो यावदन्यं तेजोमयं यातनारूपं वा देहं न विन्देत तावत्प्राग्देहाभिमतिं पूर्वतनदेहाभिमानं न त्यजेत् । विलम्बश्रवणं तु पुनर्भूमावेव यद्देहान्तरं तदभिप्रायकमिति भावः ॥७८॥

**यावदन्यं न विन्देत व्यवधानेन कर्मणाम् ।**
**मन एव मनुष्येन्द्र भूतानां भवभावनम् ॥ ७९ ॥**

**प्रकाशिका** – उपसंहरति ॥ व्यवधानेनेति । तस्मादित्यादौ ग्राह्यम् । कर्मणामभिमानजनकस्थूलदेहापादकानां व्यवधानेन तल्लक्षणावान्तरव्यापारेण विलम्बफलदातृत्वेन हेतुना वा । मन एव मनःप्रधानकलिङ्गशरीरमेव भूतानां प्राणिनां भवभावनं संसारजनकम् । कर्मणां स्थायित्वस्य संसारकारणत्वस्य च येन पुनर्भव इत्यत्रोक्तत्वादत्र तद्ग्रहणमिति ध्येयम् ॥ ७९ ॥

**यदक्षैश्चरितं ध्यायन् कर्माण्याचिनुतेऽसकृत् ।**
**सति कर्मण्यविद्यायां बन्धः कर्मण्य आत्मनः ॥ ८० ॥**

**प्रकाशिका** – कर्मणां संसारहेतुत्वमुपपादयति ॥ यदेति । लिङ्गान्तररूपमनप्रयुक्तै- रक्षैश्चरितान् भुक्तान्विषयान्ध्यायंस्तत्प्राप्त्यनुकूलानि कर्माण्याचिनुते करोति । तदा कर्मणि सत्यविद्यायां स्थूलदेहात्मिकायां प्रकृतौ वन्धोऽहंममाभिमानरूपबन्धो भवति । कर्मण्यः पुनः कर्महेतुः । आत्मनोजीवस्य । तथा च लिङ्गरूपेण मनसा पूर्वकर्मानुसारेण स्थूलदेहप्राप्तिस्तत्रचाहंममाभिमानेनेन्द्रियविषयाणां ध्यानं तेन पुनस्तदनुकूलकर्मकरणं तेन पुनर्देहान्तरमित्यनादिरेवायं संसारप्रवाह इत्युक्तप्रकारेणानर्थ इत्याशयः ॥ ८० ॥

**अतस्तदपवाधार्थं भज सर्वात्मना हरिम् ।**
**पश्यंस्तदात्मकं विश्वं स्थित्युत्पत्त्यप्यया यतः ॥ ८१ ॥**

**प्रकाशिका** – यत एवं लिङ्गकर्मभ्यां जायमानः संसारोऽनादिरतस्तदपवाधार्थं तयोर्विनाशाय सर्वात्मनः सर्वप्रकारेण हरिं भज । यतो हरेर्विश्वस्य स्थित्यादयः स्युस्तद्विश्वं तदात्मकं तदधीनं पश्यंश्चिन्तयन् ॥ ८१ ॥

**भक्तिः कृष्णे दया जीवेष्वकुण्ठज्ञानमात्मनि ।**
**यदि स्यादात्मनो भूयादपवर्गस्तु संसृतेः ॥ ८२ ॥**

**तात्पर्यम् – 'देहादिव्यतिरेकेण चिद्रूपोऽहमिति स्फुटम् । सदैवानुभवो भक्तिर्विष्णौ तद्दर्शनादनु । यस्यासौ मुच्यते क्षिप्रं संसारान्नात्र संशय' इति हरिवंशेषु ॥ ८२ ॥**

**प्रकाशिका** – संसारनिवृत्तिरूपमुक्तावविलंबेन साधनान्याह ॥ भक्तिरिति । नन्वर्थे ह्यविद्यमानेऽपीत्यत्र स्फुटतरविवेकाग्रहोऽहंममेति स्वातन्त्र्यभ्रमश्च संसारप्रवाहे हेतुरित्युक्तः । अतः क्षिप्रं तन्निवर्तकत्वं भक्तिज्ञानविशेषयोरेव भवति न साधारणभक्तिज्ञानयोरित्याशयेन प्रमाणं पठाति ॥ देहादीति । देहादिव्यतिरेकेण देहेन्द्रियादावभिमानं त्यक्त्वाऽहं चिद्रूप इति स्फुटं

सदैवानुभव इत्यकुंठज्ञानशब्दार्थकथनम् । दर्शनादन्वपरोक्षज्ञानानन्तरं विष्णौ यस्य भक्तिरिति भक्तिशब्दार्थकथनमित्यवगन्तव्यम् । तथा च देहात्मनोः स्फुटतरविवेकाग्रहोऽपरोक्षज्ञानोत्तर-कालीना परमभक्तिश्चात्राविलम्बेन संसारनिवर्तकतयोक्तेत्याशयः ॥ तथा चायमर्थः ॥ कृष्णे संसारनिवर्तके परमानन्दरूपे च विष्णौ भक्तिस्तद्दर्शनोत्तरकालीनो माहात्म्यज्ञानपूर्वकसुदृढः सर्वतोऽधिकप्रेमप्रवाहः सज्जीवेषु दया । उपलक्षणमेतत् । स्वसमेषु मैत्री स्वोत्तमेषु तारतम्येन भक्तिरित्यपि ग्राह्यम् । अन्यत्रोक्तत्वात् । आत्मनि स्वस्वरूपे देहाद्यभिमानव्यतिरेकेण चिद्रूपोऽहमित्यकुंठं यथा स्यात्तथा ज्ञानम् । सर्वदा देहात्मनोः स्फुटतरविवेकग्रह इति यावत् । इत्येतत्सर्वं यदि स्यात्तदाऽऽत्मनो जीवस्य संसृतेरपवर्गो मोक्षःक्षिप्रं स्यात् । आत्मनः परमात्मनः प्रसादादिति वा ॥ ८२ ॥

**अदृष्टं दृष्टवन्नङ्क्ष्येदभूतं स्वप्नवदन्यथा ।**
**भूतं भवद् भविष्यच्च सुप्तं सर्वरहोरहः ॥ ८३ ॥**

**तात्पर्यम् – 'संसारस्थमिदं सर्वमनित्यत्वाद्वृथा यतः । अतः प्राहुः स्वप्नसमं प्राज्ञा जगदिदं मृषे'ति विष्णुसंहितायाम् । 'सुषुप्तिस्वप्नयोश्चैव स्वर्गव्योम्नोस्तथैव च । अन्योन्यनामता ज्ञेया मनोबुध्योस्तथैव चे'ति शब्दनिर्णये ॥ अतो भूतं भवद्भविष्यच्च स्वप्न इत्यर्थः । 'रहो ब्रह्म तथा यज्ञः स्वः सत्यमिति गीयत' इति च ॥ ८३ ॥**

**प्रकाशिका –** सर्वदा नित्यानित्यवस्तुविवेको मुक्तौ प्रथमसाधनमित्याशयेनाह ॥ अदृष्टमिति । अत्र भूतं स्वप्नवदन्यथेत्यस्य च संसारे प्रतीतस्य स्वप्नवन्मिथ्यात्वमुच्यत इति भाति । अतस्तन्निरासाय विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ संसारस्थमिति । इदं सर्वं सोपयुक्तं चेतनाचेतनात्मकं वृथा परमपुरुषार्थोपयोगी न भवतीत्यर्थः । स्वप्नसमं स्वप्नदृष्टकरितुरगादि-समम् । तथा चान्यथेत्यस्य न मिथ्येत्यर्थः । किन्तु वृथा न मिथ्येत्युक्तं भवति । भूतंभवद्भविष्यच्च सुप्तमित्येतत्सुप्तशब्दार्थं प्रमाणेनैव दर्शयन्व्याख्याति ॥ सुषुप्तीति । सुषुप्तिस्वप्नयोरन्योन्यनामता ज्ञेयेति संबन्धः । चशब्दाः परस्परमन्योन्यनामतादिषु प्रापकाः । अवधारणानि तु घटपटादिरूपयोर्द्वयोरित्यर्थकानि । तथाशब्द उभयत्रान्योन्यनामतेत्यनुकर्षणार्थः । यत एवं शब्दनिर्णये सुषुप्तिवाचकशब्दवाच्यवत्वं स्वप्नस्योक्तमत इत्यर्थः । सुप्तमित्यस्य सुषुप्तिवाचकस्य स्वप्नोऽर्थ इत्यवगम्यत इत्यर्थः । चतुर्थपादे रह इत्यस्यापि योग्यमर्थं प्रमाणेनैव दर्शयति ॥ रह इति । ब्रह्म इत्यादिभिः शब्दैर्गीयत इत्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ अदृष्टं स्वर्गादिकं दृष्टवदैहिकैश्वर्यादिवन्नंक्ष्येत् नश्वरमिति जानीयात् । भूतं संसारे विद्यमानं पुत्रकलत्रादिकं

देहगेहादिकं च स्वप्नवत्स्वप्नदृष्टकरितुरगाद्यैश्वर्यवदन्यथाऽनित्यमतस्तस्मात्स्वप्नैश्वर्यादिवदन्यथा वृथा परमपुरुषार्थोपयोगी न भवतीत्यर्थः । किंबहुना भूतंभवद्भविष्यच्चेत्येतत्सर्वं सुप्तं स्वप्नगजादि-तुल्यमनित्यत्वाद्वृथैवेत्याशयः । तर्हि किं नित्यं पुरुषार्थोपयोगि चेत्यपेक्षयामाह ॥ सर्वरह इति । सर्वेषां रहस्यं सर्वशास्त्रमहातात्पर्यविषयमित्यर्थः । अतोऽयोग्येषु गोप्यत्वाद्रहोनामकं ब्रह्मैवोक्ता-दन्यथा नित्यं पुरुषार्थोपयोगी चेत्यर्थः । तथा चान्यदनित्यं वृथा चेति ज्ञात्वा तद्विपरीतं ब्रह्मेति च ज्ञात्वा तत्रैव निष्ठा कार्येत्याशयः ॥ ८३ ॥

**मैत्रेय उवाच–**

**भागवतमुख्यो भगवान् नारदो हंसयोर्गतिम् ।**
**प्रदर्श्य ह्यमुमामन्त्र्य सिद्धलोकं ततोऽगमत् ॥ ८४ ॥**

**प्रकाशिका –** हंसयोर्जीवपरमात्मनोर्गतिं स्थितिं सच्चिदानन्दलक्षणां हरेर्जगदुत्पत्त्यादिलक्षणां जीवस्य तदधीनत्वादिलक्षणां वा । सिद्धजातिषु नारदस्य प्राधान्यद्योतनाय प्रथम-पादस्याक्षराधिक्यम् ॥ ८४ ॥

**प्राचीनबर्ही राजर्षिः प्रजासर्गाभिरक्षणे ।**
**आदिश्य पुत्रानगमत् तपसे कपिलाश्रमम् ॥ ८५ ॥**

**प्रकाशिका –** प्रजानां सर्गे रक्षणे च पुत्रानादिश्य मन्त्रिणामग्रे कथयित्वा ॥ ८५ ॥

**तत्रैकाग्रमता वीरो गोविन्दचरणाम्बुजम् ।**
**विमुक्तसङ्गोऽनुभजन् भक्त्या तत्साम्यतामगात् ॥ ८६ ॥**

**प्रकाशिका –** तत्साम्यतां तस्य हरेःसाम्यतां निर्दुःखत्वेन परमानन्दत्वेन च समताम् ॥८६॥

**एतदध्यात्मपारोक्ष्यं गीतं देवर्षिणाऽनघ ।**
**यः श्रावयेद् यः श्रुणुयात् स लिङ्गेन विमुच्यते ॥ ८७ ॥**

**एतन्मुकुन्दयशसा भुवनं पुनानं**
**देवर्षिवर्यमुखनिःसृतमात्मशौचम् ।**
**यः कीर्त्यमानमधिगच्छति पारमेष्ठ्यं**
**नास्मिन् भवे भ्रमति मुक्तसमस्तबन्धः ॥ ८८ ॥**

**प्रकाशिका** – आत्मनो मनःशौचं शुद्धिर्यस्मात्तत्तथा । पारमेष्ठ्यं परमेष्ठिनः सर्वोत्तमस्य हरेः संबन्धि । अधिगच्छति गुरोः सकाशाज्जानाति । अस्मिन् भवे संसारे न भ्रमति । कुतः । यतो मुक्तसमस्तकर्मादिबन्धो भवति ॥ ८७,८८ ॥

**अध्यात्मपारोक्ष्यमिदं मयाऽधिगतमद्भुतम् ।**
**एवं त्रय्याश्रयः पुंसश्छिन्नोऽमुत्र च संशयः ॥ ८९ ॥**

**प्रकाशिका** – मया मैत्रेयनामकेन गहनार्थत्वादद्भुतमिदं नारदेन प्राचीनबर्हिष उपदिष्टमध्यात्मपारोक्ष्यमधिगतमधिकाद्गुरुमुखादधीतमेवातस्तवोपदिष्टं मत्त एव त्वयाऽप्यतिश्रद्धयाऽप्यधीत्याभ्यसनीयमिति शेषः । पुंसो जिज्ञासोस्त्रय्याश्रयो वेदोक्तकर्माश्रियत्वस्थिरविषयक इहाध्यात्मस्वरूपेऽमुत्राधिदैवादिस्वरूपे देहभेदविषयश्च संशयः । एवं कर्मणामदृष्टद्वारा स्थिरत्वप्रतिपादनेन लिङ्गदेहैक्यप्रतिपादनेन च छिन्न इत्यर्थः ॥ ८९ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## अथ त्रिंशोऽध्यायः ।

विदुर उवाच–

**ये त्वयाऽभिहिता ब्रह्मन् सुताः प्राचीनबर्हिषः ।**
**ते रुद्रगीतेन हरिं सिद्धिमापुः प्रतोष्य काम् ॥ १ ॥**

**प्रकाशिका** – ॥ हरिः ॐ ॥ हरिं प्रतोष्य कां सिद्धिं पुरुषार्थं प्रापुः ॥ १ ॥

**किं चेह नार्हन्त्यपरत्र वा सुखं कैवल्यनाथप्रियपार्श्ववर्तिनः ।**
**आसाद्य देवं गिरिशं यदृच्छया प्रापुः परं नूनमथ प्रचेतसः ॥ २ ॥**

**प्रकाशिका** – ये लोके विष्णुभक्तास्ते ऐहिकामुष्मिकसकलपुरुषार्थभाजो भवंत्येते तु विष्णुभक्तोत्तमं हरं प्राप्ता अतः कीदृशीं सिद्धिं प्राप्ता इति पृच्छति ॥ किं चेहेति । तदेतत्प्रेय इति श्रुतेः कैवल्यनाथः प्रियश्च कैवल्यस्य नाथो विष्णुस्तस्य प्रिया ब्रह्माद्यास्तेषां पार्श्ववर्तिनः समीपे वर्तमानाः । तद्भक्ता इति यावत् । पुरुषा इह लोकेऽपरत्रामुष्मिंल्लोके किं पुरुषार्थरूपं सुखं नार्हन्ति सर्वमर्हन्त्येवातो प्रचेतसः गिरिशं देवं यदृच्छया हरीच्छयैवासाद्य परं पुरुषार्थं प्रापुरिति नूनं निश्चितमतः सः कीदृश इत्याशयः ॥ २ ॥

मैत्रेय उवाच–

**प्रचेतसोऽन्तरुदधौ पितुरादेशकारिणः ।**
**जपयज्ञेन तपसा पुरञ्जनमतोषयन् ॥ ३ ॥**

**तात्पर्यम् – 'पुरेषु त्वञ्जनाज्जीवः पुरञ्जन इतीरितः । पुराणां जननाद्विष्णुर्व्यञ्जकत्वं तयोरपी'ति तन्त्रभागवते ॥ ३ ॥**

**प्रकाशिका** – सर्वमपि पुरुषार्थं प्राप्तुमिति वक्तुमुपक्रमते ॥ प्रचेतस इति । अत्र पुरंजनं पूर्वोक्तराजानमतोषयन्निति प्रतीतिनिवारणाय पुरंजनशब्दं विष्णुपरतया प्रमाणेनैव निर्वक्ति ॥ पुरेष्विति । विष्णुः पुराणां जननात्पुरंजन इतीरितः । अनेन पुरमिति समुदायापेक्षयैकवचनम् । पुरं जनयतीति पुरंजन इति निर्वचनं सूचितम् । नन्वेवं पूर्वं पुरंजनशब्देन जीवग्रहणे विरोध इत्यतस्तत्र निर्वचनान्तरमभिप्रेतमित्याह ॥ पुरेष्विति । तुशब्दोऽवधारणे । अंजनादेव व्यञ्जनादेव। अञ्ज गताविति धातोः । न जननादित्यर्थः । यथा पुरं जनकत्वं विष्णावेव तथा पुरेष्वंजनमपि जीव एव किं नेत्याह ॥ व्यञ्जकत्वमिति । व्यक्तीकर्तृत्वमित्यर्थः । तथा च

पुरेष्वंजति व्यक्तीभवतीति पुरंजनशब्दवाच्यत्वं द्वयोरपि भवतीति भावः ।। ततश्चायं श्लोकार्थः ।। जपयज्ञेन रुद्रगीतस्तोत्रजपलक्षणयज्ञेन तपसा च पुरञ्जनं सर्वशरीरोत्पादकं सर्वशरीरेषु नियामकतया व्यक्तं विष्णुमतोषयन्प्रसादाभिमुखं चक्रुः ।। ३ ।।

**दिव्यवर्षसहस्रान्ते पुरुषस्तु सनातनः ।**
**तेषामाविरभूत् कृच्छ्रं शान्तेन शमयन् रुचा ।। ४ ।।**
**सुपर्णस्कन्धमारूढो मेरुशृङ्गमिवाम्बुदः ।**
**पीतवासा मणिग्रीवः कुर्वन् वितिमिरा दिशः ।। ५ ।।**

**प्रकाशिका** – तेषां कृच्छ्रं क्लेशं रुचा कांत्या शमयन् शान्तेन सुखकरेणैव वपुषाऽऽविरभूत् ।। ४,५ ।।

**कासिष्णुना कनककर्णविभूषणेन भ्राजत्कपोलवदनो विलसत्किरीटः ।**
**अष्टायुधैः करवरैर्मुनिभिः सुरेन्द्रैरासेवितो गरुडकिन्नरगीतकीर्तिः ।। ६ ।।**

**प्रकाशिका** – कासिष्णुना । कासृ दीप्ताविति धातोः । दीप्यमानेन कनकमयेन भूषणेन मकरकुण्डलेन । भ्राजद्भ्यां कपोलाभ्यां युक्तं वदनं यस्य स तथा ।। ६ ।।

**पीनायताष्टभुजमण्डलमध्यलक्ष्म्या**
**स्पर्धच्छ्रिया परिवृतो वनमालया यः ।**
**बर्हिष्मतः पुरुष आह सुतान् प्रपन्नान्**
**पर्जन्यनादरुतया सघृणावलोकः ।। ७ ।।**

**प्रकाशिका** – पीनाश्चते आयता अष्टौ भुजास्तेषां मण्डलः समूहस्तन्मध्ये उरसि स्थितया लक्ष्म्या स्पर्धती स्पर्धमानेव स्थिता श्रीः शोभा यस्याः सा तया वनमालया परिवृत आद्यः पुरुषः प्रपन्नान् बर्हिष्मतः सुतानाह । पर्जन्यस्य मेघस्य नादवद्रुतं नादो यस्याः सा तया वाचा । घृणया कृपया सह वर्तत इति सघृणस्तादृशावलोको यस्य स तथा ।। ७ ।।

**श्रीभगवानुवाच –**

**वरं वृणीध्वं भद्रं वो यूयं मे नृपनन्दनाः ।**
**सौहार्देनापृथग्धर्मास्तुष्टोऽहं सौहृदेन वः ।। ८ ।।**

**प्रकाशिका** – सौहार्देन हेतुनाऽपृथग्धर्माः शयनाशनगमनादिरूपा येषां ते तथा । अहं वः सौहृदेन परस्परं मित्रभावेन मयि भक्त्या वा तुष्टोऽस्मि । वो भद्रमस्तु मे मत्तो वरं वृणीध्वम् ।। ८ ।।

**योऽनुस्मरति सन्ध्यायां युष्माननुदिनं नरः ।**
**तस्य भ्रातृष्वात्मसाम्यं तथा भूतेषु सौहृदम् ।। ९ ।।**

**प्रकाशिका** – भ्रातृष्वात्मसाम्यं ज्ञानादिगुणैरात्मसाम्यम् । तथा चोपासकः स्वसमानगुण-कर्मादियुक्तभ्रातृमान् भवति । भूतेषु प्राणिषु सौहृदं च भविष्यति ।। ९ ।।

**ये तु मां रुद्रगीतेन सायंप्रातः समाहिताः ।**
**स्तुवन्त्यहं कामवरान् दास्ये प्रज्ञां च शोभनाम् ।। १० ।।**

**प्रकाशिका** – तेभ्यो दास्ये । किं युष्मभ्यमिति शेषः ।। १० ।।

**यद् यूयं पितुरादेशमग्रहीष्ट मुदाऽन्विताः ।**
**अतो व उशती कीर्तिर्लोकाननुभविष्यति ।। ११ ।।**

**प्रकाशिका** – अग्रहीष्ट गृहीतवन्तः । अथो इति पाठे तस्मादित्यर्थः । उशती निर्मला । अनुभविष्यति प्राप्तो भविष्यतीत्यर्थः ।। ११ ।।

**भविता विश्रुतः पुत्रोऽनवमो ब्रह्मणो गुणैः ।**
**य एतामात्मवीर्येण त्रिलोकीं पूरयिष्यति ।। १२ ।।**

**प्रकाशिका** – आत्मनो वीर्येण सन्तानेन ।। १२ ।।

**कण्डोः प्रम्लोचया लब्धा कन्या कमललोचना ।**
**तां चापविद्धां जगृहुर्भूरुहा नृपनन्दनाः ।। १३ ।।**

**प्रकाशिका** – अनकूलभार्याभावे कथमौरसपुत्रप्राप्तिरित्यत आह ।। कण्डोरिति । प्रम्लोचयाऽप्सरसा । अपविद्धां त्यक्तां भूरुहा वृक्षाः । जगृहुः । अनेन कण्डुना ऋषिणा तपसि क्रियमाणे तन्नाशार्थमिन्द्रेण प्रेषितया प्रम्लोचया मोहितः कण्डुस्तया बहुकालं रेमे सा च ततः स्वर्गं गच्छती कण्डोर्जातं गर्भं वृक्षेषु त्यक्त्वा जगाम । तदा गर्भं वृक्षाः पालयामासुरिति कथां सूचयति ।। १३ ।।

**क्षुत्क्षामाया मुखे राजा सोमः पीयूषवर्षिणीम् ।**
**देशिनीं रोदमानाया निदधे स दयान्वितः ॥ १४ ॥**

**प्रकाशिका –** क्षुत्क्षामायाः श्रान्तायाः प्रसिद्धो वनस्पतीनां राजा सोमश्चन्द्रोऽमृतस्राविर्णीं देशिनीं तर्जनीं रुदंत्यास्तस्या मुखे निदधे ॥ १४ ॥

**प्रजाविसर्ग आदिष्टाः पित्रा मामनुवर्तता ।**
**तत्र कन्यां वरारोहां तामुद्वहत माचिरम् ॥ १५ ॥**

**प्रकाशिका –** प्रजाविसर्गे प्रजानां विविधसृष्टौ । तत्र तस्मिन्प्रजासर्गे कर्तव्ये ॥ १५ ॥

**अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा ।**
**अपृथग्धर्मशीलेयं भूयात् प्रत्यर्पिता मया ॥ १६ ॥**

**प्रकाशिका –** बहूनामस्माकं कथमेका भार्या स्यादित्यत आह ॥ अपृथगिति । अपृथग्धर्मः शीलं येषां वः पत्नी भूयात् । भवत्सु प्रत्यर्पितः समर्पित आशयो यया सा । धर्मशील-योरैक्यान्मद्वाक्याच्च न दृष्टविरोध इति भावः ॥ १६ ॥

**दिव्यवर्षसहस्राणां सहस्रमहतौजसः ।**
**भौमान् भोक्ष्यथ भोगान् वै दिव्यांश्चानुग्रहान्मम ॥ १७ ॥**

**तात्पर्यम् – दिव्यवर्षसहस्राणामिति सहस्रशब्दो बहुत्ववाची । 'मानुषाणां वत्सराणां लक्षद्वादशकं पुरा । प्रचेतोभिरियं पृथ्वी पालिताऽव्याहतेन्द्रियैरि'ति ब्रह्माण्डे ॥ १७ ॥**

**प्रकाशिका –** दिव्यवर्षसहस्राणां सहस्रमित्यनेन देववर्षाणां दशलक्षसहस्रवर्षपर्यन्तं प्रचेतोभी राज्यपालनं कृतमित्याभाति । अतोऽत्र विवक्षितं सहस्रशब्दार्थं दर्शयति ॥ दिव्यवर्षेति । दिव्यवर्षसहस्राणामिति वाक्ये विद्यमानः सहस्रमिति शब्दार्थो योग्यबहुत्ववाचीत्यर्थः । प्रतीत एवार्थः किं न स्यादित्यतः प्रचेतसां राज्यपरिपालनकालनियमप्रतिपादकप्रमाणं पठति ॥ मनुष्याणामिति । अव्याहतेन्द्रियैरित्यनेनामितौजस इत्येतदुक्ततात्पर्यम् । इति ब्रह्माण्डे यत उक्तमतो बहुत्ववाची । अन्यथा तद्विरोध इत्याशयः । तथा । त्रयाणां दिव्यवर्षसहस्राणामुपरि सहस्रं दिव्यवर्षाणां त्रयस्त्रिंशदधिकानि त्रीणि शतानि मनुष्यवत्सराणां चतुर्विंशत्यधिकशतमित्येवं रूपं बहुकालमिति मूलार्थ इत्याशयः ॥ १७ ॥

**अथ मय्यनपायिन्या भक्त्या पक्वगुणाशयाः ।**
**उपयास्यथ मद्धाम निर्विद्य निरयादतः ।। १८ ।।**

**प्रकाशिका –** पक्वं परिपाकं प्राप्तो गुणाशयः प्राकृतान्तःकरणं येषां ते तथा । अतो निरयान्निरयतुल्यात्संसारात् ।। १८ ।।

**गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम् ।**
**मद्वार्तायातयामानां न बन्धाय गृहा मताः ।। १९ ।।**

**प्रकाशिका –** ननु गृहे प्रविष्ठानामस्माकं तदासक्त्या बन्ध एव स्यादतः कथं त्वद्धामप्राप्ति-रित्यत आह ।। गृहेष्विति । कुशलं मय्यर्पितं कर्म येषां मद्वार्तया यातो गतयामः कालविशेषो येषाम् । च शब्दोऽवधारणे । नैवेत्यन्वयः ।। १९ ।।

**न व्यवह्रियते यज्ञो ब्रह्मैतद् ब्रह्मवादिभिः ।**
**न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः ।। २० ।।**

**तात्पर्यम् – यज्ञो ब्रह्म विष्णवाख्यं ब्रह्म यथानुभवं न व्यवह्रियते । 'सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुम' इति भारते ।। २० ।।**

**प्रकाशिका –** ननु भगवद्वार्ता संसारच्छेदिनी चेत्तर्हि तस्याः सुलभत्वात्सर्वेऽपि कुतो न मुच्यन्त इत्यत आह ।। न व्यवह्रियत इति । अत्र यज्ञस्य क्रियारूपत्वात्कथं यज्ञो ब्रह्मेति सामानाधिकरण्यमित्याशङ्कापरिहाराय तदनूद्य व्याख्याति ।। यज्ञो ब्रह्मेति । विष्णवाख्यामित्यनेन यज्ञशब्दो विष्णुपरो न क्रियापर इति सूचयति । ब्रह्मवादिभिर्ब्रह्म न व्यवह्रीयत इति व्याहृतोऽतोऽत्रापेक्षितमध्याहृत्य योजयति ।। यथाऽनुभवमिति । अत्र प्रमाणमाह ।। सूक्ष्मेति । सूक्ष्मविषयकेन मनसा योग्यतानुसारेण जानीमो विद्मः । तथाऽपि यथाऽनुभवं वक्तुं न शक्नुम इत्यर्थः ।। ततश्चायं श्लोकार्थः ।। ।। यतो यस्मिन्विषये गता योग्यतानुसारेण अवगतवन्तः । विपदि न मुह्यन्ति न शोचन्ति । संपदि न हृष्यन्ति । तदेतद्यज्ञो ब्रह्म विष्णवाख्यं ब्रह्म ब्रह्मवादिभिर्यथाऽनुभवं न व्यवह्रीयते । अतो मोचिकाया मद्वार्ताया असुलभत्वान्न सर्वेषां मुक्तिरिति भावः । यज्ञविद्याऽपि ब्रह्मपरेति सूचयितुं यज्ञ इत्युक्तम् ।। २० ।।

**मैत्रेय उवाच–**

**एवं ब्रुवाणं पुरुषार्थभाजनं जनार्दनं प्राञ्जलयः प्रचेतसः ।**
**तद्दर्शनध्वस्ततमोरजोमला गिराऽगृणन् गद्गदया सुहृत्तमम् ।। २१ ।।**

**प्रकाशिका** – पुरुषार्थं भाजयति प्रापयतीति तथा तम् ॥ २१ ॥

**प्रचेतस ऊचुः–**

**नमो नमः क्लेशविनाशनाय निरूपितोदारगुणाह्वयाय ।**
**मनोवचोवेगपुरोजवाय सर्वाक्षमार्गैरगताध्वने नमः ॥ २२ ॥**

**प्रकाशिका** – निरूपिताः प्रतिपादिता उदारगुणा यैस्ते तथा । विद्यादय आह्वया नामानि यस्य तस्मै । वाङ्मनसोर्वेगादपि पुरस्थितवेगाय । पुरोग्रतो जवोवेगो यस्य मनोवचसोरगोचरायेत्यर्थः । अत एव सर्वेषामक्षाणां सर्वेन्द्रियाणां मार्गैर्निर्मार्गणैरगताध्वनेऽज्ञातमार्गाय तस्मै नमः ॥ २२ ॥

**शुद्धाय शान्ताय नमः स्वनिष्ठमनस्यपार्थे विलसद्द्वयाय ।**
**नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय ॥ २३ ॥**

**तात्पर्यम्** – **सु अनिष्ठमनसि । 'अनवस्थितबुद्धीनां द्वितीयं दृश्यते हरेः । सम्यक्स्वस्थितबुद्धीनामिदं सर्वं हरेर्वश' इति च । 'नित्यं गृहीताः सत्वाद्या विग्रहाश्च त्रयः सदा । ज्ञानानन्दात्मकास्ते तु विग्रहा निर्गुणास्तथा । द्वौ तत्र ब्रह्मरुद्रस्थावेको वैकुण्ठधामग' इति प्रवृत्तसंहितायाम् ॥ २३ ॥**

**प्रकाशिका** – शान्तायाक्रूराय सुखपूर्णायेति वा ॥ स्वनिष्ठमनसीति । अत्र स्वनिष्ठमनसि स्वाश्रिते मनस्यपाश्रितं यथा स्यात्तथा विलसद्द्वयायेतीश्वरस्य भ्रान्तित्वमुच्यत इति भाति । अतोऽत्र विवक्षितं छेदं दर्शयन्व्याख्याति ॥ सु अनिष्टेति । ततश्च सु सम्यगनिष्टे स्वस्मिन्नवस्थिते जनानां मनसीति मूलार्थ इत्याशयः । अपार्थे विलसद्द्वयायेत्यनेन द्वितीयस्य जगतोऽसत्वमुच्यत इति भाति । अतोऽत्र विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ अनवस्थितेति । अनेन स्वनिष्ठमनसीत्यस्योक्तव्याख्यानमपि प्रमापितमिति ज्ञातव्यम् । द्वितीयं स्वतन्त्रं हरेः सकाशात् । हरेर्वशे दृश्यत इत्यन्वयः । गृहीतमायागुणविग्रहायेत्यत्र प्रकृतिगुणानां सत्त्वादीनां ब्रह्मविष्णुरुद्राख्यानां विग्रहाणां च ग्रहणं कादाचित्कमिति प्रतीयतेऽतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ नित्यं गृहीता इति । सदा गृहीताः ते विग्रहास्तु विशेषेण ज्ञानानन्दात्मकाः । निर्गुणा गुणविकाररहिता ब्रह्मरुद्रस्थौ ब्रह्मरुद्रदेहस्थौ तन्नामानावेकोऽन्यो विष्णुनामा ॥ ततश्चायं श्लोकार्थः ॥ अशुद्धबुद्धीनां जनानां सु अनिष्टे मनसि सम्यक् स्वात्मन्यनवस्थिते मनस्यपार्थेऽपगतोऽर्थो यथा स्यात्तथा विलसत्प्रतीयमानं द्वयं द्वितीयं स्वतन्त्रं यस्मात्स तथा तस्मै । स्थानं स्थितिर्लयः संहार उदय उत्पत्तिस्तदर्थं गृहीता नित्यं गृहीता अपि स्वकार्योन्मुखीकृतायाः प्रकृतेर्गुणाः सत्त्वाद्या विष्णवादिनामकास्त्रयो विग्रहाश्च येन ॥ २३ ॥

**नमो विशुद्धसत्त्वाय हरये हरिमेधसे ।**
**वासुदेवाय कृष्णाय प्रभवे सर्वसात्वताम् ॥ २४ ॥**

तात्पर्यम् – 'हरणाज्ज्ञानरूपत्वाद्धरिमेधा विभुः स्मृत' इति च ॥ २४ ॥

**नमः कमलनाभाय नमः कमलमालिने ।**
**नमः कमलपादाय नमस्ते कमलेक्षण ॥ २५ ॥**

**प्रकाशिका** – विशुद्धसत्त्वाय निर्दोषज्ञानबलरूपाय विशुद्धश्चायं सत्त्वः सर्वगुणात्मकश्च तस्मै । हरिः सर्वगुणात्मत्वात्सत्त्व इत्यभिधीयत इति वचनात् । हरिमेधस इत्यस्य विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ हरणादिति । तथा च भक्तानां पापहरणाद्धरिः । ज्ञानरूपत्वान्मेधाः । हरिश्चासौ मेधाश्च हरिमेधास्तस्मा इति मूलार्थ इत्याशयः ॥ २४,२५ ॥

**नमः कमलकिञ्जल्कपिशङ्गामलवाससे ।**
**सर्वभूतनिवासाय नमोऽयुङ्क्ष्महि साक्षिणे ॥ २६ ॥**

**प्रकाशिका** – नमो नमस्कारम् । अयुंक्ष्महि तत्संबन्धमकार्ष्म ॥ २६ ॥

**रूपं भगवता त्वेतदशेषक्लेशसंक्षयम् ।**
**आविष्कृतं नः क्लिष्टानां किमन्यदनुकम्पया ॥ २७ ॥**

**प्रकाशिका** – यदुक्तं वरं वृणीध्वमिति तत्रोत्तरमाह ॥ रूपमिति । अशेषाणां समस्तानां क्लेशानां संक्षयो यस्मान्नोऽनुकंपयाऽऽविष्कृतं प्रकटितम् । अतोऽन्यत्किं न किमपि । एतादृशानुकंपैवास्माभिः प्रार्थ्येत्याशयः ॥ २७ ॥

**एतावत्त्वं हि विभुभिर्भाव्यं दीनेषु वत्सलैः ।**
**यदनुस्मर्यते काले स्वबुद्ध्याऽभद्ररन्धन ॥ २८ ॥**

**प्रकाशिका** – कुत इत्यत आह ॥ एतावदिति । हे अभद्ररन्धन पापदहन । दीनेषु वत्सलैर्विभुभिः प्रभुभिः काले भक्तानां क्लेशकाले प्राप्त्या स्वबुद्ध्या प्रार्थनाद्यभावेऽपि अयं रक्षणीय इति स्वबुद्ध्या भक्तोनुस्मर्यत इति यत् । एतावत्त्वमेतादृशधर्मवत्त्वं तेषां भाव्यं प्रसिद्धमेतदित्यर्थः ॥ २८ ॥

**येनोपशान्तिर्भूतानां क्षुल्लकानामपीहितम् ।**
**अन्तर्हितोऽन्तर्हृदये कस्मान्नो वेद नाशिषः ॥ २९ ॥**

**प्रकाशिका –** येनेहितेन क्षुल्लकानामल्पानामपि भूतानामुपशान्तिः सुखं भवति तदीहित-मिष्टमन्तर्हृदयेऽन्तर्हितोऽप्रत्यक्षः सन् भगवान्वेदातो नोऽस्माकमाशिषो मनोरथान्कस्मान्न वेद । अपि तु जानास्येवेत्यर्थः ॥ २९ ॥

**असावेव वरोऽस्माकमीप्सितो जगतां पते ।**
**प्रसन्नो भगवानेषामपवर्गगुरुर्गतिः ॥ ३० ॥**

**प्रकाशिका –** अस्माकं त्वत्प्रसादादन्यो वरो न प्रार्थनीय इत्याहुः ॥ असावेवेति । येषामस्माकं भवान्प्रसन्नोऽसौ प्रसन्नो भगवानेवास्माकमीप्सितो वरो नान्य इत्यन्वयः । कीदृशः । अपवर्गगुरुर्मोक्षमार्गोपदेष्टा गम्यत इति गतिः ॥ ३० ॥

**वरं वृणीमहेऽथापि नाथ त्वत् परतः परात् ।**
**नह्यन्तस्त्वद्विभूतीनां योऽनन्त इति गीयते ॥ ३१ ॥**

**प्रकाशिका –** यद्यपि त्वत्प्रसाद एव प्रार्थ्योऽथाऽपि । हे नाथ । त्वत्त्वत्तः सुसंगतिलक्षणं वरं वृणीमहे । कथं भूतात् । परतो रमादेरपि परात् । परतः परत्वमुपपादयति ॥ न हीति । अत एव स त्वमनन्त इति गीयसे ॥ ३१ ॥

**पारिजातेऽञ्जसा लभ्ये सारङ्गोऽन्यन्न सेवते ।**
**त्वदङ्घ्रिमूलमासाद्य साक्षात् किं किं वृणीमहे ॥ ३२ ॥**

**प्रकाशिका –** वक्ष्यमाणादन्यद्वरं न वृणीमह इत्याशयेनाह ॥ पारिजात इति । लुप्तोपममेतत् । यथा पारिजाते पुष्पेऽजसा तत्त्वेन लभ्ये लब्धुं योग्ये सारङ्गो भ्रमरोऽन्यच्चंपकादिपुष्पं न सेवते सर्वपुष्परसानां कल्पवृक्षपुष्प एव लाभात् । तथा साक्षात्त्वदंघ्रिमूलमासाद्य किमन्यत्पुरुषार्थं किं किमर्थं वृणीमहे । सर्वेषां त्वदंघ्रिमूलप्राप्त्यैव लाभादित्याशयः ॥ ३२ ॥

**यावत् ते मायया स्पृष्टा भ्रमाम इह कर्मभिः ।**
**तावद् भवत्प्रसङ्गानां सङ्गः स्यान्नो भवे भवे ॥ ३३ ॥**

**प्रकाशिका –** एवमन्यदप्रार्थ्यमित्युक्त्वेदानीं वरणीयत्वमाहुः ॥ यावत्त इति । स्पृष्टाः संबद्धाः सन्तो भवतः प्रकृष्टः सङ्गो येषां तेषां सङ्गो नोऽस्माकं भवेज्जन्मनि जन्मनि ॥ ३३ ॥

**तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।**
**भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ३४ ॥**

**प्रकाशिका** – सत्सङ्गस्य श्रैष्ठ्यमुपपादयति ॥ तुलयामेति चतुर्भिः । भगवत्सङ्गिनां सङ्गस्य लवेनापि ॥ ३४ ॥

**यत्रेड्यन्ते कथा मृष्टास्तृष्णायाः प्रशमो यतः ।**
**निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥ ३५ ॥**
**यत्र नारायणः साक्षाद् भगवान् न्यासिनां गतिः ।**
**प्रस्तूयते सत्कथासु मुक्तसङ्गैः पुनः पुनः ॥ ३६ ॥**

**प्रकाशिका** – विषयेषु तृष्णाया निर्वैरं वैराभावः ॥ ३५, ३६ ॥

**तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया ।**
**भीतस्य किं न रोचेत तावकानां समागमः ॥ ३७ ॥**

**प्रकाशिका** – तीर्थानां पावनेच्छया पद्भ्यां तीर्थानि विचरतां तावकानां समागमः संसाराद्भीतस्य पुंसो न रोचेतेति न किन्तु रोचत एव । तेषां विचरतामित्यस्य तीर्थयात्राव्याजेन स्वयमेव प्राप्तानामित्याशयः ॥ ३७ ॥

**वयं तु साक्षाद्भगवत्प्रियस्य प्रियस्य सख्युः क्षणसङ्गमेन ।**
**सुदुश्चिकित्सस्य भवस्य मृत्योर्भिषक्तमं त्वाऽद्यगतिं गताः स्मः ॥ ३८ ॥**
**यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाऽश्च सदानुवृत्त्या ।**
**आर्या ह्यनाथाः सुहृदो भ्रातरश्च सर्वाणि भूतान्यनसूययैव ॥ ३९ ॥**

**प्रकाशिका** – सत्सङ्गफलमस्माभिरेवानुभूतमित्याहुः ॥ वयं त्विति । भगवान्प्रियो यस्य स तथा तस्य तव सख्युर्भवस्य रुद्रस्य । भवस्य संसारलक्षणस्य मृत्योर्मारकस्य व्याधेरित्यर्थः । भिषक्तममतिशयेन चिकित्सकं वैद्यं त्वा त्वां गतिं गम्यं गताः प्राप्ताः । स्मेति स्वानुभवप्रसिद्धिं प्रमाणयति ॥ ३८,३९ ॥

**यन्नः सुतप्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु ।**
**सर्वं तदेतत् पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय ॥ ४० ॥**

**प्रकाशिका** – वरान्तरमपि वृणुते । ॥ यन्न इति द्वाभ्याम् । निरन्धसां निरन्नानाम् । अदभ्रमनल्पम् ॥ ४० ॥

**मनुः स्वयंभूर्भगवान् भवश्च येऽन्ये तपोज्ञानविशुद्धसत्त्वाः ।**
**अदृष्टपारा अपि यन्महिम्नः स्तुवन्त्यथो त्वाऽऽत्मसमं गृणीमः ॥ ४१ ॥**

**प्रकाशिका –** अज्ञानिनामप्यस्माकं त्वत्स्तुतिर्न युक्तेत्याहुः ॥ मनुरिति । यस्य तव महिम्नो न दृष्टं पारं यैस्तेऽपि त्वामात्मसमं स्वशक्त्यनुरूपं स्तुवन्ति । अथो तस्माद्वयमप्यात्मसमं गृणीमः ॥ ४१ ॥

**नमः समाय शुद्धाय पुरुषाय पराय च ।**
**वासुदेवाय सत्वाय तुभ्यं भगवते नमः ॥ ४२ ॥**

**तात्पर्यम् – 'हरिः सर्वगुणात्मत्वात्सत्व इत्यभिधीयत' इति षाड्गुण्ये ॥ ४२ ॥**

**प्रकाशिका –** भक्त्युद्रेकात्पुनर्नमन्ति ॥ नम इति । समाय सर्वत्रैकप्रकाराय वैषम्यनैर्घृण्य-रहितायेति वा । लक्ष्म्यासहितायेतिवा अत्र सत्त्वायेत्यस्य विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ हरिरिति । तथाच सत्त्वाय सर्वगुणात्मने ॥ ४२ ॥

**मैत्रेय उवाच–**

**इति प्रचेतोभिरभिष्टुतो हरिः प्रीतस्तथेत्याह शरण्यवत्सलः ।**
**अनिच्छतां यानमतृप्तचक्षुषां ययौ स्वधामानपवर्गविक्रमः ॥ ४३ ॥**

**प्रकाशिका –** यानं गमनमनिच्छतां सतामनपवर्गविक्रमोऽविनष्टपराक्रमः गां महीम् ॥ ४३ ॥

**अथ निर्याय सलिलात् प्रचेतस उदन्वतः ।**
**वीक्ष्याकुप्यन् द्रुमैश्छन्नां गामारोढुमिवोत्थितैः ॥ ४४ ॥**

**प्रकाशिका –** प्रचेतस उदन्वतः सिन्धोः सलिलान्निर्याय निर्गत्य गां स्वर्गमारो-ढुमिवोत्थितैर्द्रुमैर्गामाच्छन्नां महीं वीक्ष्य द्रुमेभ्यः अकुप्यन् । तदा प्राचीनबर्हिषः प्रव्रजितत्वाद-राजके कर्षणाद्यभावात् द्रुमैर्भूमिः छन्नाऽभूदिति ज्ञातव्यम् ॥ ४४ ॥

**ततोऽग्निमारुतौ राजन्नमुञ्चन् मुखतो रुषा ।**
**महीं निर्वीरुधं कर्तुं सांवर्तक इवाप्यये ॥ ४५ ॥**

**प्रकाशिका –** निर्गतवीरुधो यस्याः सा तथाभूतां कर्तुं सांवर्तकः प्रलयकालाग्निरिवाप्यये प्रलये ॥ ४५ ॥

**भस्मसात् क्रियमाणांस्तान् द्रुमान् वीक्ष्य पितामहः ।**
**आगतः शमयामास पुत्रान् बर्हिष्मतो नयैः ॥ ४६ ॥**

**प्रकाशिका** – नयैर्युक्तिभिः ॥ ४६ ॥

**तत्रावशिष्टा ये वृक्षा भीता दुहितरं तदा ।**
**आजह्रुस्ते प्रचेतोभ्य उपदिष्टाः स्वयंभुवा ॥ ४७ ॥**

**प्रकाशिका** – आजह्रुः समर्पयामासुः ॥ ४७ ॥

**ते च ब्रह्मण आदेशान्मारिषामुपयेमिरे ।**
**यस्यां महदवज्ञानादजन्यजनयोनिजः ॥ ४८ ॥**

**प्रकाशिका** – मारिषां तन्नामिकाम् । अजनयोनिर्ब्रह्मा तस्माज्जातो दक्षो महतो महारुद्रस्यावज्ञानान्निंदात् । अजनि जज्ञे । तामुपयेमिरे ब्रह्मपुत्रस्यापि क्षत्रिययोनिजनने महादेवावज्ञैव कारणमित्याशयः ॥ ४८ ॥

**चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविप्लुते ।**
**यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः ॥ ४९ ॥**

**प्रकाशिका** – तज्जन्मप्रयोजनमाह ॥ चाक्षुष इति । प्राक् सर्गे पूर्वसृष्टौ कालेन विप्लुते नष्टे दैवेन हरिणा ब्रह्मणा चोदितः । चुदप्रेरण इति धातोः ॥ ४९ ॥

**यो न्यक्चकार सर्वेषां तेजस्तेजस्विनां रुचा ।**
**स्वयोग्योपात्तदाक्ष्याच्च कर्मणा दक्षमब्रुवन् ॥ ५० ॥**

**प्रकाशिका** – तस्य दक्षनामप्रवृत्तौ निमित्तमाह ॥ यो न्यक्चकारेति । कर्मणा स्वयोग्योपात्तदाक्ष्याच्च स्वयोग्यतानुसारेण प्राप्तकौशलाच्चेत्यर्थः । अब्रुवन् । ब्रह्मादय इति शेषः ॥ ५० ॥

**तं प्रजासर्गरक्षायामनादिर्भगवानजः ।**
**युयोज युयुजुस्तं वै सर्वेऽन्ये च प्रजेश्वराः ॥ ५१ ॥**

**प्रकाशिका** – अनादिर्ब्रह्मा युयोज प्रजेश्वरा मरीच्यादयश्च युयुजुः । सोऽजनीत्यन्वयः ॥५१॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे त्रिंशोऽध्यायः ॥ २७ ॥

## अथ एकत्रिंशोऽध्यायः ।

**मैत्रेय उवाच–**

**तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम् ।**
**स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन् गृहात् ॥ १ ॥**

**प्रकाशिका –** ॥ हरिः ॐ ॥ ततो मानुषद्वादशलक्षवत्सरेषु राज्यपरिपालनानन्तर-मुत्पन्नविज्ञाना वेदान्तविज्ञानसुनिश्चितार्था उपायास्यथ मद्धाम निर्विद्य निरयादत इत्यधोक्षज-भाषितं स्मरन्तः ॥ १ ॥

**दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा ।**
**प्रतीच्यां दिशि वेलायां सिद्धोऽभूद् यत्र जाजलिः ॥ २ ॥**

**तात्पर्यम् – 'पारिव्राज्यं ब्रह्मसत्रं न्यास इत्यभिधीयत' इत्यभिधानम् ॥ सर्वभूतात्मनि हरौ मेधा यत्र तद्ब्रह्मसत्रं सर्वभूतात्ममेधः । 'हरिमेधास्तु संन्यासो हरौ मेधाऽत्र यद्भवेदि'ति षाड्गुण्ये ॥ २ ॥**

**प्रकाशिका –** ब्रह्मसत्रेणेत्यस्य यागविशेषार्थकत्वं प्रतीयते । संन्यासिनां यागाभावादतोऽस्य योग्यमर्थं प्रमाणेनैवाह ॥ पारिव्राज्यमिति । तथा च ब्रह्मसत्रेण संन्यासाश्रमेण दीक्षिताः । तदाश्रमोचितध्यानानुष्ठाने बद्धसंकल्पा इति यावत् । सर्वभूतानामात्मा मनस्तस्य मेधसा ज्ञानेनेत्यन्यथाप्रतीतिवारणाय स्ववाक्येन व्याचष्टे ॥ सर्वेति । सर्वभूतात्मनि सर्वस्वामिनि सर्वभूतांतर्यामिणि वा हरौ मेधा ज्ञानं यत्र तद्ब्रह्मसत्रं सर्वभूतात्ममेधः । ब्रह्मसत्रमित्यन्य-पदार्थप्रदर्शनेनैव ब्रह्मसत्रमित्यनेन विशेषणतया चेति दर्शितम् । उक्तार्थे प्रमाणमाह ॥ हरिमेधा इति । अत्र संन्यासे यद्यस्मात्सर्वेषां भूतानां प्राणिनामात्मनि हरौ मेधा ज्ञानं यस्मिन्साधयितुं शक्यं तेन ब्रह्मसत्रेण दीक्षिता इति मूलार्थ इति भावः । देशविशेषमाह ॥ प्रतीच्यामिति । यत्र जाजलस्यापत्यं पुमान् जाजलिर्मुनिः सिद्धो मुक्तोऽभूत्तस्यां प्रतीच्यां दिशि समुद्रवेलायां समुद्रतीरे दीक्षिताः ॥ २ ॥

**तान् निर्जितप्राणमनोवचोदृशो जितासनाञ्छान्तसमानविग्रहान् ।**
**परेऽमले ब्रह्मणि योजितात्मनः सुरासुरेड्यो ददृशे स्म नारदः ॥ ३ ॥**

**प्रकाशिका** – तत्रापि नारदसमागमं तेषामाह ॥ तानिति । निर्जिताः प्राणमनोवचोदृशो यैस्तान् शान्ता उपरताः समानाः सर्वावस्थास्वेकप्रकारा विग्रहो येषाम् । ब्रह्मणि योजितात्मा-मनो येषाम् । सुरैरसुरैश्चेड्यः स्तुत्यः ॥ ३ ॥

**तमागतं त उत्थाय प्रणिपत्याभिनन्द्य च ।**
**पूजयित्वा यथादेशं सुखासीनमथाब्रुवन् ॥ ४ ॥**
**स्वागतं ते सुरर्षेऽद्य दिष्ट्या नो दर्शनं गतः ।**
**तव चङ्क्रमणं ब्रह्मन्नभयाय यथा रवेः ॥ ५ ॥**

**प्रकाशिका** – यथाविधिपूजयित्वा ॥ ४,५ ॥

**यदादिष्टं भगवता शिवेनाधोक्षजेन च ।**
**तद् गृहेषु प्रसक्तानां प्रायशः क्षपितं प्रभो ॥ ६ ॥**
**तन्नः प्रद्योतयाध्यात्मज्ञानं तत्त्वार्थदर्शनम् ।**
**येनाञ्जसा तरिष्यामो दुस्तरं भवसागरम् ॥ ७ ॥**

**प्रकाशिका** – आदिष्टमुपदिष्टं यदात्मतत्त्वं तत्क्षपितं विस्मृतम् ॥ ६,७ ॥

**मैत्रेय उवाच–**

**इति प्रचेतसा पृष्टो भगवान् नारदो मुनिः ।**
**भगवत्युत्तमश्लोक आविष्टात्माऽब्रवीन्नृपान् ॥ ८ ॥**

**प्रकाशिका** – प्रचेतसा प्रचेतोभिः । प्रचेतसामितिपाठे कर्तरि षष्ठी ॥ ८ ॥

**नारद उवाच–**

**तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः ।**
**नृणां येन हि विश्वात्मा सेव्यते हरिरीश्वरः ॥ ९ ॥**

**प्रकाशिका** – यद्धरिसेवासाधनं जन्मादि तदेव सफलमित्याह ॥ तज्जन्मेत्यादिना ॥ ९ ॥

**किं जन्मभिस्त्रिभिर्वेह शौक्लसावित्रयाज्ञिकैः ।**
**कर्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषः ॥ १० ॥**

**प्रकाशिका** – हरिसेवाभवि जन्मादिकं व्यर्थमित्याह ॥ किं जन्मभिरिति । त्रिभिरित्युक्तं विवृणोति ॥ शुक्लेति । शुक्लं जन्मोभयकुलशुद्धं सावित्रं जन्मोपनयनादि याज्ञीयमग्न्याधानाख्यम् । एवं त्रिभिः जन्मभिः किं त्रयीप्रोक्तैर्वेदविहितैर्विबुधानां देवानामिव दीर्घायुषा किम् ॥ १० ॥

**श्रुतेन तपसा वा किं वचोभिश्चित्तवृत्तिभिः ।**
**बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा ॥ ११ ॥**

**प्रकाशिका** – वचोभिरन्यवार्ताभिः । चित्तवृत्तिभिर्नानाऽवधानसामर्थ्यैरिन्द्रियाणां राधसा पाटवेन ॥ ११ ॥

**किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि ।**
**किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः ॥ १२ ॥**

**प्रकाशिका** – योगेन प्राणायामादिना । साङ्ख्येन देहादिव्यतिरिक्तात्मज्ञानमात्रेण न्यासस्वाध्याययोः संन्यासवेदाध्ययनाभ्यामप्यन्यैर्व्रतैर्वैराग्यादिभिः । श्रेयोभिः श्रेयःसाधनैर्यत्र येषु हरिः सेवितः सन् आत्मप्रदो न तैः पूर्वोक्तैः किमित्यर्थः ॥ १२ ॥

**श्रेयसामपि सर्वेषामात्मा ह्यवधिरर्थितः ।**
**सर्वेषामपि भूतानां हरिरात्माऽऽत्मदः प्रियः ॥ १३ ॥**

**तात्पर्यम् – तावत्पर्यन्तमेव फलमित्यवधिः ॥ १३ ॥**

**प्रकाशिका** – नन्वेवं हरिसेवारूपाणि पूर्वोक्तानि श्रेयःसाधनानि कियत्पर्यन्तमनुष्ठेयानीत्यपेक्षायामाह ॥ श्रेयसामिति । श्रेयसां श्रेयःसाधानानामर्थितः फलतयोद्दिष्ट आत्मा परमात्मा । तत्प्राप्तिरिति यावत् । अवधिर्हि प्रसिद्धेत्यर्थः । अत्रात्मनोऽवधित्वं कथमित्यतस्तदुपपादयति ॥ तावत्पर्यन्तमिति । परमात्मप्राप्तिपर्यन्तमित्यर्थः । फलं साध्यं ज्ञानमानन्दवृद्ध्यादिकं वा । श्रेयःसाधनमिति शेषः । एवकारेण परमात्मप्राप्त्यनन्तरं तत्फलं नेति दर्शयति । इति हेतोरवधिरुच्यते इत्यर्थः । पर्यन्तेऽवधिशब्दस्य रूढत्वादिति भावः । तथा च यानि श्रेयःसाधनानि कर्मादीनि तानि ज्ञानात्पूर्वकालीनानि ज्ञानजनकानि तदुत्तराण्यानन्दवृद्धिकराणि । परमात्मप्राप्तिरूपमोक्षानन्तरमनुष्ठितानामपि तेषां न किंचित्फलम् । अतः प्राप्यपरमात्माऽवधिरुच्यत इत्याशयः । नन्वेवं हरेरेव पूज्यत्वे ब्रह्मादिसर्वप्राणिनामर्हणं वेदविहितं न कार्यं स्यादित्यतस्तत्रापि तदन्तर्यामितया हरिरेवेष्टः सन् फलं ददातीत्याशयेनाह ॥ सर्वेषामिति ।

भूतानां ब्रह्मादीनामात्मान्तर्यामी प्रियश्च यतोऽतस्तेष्वन्तर्यामितया स्वार्चकानामात्मदः स्वप्राप्तिदः ॥ १३ ॥

**यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।**
**प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥ १४ ॥**

**प्रकाशिका** – नन्वेवं ब्रह्मादीनामर्हणाभावे तेषां कोपादनर्थ एव स्यादित्याशङ्कायां तेष्वन्तर्यामितया हर्यर्पणमेव तेषामर्चनं हरेस्तदाधारत्वादिति दृष्टान्तमाह ॥ यथेति । प्रथम-विभागः स्कन्धास्तद्विभागा भुजास्तेषामपि विभागा उपशाखाः । उपलक्षणमेतत् । पत्रपुष्पा-दयोऽपि ग्राह्याः । तृप्यन्ति । न तु मूलसेचकं विना स्वस्वनिषेचनेन । प्राणस्योपहारो भोजनं तस्मादेवेन्द्रियाणां तृप्तिर्न तु तत्तदिन्द्रियेषु पृथक् पृथगन्नपानेन । तथैवाच्युतेज्याऽन्तर्यामि-तयाऽच्युतार्हणं सर्वाहरणं सर्वेषां ब्रह्मादीनां प्रीतिजनकं नामार्हणं भवतीत्यर्थः ॥ १४ ॥

**यथैव सूर्यात् प्रभवन्ति गावः पुनश्च तस्मिन् प्रविशन्ति काले ।**
**भूतानि भूमौ स्थिरजङ्गमानि तथा हरावेव गुणप्रवाहः ॥ १५ ॥**

**प्रकाशिका** – ननु सर्वाधारत्वमेव हरेः कथमित्यतस्तदपि दृष्टान्तमुखेनोपपादयति ॥ यथैवेति । काले उदयकाले आषाढादिकाले वा गावो रश्मयो यथा सूर्यात्प्रभवन्ति निर्गच्छंत्युत्पद्यन्ते वा पुनः संध्याकाले हेमन्तादिकाले वा तस्मिन्सूर्ये वा । यथा स्थिरजङ्गमानि भूमेरुत्पद्यन्ते भूमौ प्रविशन्ति । तथैवायं गुणप्रवाहस्त्रिगुणात्मकजगत्प्रवाहो हरेरेवोत्पद्यते हरावेव प्रविशति । अतो हरिरेव सर्वोपजीव्य इति तदर्चनेनैवान्येषामर्चनं तदभावे न स भातीत्याशयः ॥ १५ ॥

**एतत् परं तज्जगदात्मनः पदं सकृद् विभातं सवितुर्यथा प्रभा ।**
**यदाऽसवो जाग्रति सुप्तवृत्तयो द्रव्यक्रियाकारकविभ्रमात्ययः ॥ १६ ॥**

**तात्पर्यम् – 'आत्मभावः शरीरे तु द्रव्यभ्रम उदाहृतः । क्रियाभ्रमस्त्वहं कर्ता मदीया-नीन्द्रियाणि तु । कारकभ्रम इत्युक्तस्त एते विभ्रमा यदा । श्वासादिवृत्तिलोपेन प्राणा उद्योगिनस्तदा । विलीयन्ते प्राणभक्त्या नित्यं स्वापवतां स्फुटम् । उद्योग एव जाग्रत्स्यायोगिनां मुक्तिसिद्धय' इत्यध्यात्मे ॥ १६ ॥**

**प्रकाशिका** – ननूक्तेषु श्रेयःसाधनेष्वासक्तावपि कुतो न हरिः सर्वदा भातीत्यपेक्षायामाह ॥ एतदिति । एतज्जगदाधारत्वेनोक्तं तत्पूर्वोक्तं परं लोकविलक्षणं जगदात्मनो जगत्स्वामिनः पदं

स्वरूपं सकृत्कदाचिदेव विभातं स्फुरितं भवति । अत्र दृष्टान्तमाह ॥ यथेति । यथा सवितुः प्रभा कदाचिदेव विभाति न सर्वदा तथैवेत्यर्थः । ननूक्तसाधनवतां सकृद्वा कदा विभातीत्यत आह ॥ यदेति । अप्रतीत्या विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ आत्मभाव इति । तुशब्दोऽवधारणे । आत्मभाव एव स्फुटतरविवेकाभाव एव द्रव्यभ्रम उदाहृतः । वक्ष्यमाणभ्रमद्वयसाधनत्वात् । उपलक्षणयाऽऽत्मशब्दः प्रतिपादित इत्यर्थः । अहमेव कर्तेति भ्रमः क्रियाभ्रम उदाहृतः । इन्द्रियाण्येव मदीयान्येव इति भ्रमः कारकभ्रम इति शब्देनोक्तः । त एते भ्रमा यदा नित्यं स्वापवतामनाद्यज्ञानावृतत्वलक्षणस्वापयुक्तानामधिकारिणां प्राणभक्त्या जातेन श्वासादिवृत्ति-लोपेन प्राणेन्द्रियमनोजयेन विलीयन्ते तदा प्राणाः स्फुटमुद्योगिनः । हरिसाक्षात्कारजनन इति शेषः । नित्यस्वापवतामिति पाठे योगिनामेतद्विशेषणम् । अत्र यदेत्यनेन यथेत्यस्य प्राणा इत्यनेनासव इत्यस्योद्योगिन इत्यनेन जाग्रतीत्यस्य नित्यं स्वापवतामित्यनेन सुप्तशक्तय इत्यस्यात्मभाव इत्यादिना द्रव्यक्रियाकारकभ्रम इत्यस्य विलीयन्त इत्यनेनात्यय इत्यस्य चार्थ उक्त इति ध्येयम् । ननु जाग्रतीत्यस्य कथमुद्योगिन इति व्याख्यानमित्यतस्तदुपपादयति ॥ उद्योग एवेति । इन्द्रियाणां स्वस्वव्यापारकरणे उद्योग एव जाग्रत्शब्दवाच्यतया प्रसिद्धः । अतोऽत्रापि योगिनां मुक्तिसिद्ध्येऽविद्यास्वापनिवृत्त्यर्थमुद्योग एव जाग्रत् ॥ जाग्रच्छब्दार्थतयोक्त इत्यर्थः । ततश्चायं श्लोकार्थः ॥ यदा योगिनां द्रव्यक्रियाकारकविभ्रमाणामुक्तरूपाणामत्ययो विलयः प्राणस्य हरेश्च भक्त्या जातेन प्राणेन्द्रियजयेन भवति । तदा सुप्तशक्तयो विलीनश्वासादिवृत्तयः पूर्वमविद्यावरणाद्धरिदर्शनोद्योगरहिता असवः प्राणा जाग्रति दर्शने उद्योगिनो भवन्ति । पुरुषं बोधयन्ति । उद्योगे स्थिता वा । तथा च न शुद्धजन्मादिकमेव हरिदर्शनसाधनं किन्तु प्राणेन्द्रियजयादिनोक्तत्रिविधविभ्रमनिवृत्तिरपि । स यदा भवति तदैव हरिदर्शनसाधनं भवतीत्याशयः ॥ १६ ॥

**यथा नभस्यभ्रतमःप्रकाशा भवन्ति भूयो न भवन्त्यनुक्रमात् ।**
**एवं परे ब्रह्मणि शक्तयस्त्वम् रजस्तमस्सत्वमिति प्रवाहः ॥ १७ ॥**

**प्रकाशिका** – नन्वेवं जगदाश्रयस्य तत्तत्संबन्धेन तत्तद्दोषलेपप्रसक्तिरित्याशङ्कां दृष्टान्तमुखेन परिहरन्हरावेव गुणप्रवाह इत्युक्तं विशदयति ॥ यथेति । नभस्याकाशे यथा भ्रमतः प्रकाशाः क्रमेण भवन्ति न भवन्ति च तावता नाकाशे तत्संबन्धकृतलेपोऽस्ति । एवं परेऽसङ्गे ब्रह्मण्यमूः शक्यत्वाच्छक्ति शब्दवाच्या ये रजस्तमःसत्त्वमिति गुणास्तेषां प्रवाहस्तद्रूपं जगत्क्रमेण भवति न भवति नश्यति च । तथाऽपि ब्रह्मणि तत्संबन्धकृतदोषलेपापादको न भवति । अभ्रसाम्यं

रजसस्तम:साम्यं तमसः प्रकाशसाम्यं सत्त्वगुणस्येति ज्ञातव्यम् । न भवन्तीत्युक्त्या न नदीजलप्रवाहवदयं प्रवाहो विच्छिन्नः किन्तु मध्ये प्रलये न विच्छेदोऽस्तीति प्रतिपादनाद्गुण-शब्दार्थप्रदर्शनाच्च विशदनमिति ज्ञातव्यम् ॥ १७ ॥

**तेनैकमात्मनमशेषदेहिनां कालं प्रधानं पुरुषं परेशम् ।**
**स्वतेजसा ध्वस्तगुणप्रवाहमात्मैकभावेन भजध्वमद्धा ॥ १८ ॥**

**तात्पर्यम् – 'पूर्णो विष्णुः स एवैक इति भावो य ईरितः । आत्मैकभाव इति तं विदुर्ब्रह्मात्मदर्शिन' इति सत्यसंहितायाम् ॥ १८ ॥**

**प्रकाशिका –** अस्त्वेवमसंगस्ततः किमित्यतस्तस्यैव भजनं कार्यमिति विधत्ते ॥ तेनेति । उक्तरीत्या जगत्संबन्धकृतदोषलेपाभावेनेत्यर्थः । अशेषदेहिनामात्मानमन्तर्यामिणं तथाऽप्येकं स्वगतभेदशून्यमद्धाऽतिशयेन भजध्वम् । ननु श्रुत्यादिषु काल एव भजनीयतया क्वचिदुच्यते क्वचित्प्रधानं क्वचित्पुरुषोऽतस्तद्विरोध इत्याशङ्कायां तत्र कालादिशब्दा हरिपरा एवेत्याशयेनाह ॥ कालमिति । कालमित्यादिविशेषणाद्धरिः कालादिशब्दवाच्य इत्यर्थः । परेशं ब्रह्मदीनामपीशम् । ननु तस्यापि गुणबद्धत्वेन न मुख्यतो भजनीयत्वमित्यत उक्तम् ॥ स्वतेजसेति । स्वसामर्थ्येनैव दूरीकृतगुणकार्यबन्ध इत्यर्थः । भजनीय 'इत्यस्य भावमाह ॥ आत्मैकभावेनेति । अत्र जीवैक्येनेत्यन्यथाप्रतीतिवारणाय विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ पूर्णो विष्णुरिति । विष्णुरेव पूर्णः संपूर्ण एक एवेति भावो भावना । ध्यानमिति यावत् । ब्रह्मात्मदर्शिनः परब्रह्मणो जीवानां च स्वरूपविदः । तथा चात्मनः पूर्णस्य विष्णोरेकत्वभावनया विष्णुरेक एव पूर्ण इति भावनयेति मूलार्थ इत्याशयः ॥ १८ ॥

**निरस्तसङ्कल्पविकल्पमद्वयं द्वयापवादोपरमोपलम्भनम् ।**
**अनादिमध्यान्तमजस्रनिर्वृतिं संज्ञप्तिमात्रं भजतामुया दृशा ॥ १९ ॥**

**तात्पर्यम् – सङ्कल्पश्च विकल्पश्च ऋते विष्णुप्रसादतः । नैव सम्भवतो विष्णोः समाभावात्तु सोऽद्वय इति तन्त्रभागवते ॥ १९ ॥**

**प्रकाशिका –** भजने पूनरपीत्थं भावान्तरमाह ॥ निरस्तसङ्कल्पेति । अत्र विष्णोः संकल्प-विकल्पौ न स्त इति प्रतीयते । तथाऽद्वयमिति द्वितीयाभाव उच्यत इति भाति । इत्यतोऽद्वयपदे संकल्पविकल्पेति पदं च प्रमाणेनैव व्याख्याति ॥ संकल्पश्चेति । विष्णुप्रसादतो विष्णुप्रेरणातो नैव संभवतः । जनानामिति शेषः । विष्णोः समाभावात्सोऽद्वयश्चोच्यत इत्यर्थः ॥ ततश्चायं

श्लोकार्थः ॥ जाननां स्वप्रेरणाभावे निरस्तावनुत्पादितौ संकल्पविकल्पविशेषौ येन तं स्वसमाना-भावादद्धयम् । द्वयस्य द्वीतीयस्यापवादो निरासो येभ्यस्ते विमतं मिथ्या दृश्यत्वादित्यादयः कुतर्कास्तेषामुपरमो निराकरणं तेनोपलंभनं सत्यजगत्सत्वादिरूपेण ज्ञानं यस्मिन्विषये स तथा तम् । न विद्यते आदिमध्यान्तो यस्य तम् । अजस्रनिर्वृतिं नित्यानन्दम् । संज्ञप्तिमात्रं जडामिश्रममुया दृशोक्तप्रकारानुसंधानेन भजत ॥ १९ ॥

**दयया सर्वभूतेषु संतुष्ट्या येन केन वा ।**
**सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥ २० ॥**

**प्रकाशिका** – अविलंबेन विष्णुप्रसादजनकं साधनमाह ॥ दययेति । येन केन वा यदृच्छया लब्धेन शास्त्रविहितेन सन्तुष्ट्या अलंबुध्या । तुष्ट्याऽपि किमित्याशङ्कापरिहारायोक्तम् ॥ जनार्दन इति जननमर्दयतीत्यर्थः ॥ २० ॥

**अपगतसकलेषणामलात्मन्यविरतमेधितभावनोपहूतः ।**
**निजजनवशगत्वमाप्तवान् यो न सरति च्छिद्रवदक्षरः सतां हि ॥ २१ ॥**

**प्रकाशिका** – वैराग्यसन्ततध्यानलक्षणे च साधने दर्शयन् भगवानेव भजतां मनसि व्यक्तः कदाऽपि नापयातीत्याह ॥ अपगतेति । अपगता दूरतो निरस्ताः समस्ताः सकलेषणाः पुत्रवित्तादिकामा यस्मात्स तथा । अत एवामलश्चात्माऽपगतसकलेषणामलात्मा तस्मिन्नेवं विशुद्धान्तःकरणेऽविरतं निरन्तरमेधितया भावनया भक्तिपूर्वकज्ञानेनोपहूत इव व्यक्तः सन् अक्षरो हरिः सतां हृदयाच्छिद्रवत्तत्रत्यावकाशवन्न सरति न गच्छति । न तिरोभवतीति यावत् । अत्र हेतुमाह ॥ निजजनेति । यद्यस्मान्निजजनानां भक्तजनानां वशगत्वमधीनत्वमाप्तवान् । तत्तस्मात् । छिद्रवदिति दृष्टान्तो नित्यसंनिहितत्वमात्रेणाभिव्यक्तितयेति ज्ञातव्यम् । हिशब्देनात्र प्रमाण-प्रसिद्धिं दर्शयति ॥ २१ ॥

**न भजति कुमनीषिणां स इज्यां हरिरधनात्मधनप्रियो रसज्ञः ।**
**श्रुतधनकुलकर्मणां मदैर्ये विदधति पापमकिञ्चनेषु सत्सु ॥ २२ ॥**

**तात्पर्यम् – अधनाश्च त एवात्मधनाश्चाधनात्मधनाः ॥ २२ ॥**

**प्रकाशिका** – सतामेव वश्योऽसावसतां तु पूजामपि न गृह्णातीत्याह ॥ न भजतीति । कुमनीषिणां कुमतीनामिज्यां पूजाम् । अधनात्मधनप्रियः । अत्राधनात्मधनशब्दयोः कर्मधारय

एव समास इत्याशयेनाह अधनाश्चेति । तथा च न विद्यते धनं हरिपूजानुपयुक्तं येषां तेऽधनास्ते च ते आत्मा परमात्मा धनं धनवत्प्रियो येषां ते आत्मधनास्तेषां प्रिय इत्यर्थः । रसज्ञो रसो रागोऽनुरागः । भक्तिरिति यावत् । तं जानातीति रसज्ञः । भक्तैः क्रियमाणभक्तिज्ञानवानित्यर्थः । कुमनीषिणां सकाशाज्जातैर्मदैर्बुद्धिभ्रंशहेतुवृत्तिविशेषैर्येऽकिंचनेषु । सत्सु । उपलक्षणमेतत् । आत्मधनेषु च पापमपराधं विदधति कुर्वन्ति तेषां कुमनीषिणामित्यन्वयः ॥ २२ ॥

**श्रियमनुचरतीं तदर्थिनश्च द्विपदपतीन् विबुधांश्च यः स्वपूर्णः ।**
**न भजति निजभृत्यवर्गतन्त्रः कथममुमुद्विसृजेत् पुमान् कृतज्ञः ॥ २३ ॥**

**तात्पर्यम् – 'श्रियं देवांश्च भृत्यत्वान्मनुते बहु केशवः । नात्मार्थाय यतस्ते तु भक्त्या सर्वोत्तमोत्तमा' इति च ॥ २३ ॥**

**प्रकाशिका –** भक्त्यधीनस्यानुग्रहसाध्यं फलं दर्शयन् एवंविधस्य त्यागो नोचित इत्याह ॥ श्रियमिति । अत्र निजभृत्यवर्गतन्त्रः श्रियं विबुधांश्च न भजतीत्युक्त्या श्रियाद्यपेक्षया भृत्यवर्गाणामाधिक्यमुच्यत इति भाति । अतोऽत्र विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ श्रियमिति । विबुधानित्यस्यार्थः ॥ देवानिति । चशब्दाद्विपदपतीनां राज्ञां ग्रहणम् । बहुमनुते संमानयति । अनेन भजतीत्येतदुक्ततात्पर्यम् । निजभृत्येत्यनेन सूचितं हेतुमाह ॥ भृत्यत्वादिति । श्रियादीनामिति शेषः । न भजतीति निषेधस्यार्थमाह ॥ नात्मार्थायेति । न स्वप्रयोजनायेत्यर्थः । तथा च न भजतीत्यत्रात्मार्थायेति पूरणीयमिति भावः । ननु भृत्यत्वेन तेषु मान एव कर्तव्यो न बहुमान इत्यत आह ॥ यत इति । तुशब्दोऽवधारणे । भक्त्येत्युपलक्षणम् । भक्त्यादिगुणैरेव सर्वोत्तमोत्तमाः । तारतम्येनोत्तमा इत्यर्थः । अनुचरतीं तदर्थिनश्चेति पदद्वयसूचितमेतदिति ज्ञातव्यम् ॥ ततश्चायं श्लोकार्थः ॥ अनुचरतीं साक्षाद्भृत्यभूतां श्रियं तदर्थिनः श्रीप्रसादप्रार्थिनो विबुधांस्तदर्थिनः श्रियो देवानां च प्रसादार्थिनो द्विपदपतीन् राज्ञश्च । तारतम्येनोत्तमानिति यावत् । यतोऽतः सर्वेषां वैमानिकानां धिष्ण्येभ्यः परमुत्तमं भजति बहुमानयति । कुतः । यतो निजभृत्यवर्गतन्त्रः । तेषां भृत्यत्वात्स्वस्य च भृत्याधीनत्वाद्बहुमानं करोतीत्यर्थः । नन्वेवं सर्वोत्तमो यं कमपि न भजतीति श्रुत्यादिप्रसिद्धिविरोध इत्यत उक्तम् ॥ य इति । यतः स्वपूर्णः स्वेनैव पूर्णोऽत आत्मार्थाय न भजति । किन्तु भक्तवात्सल्यस्वभावेनैव । अतोऽमुं भक्तवत्सलं कृतज्ञः पुमान् कथमुद्विसृजेत् सर्वथा परित्यजेन्न कथमपीत्यर्थः ॥ २३ ॥

**भवतां वंशधुर्योऽभूद् ध्रुवश्चित्ररथः स्वराट् ।**
**गुरुदारवचोबाणैर्निर्भिन्नहृदयोऽर्भकः ॥ २४ ॥**

**प्रकाशिका** – भगवत्पूजनेन ध्रुवेन यो भगवानाराधितस्तस्मै विशिष्टं फलं दत्तवान् अतो भवद्भिरपि विशिष्टफलार्थं तद्भजनमेव कर्तव्यमित्याह ॥ भवतामिति । चित्रं नानावर्णो रथो यस्य स चित्ररथ इति ध्रुवस्य नामान्तरमप्याहुः । स्वयमेव राजत इति स्वराट् स च चक्रवर्तीत्यर्थः । गुरोः पितुर्दाराभार्याशब्दवाच्याः ॥ २४ ॥

**त्यक्त्वा स्त्रैणं च तं गच्छन् दृष्टो मे पथ्युदारधीः ।**
**पञ्चवर्षो मदादेशैः संराध्य पुरुषेश्वरम् ॥ २५ ॥**

**प्रकाशिका** – स्त्रैणं स्त्रीजितम् । तं पितरम् ॥ २५ ॥

**तत् परं सर्वधिष्ण्येभ्यो मायाधिष्ठितमारुहत् ।**
**मुनयोऽद्याप्युदीक्षन्ते परं नापुरवाङ् नृपाः ॥ २६ ॥**

**तात्पर्यम्** – **'सर्वोत्तमत्वाद्विष्णुर्हि माय इत्येव शब्द्यत'** इति **व्योमसंहितायाम्** । **'देवानत्युत्तममुनीन्विना के शैंशुमारकम् । हरेर्गृहं प्रविष्टास्तु ध्रुवो देवाश्च तद्गता'** इति **मात्स्ये** ॥ २६ ॥

**प्रकाशिका** – तत्पदं तस्य हरेः पदम् । मायाधिष्ठितमित्यत्र माया शब्दस्यानिर्वाच्याविद्यापरत्वप्रतीतिवारणाय विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ सर्वोत्तमत्वादिति । विष्णुरेवेति संबन्धः । हिशब्देन मायानां प्रधानानामयं स्वामीति मायः सर्वोत्तम इति निर्वचनं प्रसिद्धमिति सूचयति । तथा च मायेन सर्वोत्तमेन विष्णुनाऽधिष्ठितं व्यक्ततया स्थितमिति मूलं व्याख्येयमिति भावः । मुनयो यदुदीक्षन्त इत्यत्र हे नृपा मुनयोऽर्वाक् स्थिताः सन्तः परं केवलं यद्ध्रुवस्थानमुदीक्षन्ते न तु तत्र गच्छन्तीति सर्वेषां मुनीनां तत्र गमनाभावः प्रतीयते । अतोऽत्र विवक्षिततात्पर्यं प्रमाणेनैव दर्शयति ॥ देवानिति । शैंशुमारकं हरेर्गृहं ध्रुवस्थानरूपं के प्रविष्टाः । न केऽपि । तर्हि कस्तत्र प्रतितिष्ठतीत्यपेक्षायामाह ॥ ध्रुव इति । तुशब्दोऽवधारणे । ध्रुवो देवाः सर्वे । चशब्दादत्युत्तमा मुनयश्च ग्राह्याः । तथा च मूले मुनय इत्यनेनात्युत्तममुनिव्यतिरिक्ता एव ग्राह्या इत्याशयः ॥ तथा चायमर्थः ॥ सर्वेषां वैमानिकानां धिष्ण्येभ्यः परमुत्तमं मायाधिष्ठितं मायेन सर्वोत्तमेन विष्णुनाऽधिष्ठितं व्यक्ततया स्थितं तत्पदं तस्य हरेः पदमारुहत्प्राप्तवान् । अत्युत्तमव्यतिरिक्तमुनयो नृपाश्चार्वाक् स्थिताः सन्त उदीक्षन्ते परं नापुः ॥ २६ ॥

**तं यूयं सर्वभूतानामन्तर्यामिणमीश्वरम् ।**
**रुद्रादिष्टोपदेशेन भजध्वं भवनुत्तये ॥ २७ ॥**

**प्रकाशिका** – तं भवत्पूर्वजस्य ध्रुवस्य फलप्रद्रम् । रुद्रेणादिष्ट उपदिष्ट उपदिश्यत इत्युपदेशो मन्त्रस्तेन भवनुत्तये संसारनिवृत्तये ॥ २७ ॥

**मैत्रेय उवाच–**

**इति प्रचेतसो राजन्नन्यांश्च भगवत्कथाः ।**
**श्रावयित्वा ब्रह्मलोकं ययौ स्वायम्भुवो मुनिः ॥ २८ ॥**

**तेऽपि तन्मुखनिर्यातं यशो लोकमलापहम् ।**
**हरेर्निशम्य तत्पादं ध्यायन्तस्तद्गतिं ययुः ॥ २९ ॥**

**प्रकाशिका** – प्रचेतसः कर्मभूतान् । प्रचेतसां राज्ञामित्यपि कचित्पाठः ॥ २८,२९ ॥

**एतत् तेऽभिहितं क्षत्तर्यन्मां त्वं परिपृष्टवान् ।**
**प्रचेतसां नारदस्य संवादे हरिकीर्तनम् ॥ ३० ॥**

**प्रकाशिका** – हरेः कीर्तनं यस्मिन् ॥ ३० ॥

**य एष उत्तानपदो मानवस्यानुवर्णितः ।**
**वंशं प्रियव्रतस्यापि निबोध नृपसत्तम ॥ ३१ ॥**

**प्रकाशिका** – अत्र शुको वृत्तानुवर्णनपूर्वकमुत्तरकथां प्रतिजानीते ॥ य एष इति । अनेन शुकेनोक्तमेव विदुरायोक्तं मैत्रेयेणेति भावः । य एष वंशः सोऽनुवर्णितः । हे नृपसत्तम । प्रियव्रतस्यापि निबोध । वंशमिति शेषः ॥ ३१ ॥

**यो नारदादात्मविद्यामधिगम्य पुनर्महीम् ।**
**भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात् पदम् ॥ ३२ ॥**

**प्रकाशिका** – श्रोत्रजनतुष्ट्यर्थं प्रियव्रतचरितं प्रस्तौति ॥ यो नारदादिति । यः प्रियव्रतः । नारदादात्मविद्यां भगवद्विषयकविद्यामधिगम्य प्राप्य पुनर्महीं भुक्त्वा पुत्रेभ्यो महीं पृथ्वीं विभज्य दत्वैश्वर्यमीश्वरसंबन्धिपदं स्थानमगात्प्राप्तवान् ॥ ३२ ॥

**इत्थं तु कौषारविणोपवर्णितां क्षत्ता निशम्याजितपादसत्कथाम् ।**
**प्रवृद्धभावाश्रुकलाकुलो मुनेर्दधार मूर्ध्ना चरणं हृदा हरेः ॥ ३३ ॥**

**प्रकाशिका** – मैत्रेयेणोपदिष्टः क्षत्ता किं कृतवानित्यपेक्षायामाह ॥ इत्थमिति । अजितस्य हरेः पादसत्कथां चरणविषयसत्कथां मुनेश्चरणं मूर्ध्ना दधार हरेश्चरणं हृदा ॥ ३३ ॥

**विदुर उवाच–**

**सोऽयं तेन महायोगिन् भवता करुणात्मना ।**
**दर्शितस्तमसः पारो यत्राकिञ्चनगो हरिः ॥ ३४ ॥**

**प्रकाशिका** – यत्र तमसः पारे स्थितोऽकिंचनगोचरो हरिः सोऽयं तमसः पारः ॥ ३४ ॥

**श्रीशुक उवाच–**

**इत्यानम्य तमामन्त्र्य विदुरो गजसाह्वयम् ।**
**स्वानां दिदृक्षुः प्रययौ ज्ञातीनां निर्वृताशयः ॥ ३५ ॥**

**प्रकाशिका** – स्वानां ज्ञातीनामिति कर्मणि षष्ठी ॥ ३५ ॥

**एतद् यः शृणुयाद् राजन् राज्ञां हर्यर्पितात्मनाम् ।**
**आयुर्धनं यशः स्वस्ति गतिमैश्वर्यमाप्नुयात् ॥ ३६ ॥**

**प्रकाशिका** – शुक एतस्य श्रोतुः फलमाह ॥ एतद्य इति । राज्ञां चरितमिति शेषः ॥ ३६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे एकत्रिंशोऽध्यायः ।

॥ वेदेशगुरुशिक्षातो भूयाद्यदुपतीरिता ॥ चतुर्थस्कन्धतात्पर्यटिप्पणी प्रीतये हरेः ॥

॥ इति श्रीभागवतटिप्पण्यां श्रीमद्वेदेशगुरुशिष्येण यदुपतिना विरचितायां चतुर्थः स्कन्धः समाप्तः ॥ ४ ॥

**इति चतुर्थस्कन्धः ।**

॥ श्रीकृष्णार्पणमस्तु ॥

### श्रीसत्याभिनवतीर्थविरचित

## दुर्घटभावदीपिका

॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ अत्रेः पत्न्यनसूया यशस आत्मेशब्रह्मसंभवान् आत्मा विष्णुरीशो रुद्रो ब्रह्मसंभवो ब्रह्मणा चतुर्मुखेन सह संभवन्तीति ब्रह्मसंभवास्तान् । त्रीन् सुतान् जज्ञे । अन्तर्णीतण्यर्थोऽयम् । जनयामास । तत्राहुरिति शेषः । तत्र त्रयाणां मध्ये विष्णुं दत्तमाहुः । रुद्रं दुर्वासमाहुः । ब्रह्माविष्टं सोममाहुरिति । एतेन सुयशस इत्यादि बहुवचनान्तस्य दत्तमित्याद्येकवचनान्तेनान्वय इति दूषणं परास्तम् ॥ १५ ॥ इति श्रीमद्भागवत टिपण्यां प्रथमोऽध्यायः ॥ ४-१ ॥

॥ हरिः ॐ ॥ प्राङ्निषण्णमित्यस्य प्राक् स्वपुरोभागे निषण्णमित्यर्थः । एतेन यदा दक्षश्चतुर्मुखनमस्कारं कृत्वा सभायां निषसाद तदाऽपि रुद्रेणोपविष्टत्वात् प्राङ्निषण्णमिति कथनमनुपपन्नमिति दूषणं परास्तम् । प्राक्शब्दस्य पूर्वकालमित्यर्थमित्यनङ्गीकृत्य स्वपुरोभाग इत्यर्थ इत्यङ्गीकारात् ॥ ८ ॥ इति श्रीभागवतटिप्पण्यां द्वितीयोऽध्यायः ॥ ४-२ ॥

॥ हरिः ॐ ॥ सदा विद्विषतः सदा एवं विविदमानयोर्विविदमानस्य जामातुः सदा विद्विषत एवं विविदमानस्य श्वशुरस्यापि महान्कालोऽतिचक्रम इति । एतेन विद्विषतोर्विविदमानयोरिति द्विवचनान्तशब्दयोर्जामातुः श्वशुरस्येत्येकवचनान्तशब्दाभ्यामनन्वय इति दूषणं परास्तम् । द्विषतोर्विविदमानयोरिति च द्विवचनमेकवचनार्थ इत्यङ्गीकारात् । एतेनैव द्विषतोर्विविदमानयोरिति द्विवचनमेकवचनार्थ इत्यङ्गीकारे विद्विषतो विविदमानस्येति शब्दद्वयस्य जामातुरित्यनेन वा श्वशुरस्येत्यनेन वाऽन्वये जामातुर्वाश्विशुरस्य वा विद्वेष्टृत्वं विविदमानत्वं च लभ्येत । नतूभयोरिति दूषणं परास्तम् । विद्विषतो विविदमानस्येत्यनयोरावृत्तिमङ्गीकृत्य जामातुः श्वशुरस्येति पदाभ्यां प्रत्येकमन्वय इत्यङ्गीकारात् ॥ १ ॥ इति श्रीभागवतटिप्पण्यां तृतीयोऽध्यायः ॥ ४-३ ॥

॥ हरिः ॐ ॥ यज्ञसदस्यधीश्वरीत्यस्य यज्ञानां सदस्यानां धियां चेश्वरीत्यर्थः । एतेन प्रकरणबलादेव यज्ञसदसीत्यस्य लाभात् । यज्ञसदसीति व्यर्थमिति दूषणं परास्तम् । यज्ञसदस्यधीश्वरीत्येकं पदमित्यङ्गीकारात् । एतेनैव यत्किञ्चिदैश्वर्येप्यधीश्वरीति वक्तुं शक्यत्वात् । यज्ञानां सदस्यानां धियां चेश्वरीति वक्तव्येऽधीश्वरीति सामान्यत ऐश्वर्यकथनमनुपपन्नमिति दूषणं परास्तम् ॥ ९ ॥

महापुरुषपादपांसूभिर्निरस्ततेजः स्वित्यस्य महापुरुषो नारायणस्तस्य पादपांसवो भजनीयत्वेन येषां ते महापुरुषपादपांसवस्तैः । नारायणपादपांसुभजकैरिति यावत् । निरस्ततेजःसु निरस्तं तेजो येषां ते निरस्ततेजसस्तेष्वित्यर्थः । एतेन महापुरुषपादपांसूनां तेजोऽभिवृद्धिहेतुत्वेन तेजोनिरासहेतुत्वाभावात् । महापुरुषपादपांसुभिर्निरस्ततेजःस्वित्यनुपपन्नमिति दूषणं परास्तम् ॥ १३ ॥ इति श्रीभागवतटिप्पण्यां चतुर्थोऽध्यायः ॥ ४-४ ॥

॥ हरिः ॐ स्वभर्तुश्चरणांबुजासवं जगद्गुरोश्चिन्तयतीत्यस्य जगद्गुरोः स्वभर्तुः रुद्रस्य चरणांबुजासवम् । अत्रासवशब्देन सुखं लक्ष्यते । चरणांबुजमासवं रुद्रनिमित्तदेहत्याग भाविमोक्षसुखं च चिन्तयतीत्यर्थः । एतेन फलाभावाद्देहत्यागोऽनुपपन्न इति दूषणं परास्तम् । एतेनैव चरणांबुजं चिन्तयतीत्यनेनैव पूर्णत्वादासवमित्येतद्व्यर्थमिति दूषणं परास्तम् ॥ ४ ॥ इति श्रीभागवतटिप्पण्यां पञ्चमोऽध्यायः ॥ ४-५ ॥

॥ हरिः ॐ ॥ किं करोमीत्यस्य करोमीत्यत्र विध्यर्थे लटमङ्गीकृत्य किं कर्तव्यमिति तात्पर्यार्थो वक्तव्यः । एतेन मया किं कर्तव्यमिति वक्तव्यमहं किं करोमीति कथनमनुपपन्नमिति दूषणं परास्तम् ॥ ४ ॥ इति श्रीभागवतटिप्पण्यां षष्ठोऽध्यायः ॥ ४-६ ॥

॥ हरिः ॐ ॥ महत्तमोऽर्कस्येत्यस्यार्कस्य सूर्यस्य सकाशादपि महत्तमः । अत्र तेजोवाचकेन महच्छब्देन तेजस्वी लक्ष्यते । तेजस्वितम इत्यर्थः । तेजोवाचकस्य महच्छब्दस्य लक्षणया तेजस्विपरत्वमभिप्रेत्याचार्यैः प्रमाणमुदाहृतम् । एतेन महत्तम इत्यस्य तेजस्वितम इति व्याख्यानं कृत्वा महच्छब्दस्य तेजोवाचकत्वे प्रमाणोदाहरणमसङ्गतमिति दूषणं परास्तम् ॥ ४० ॥ इति श्रीभागवतटिप्पण्यां सप्तमोऽध्यायः ॥ ४-७ ॥

॥ हरिः ॐ ॥ इति पूर्वोक्तरीत्याऽजेन चतुर्मुखेनानुनीतेनात एव परितुष्यताभावेन प्रहस्य हे महाबाहो चतुर्मुख श्रूयतामित्यतः परमुक्त्वेति शेषमङ्गीकृत्य तेनान्वय इत्यङ्गीकारात् ॥ १ ॥

दग्धशीर्ष्णोः प्रजापतेरजःशिरो भवत्विति वक्तव्येऽजमुखं शिरो भवत्विति मुखमात्रस्याज-संबन्धित्वाभिधानमनुपपन्नमिति दूषणं परास्तम् । अजमुखमित्यत्राजमुखं यस्येति बहुव्रीहि-समासमनङ्गीकृत्य सन्दधुः । कस्य कायेन सवनीयपशोः शिर इत्युत्तरवाक्यानुसारेण मुख शब्दस्य शिरःपरत्वमङ्गीकृत्याजस्य मुखमिति षष्ठीतत्पुरुष इत्यङ्गीकारात् ॥ ३ ॥ इति श्रीभागवत-टिप्पण्यामष्टमोऽध्यायः ॥ ४-८ ॥

॥ हरिः ॐ ॥ विकल्पे विद्यमानेऽपि मित्रादि विविधकल्पने विद्यमानेऽपि लोकनिष्ठ-शत्रुत्वमित्रत्वादीनां सत्यत्वेऽपीति यावत् । शत्रुमित्रादयो मोहं ममतारूपमोहमृते

पुंसोऽसन्तोषहेतवः । असन्तोषेत्युपलक्षणम् । असन्तोषसन्तोषहेतवो नेत्येतद्धि प्रमाणप्रसिद्धम् । ननु लोकानां प्रकृतिपरिणतत्वाद्विशेषशत्रुमित्रादिभेदः कुत इत्यत आह ॥ भिन्ना इति यत् तन्निजकर्मभिर्जातमिति ॥ ३१ ॥

ध्रुवस्तत्र यमुनायामभिषिक्तः स्नातः प्रयतस्तां विभावरीं रात्रिमुपोष्य समाहितः सन् दिष्ट्या निरूपणया नारदस्याज्ञया आदिष्टेनोपदेशेन नारदोपदेशानुसारेण पुरुषं पर्यचरदिति ॥ ७४ ॥

तस्मिन्ध्रुवेऽनन्यया धियाऽसु प्राणं निरुध्यात्मनोर्जीवराशेर्द्वारमुत्पत्त्यादेः कारणं विश्वं भगवन्तं विष्णुं अभि अभितः परित इन्द्रियाभिमानिदेवैः सह ध्यायति सति सलोकपाला लोका भृशं निरुच्छ्वासपीडिताः सन्तो हरिं शरणं ययुः । अत्र लोकानामेव निरुच्छ्वासो लोकपालानां लोकपाला एव शरणं ययुः । न तु चराचरात्मकाः सर्वे लोका लोकपाला लोकार्थमेव ययुः । न तु स्वार्थमिति विवेको द्रष्टव्यः । सलोकपाला लोका निरुच्छ्वासपीडिता इत्युक्तिः सलोकपाला लोकाः शरणं ययुरित्युक्तिश्च छत्रिन्यायेनेति ॥ ८४ ॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥ ४-९ ॥

॥ हरिः ॐ ॥ तनुभृतस्तवपादपद्मध्यानाद्भवज्जनकथाश्रवणेन भवतो भवज्जनानां च कथायाः श्रवणेन वा या निर्वृतिर्यत्सुखं स्यात्सा तत्सुखं स्वमहिमन्यनन्याधीनमाहात्म्योपेते ब्रह्मणि परब्रह्मणि स्थितस्य मुक्तस्यापि मुक्त्यनन्तरं भाविना ध्यानादिना व्यञ्जकेन विना परब्रह्म-प्राप्तिमात्रेण मा भूयान्न भवति । सुप्तौ परब्रह्मप्राप्तावपि प्राप्त्यनन्तरं परब्रह्मध्यानदर्शनाद्यभावेन मुक्तिसुखभावस्यादृष्टत्वात् । अन्तकासिलुलितात् अन्तकस्य हरेरसिना भ्रूविभ्रमलक्षणेन लुलितात्पर्यस्ताद्विमानात्पततां पुंसां तत्सुखं न भवतीति किमु वक्तव्यमिति ॥ १० ॥

मतिर्विदूषिता देवैर्यतद्भिरसहिष्णुभिरित्यस्य यतद्भिरधिकं यततामसहिष्णुभिर्देवैर्मति-र्विदूषितेत्यर्थः ॥ ३२ ॥ इति श्रीभागवतटिप्पण्यां दशमोऽध्यायः ॥ ४-१० ॥

॥ हरिः ॐ ॥ हे अङ्ग निरन्तरं सर्वदांऽबुजनाभपादयोः । सक्तमिति शेषः । सर्वदा भगवत्पादमानसमिति यावत् । त्वां यतः शुश्रुमोऽतो वरार्हणोऽसीति ॥ ७ ॥

अविद्यारचितेति स्वप्नस्यैव विशेषणं न तु गन्धर्वनगरस्य । अविद्ययेश्वरेच्छया रचितो यः स्वप्नः तदुपमं क्षिप्रनाशात्तत्सदृशं यच्चात्यन्तासद्गंधर्वनगरं तदुपममेकप्रकारेण सत्त्वाभावरूपा-दन्यथात्वात्तत्सदृशं विश्वं मन्यमान इत्यर्थः । एकप्रकारेण सत्त्वाभावश्च गन्धर्व-नगरस्यात्यन्तासत्वात् । विश्वस्य तु विकारित्वादिति विवेको द्रष्टव्यः ॥ १५ ॥

महत्त्वमिच्छतां तीर्थमित्यस्य महत्त्वमुत्तमत्वमिच्छतां पुंसां तीर्थं तीर्थमिव गङ्गातीर्थमिव महत्त्वसंपादकमित्यर्थः ॥ ४६ ॥

तीर्थपादपदाश्रयो गङ्गातीर्थपादविष्णुपादाश्रयो नेच्छन् फलेच्छामकुर्वन् । श्रद्दधानां विष्याणां श्रावयेत् । तत्र फलेच्छां विना ध्रुवचरिते व्याख्यानं मया कृतमिति । परमात्मा उपकारानुसन्धानेनेति यावत् । सन्तुष्ट इति हेतोः सिध्यति प्राप्तसर्वाभीष्टो भवतीति ॥ ४९ ॥ इति श्रीभागवतटिप्पण्यां द्वादशोऽध्यायः ॥ ४-१२ ॥

॥ हरिः ॐ ॥ येन नारदेन हरेः परिचर्याया विधिर्यस्य स तथा । हरिपरिचर्या कर्तव्येति यद्विधिवाक्यं तद्विषय इति यावत् । क्रियायोगो यज्ञादिक्रियालक्षणमोक्षोपायो येन प्रोक्तस्तं देवदर्शनं महाभागवतं नारदं मन्य इति ॥ ३ ॥

उत्कलः पितुर्ध्रुवस्य सार्वभौमश्रियं सर्वभूमिसम्बन्धिश्रियमधिराज्यासन- मधिकराजयोग्यासनं च नैच्छदित्यर्थः ॥ ६ ॥

अव्यवच्छिन्नध्यानलक्षणाग्निदग्धकर्मनिमित्तपापविशिष्टान्तःकरणउत्कलः स्वरूपं जीवस्य जीवस्य भिन्नस्वरूपं बिंबरूपं परमात्मानमवरुंधानः स्वज्ञानान्तःस्थितं कुर्वाणः । साक्षात्कृतं कुर्वाण इति यावत् । अस्माद्धरेरन्यत्स्वदेहादिकं नावैक्षतेति । ननु परमेश्वरस्य जीवभिन्नस्वरूपत्वं कथं प्रमाणं विनाऽङ्गीकर्तुं शक्यमिति चेन्न । ब्रह्मादिजीवानां परमेश्वरभिन्नस्वरूपत्वस्य । भिन्नस्वरूपमभिदं स्वरूपं तु द्विधा हरेः । भिन्नस्वरूपं ब्रह्माद्या मत्स्याद्या अभिदमुच्यत इति प्रमाणसिद्धत्वेनार्थात्परमेश्वरस्य ब्रह्मादिजीवभिन्नस्वरूपत्वसिद्धेरिति । अत्र सर्वत्र स्वरूपशब्दो रूपपरः । तेन भिन्नस्वरूपमिति व्याहतिः । अभिन्नस्वरूपमिति पुनरुक्तिरिति चोद्यानवकाशः ॥ ९ ॥

वत्सरस्येष्टा भार्या स्वर्वीथिः षडात्मजानसूत । षडात्मजानित्युक्तं विवृणोति । पुष्पार्णमिति । पुष्पार्णमसूत । तिग्मकेतुमसूत । इषमसूत । ऊर्जमसूत । वसुमसूत । जयमसूतेति ॥ १२ ॥

असाधुमृगयुः स वेनः शरासनमुद्यम्य वनगोचरः सन् मृगान्वनमार्गस्थितान्दीनान् जनांश्च हन्ति । अतो जनोऽसौ वेनः पीडक इत्यरौदिति ॥ ४० ॥ इति श्रीभागवतटिप्पण्यां त्रयोदशोऽध्यायः ॥ ४-१३ ॥

॥ हरिः ॐ ॥ पशुसाम्यतां पश्यन्त इत्यस्य पशुसाम्यं येषां ते पशुसाम्या मूर्खास्तत्तां पश्यन्त इत्यर्थः ॥ १ ॥

ईश्वरेश्वर इत्यस्य ज्ञानाज्ञानादिवदतिशयितेश्वर इत्यर्थः । एतेनेश्वरेत्येतत् जगतामित्यनेन सापेक्षत्वादसमर्थमिति चोद्यं निरस्तम् ॥ २१ ॥

लोकाश्चोरप्रायं हीनसत्त्वं पराक्रमरहितमराजकं जनपदं वीक्ष्य यतस्तद्दोषदर्शिनः कालान्तरभाविबहुचोरनिमित्तकस्वपीडारूपबाधकदर्शिनोऽतःशक्ता अपि चोरान्नावारयन्निति ॥ ४१ ॥ इति श्रीभागवतटिप्पण्यां चतुर्दशोऽध्यायः ॥ ४-१४ ॥

॥ हरिः ॐ ॥ मातृभक्तिरित्यस्य मातरीव भक्तिः स्नेहो यस्यासौ मातृभक्तिरित्यर्थः ॥ १७ ॥

स्वतो यल्लोके निरर्थकमर्थक्रियानर्हं शुक्तिरजतादि तद्यस्मिन् यद्भगवद्रूपसमुदाये प्रतीतं नानात्वमिव नानात्वं यथा मिथ्याभूतम् । तथाऽविद्यारचितमज्ञानकल्पितं मिथ्याभूतमिति पश्यन्ति । सोऽयं त्र्यधीशस्त्रयाणां लोकानां मुख्यस्वामी कूटस्थश्चेतनाचेतनसमुदायस्थ आत्मा पूर्णःसाक्षाद्भगवान् कलयाऽवतीर्णोऽशेन पृथ्वाविष्टःसन् अवतीर्ण इति ॥ २० ॥

पृथुराजः सनत्कुमारं भक्त्याऽऽराध्य योगिनो यतो यद्वस्त्वमलं निर्दुष्टं परं ब्रह्मेति वन्दति । तज्ज्ञानं तस्य वस्तुनो ज्ञानमलभतेत्यर्थः ॥ २६ ॥ इति श्रीभागवतट्टिप्पण्यां षोडशोऽध्यायः ॥ ४-१६ ॥

॥ हरिः ॐ ॥ वैन्यरूपेणेत्यस्य वैन्यविशिष्टरूपेणेत्यर्थः ॥ ७ ॥ इति श्रीभागवतटिप्पण्यां सप्तदशोऽध्यायः ॥ ४-१७ ॥

॥ हरिः ॐ ॥ भगवान् अत्रिर्यिर्योऽधर्मे धर्मविभ्रमः स्वयमधर्मे धर्मोऽयमिति विभ्रमवान् । अन्येषामधर्मे धर्मोऽयमिति विभ्रमजनकश्च । तत्रामुक्तं पूर्वं सज्जनैर्बद्धं पश्चादमुक्तं पाखण्डमिव विहायसा त्वरमाणं तमिन्द्रमैक्षत इति ॥ १२ ॥

इन्द्रो वैन्ययज्ञजिघांसया यज्ञहननेच्छया एवाश्वं हरति सति तद्गृहीतवसिष्ठेषु तेनेन्द्रेण पूर्वं निगृहीतानि पश्चाद्विसृष्टानि पाषण्डरूपाणि तद्विशिष्टेषु नग्नरक्तपटादिषु नग्नत्वरक्तपटत्वादि विशिष्टेषु पेशलेषु परबोधचरितेषु वाग्मिषु वाचालेषु पाषण्डेषु पाषण्डलोकेषु प्रायेण नृणां मनुष्याणां मतिर्ज्ञानं व्यजायत इति । सज्जनव्यावृत्त्यर्थं प्रायेणेत्युक्तम् ॥ २४-२५ ॥

हि यस्मादिन्द्रोऽहं चेत्युभावप्युत्तमश्लोकविग्रहौ नारायणप्रतिमारूपौ । त्वं च यज्ञनिषेधःकृत इति बुद्ध्याऽऽत्मने बद्धमश्वापहारः कृत इति बुद्ध्या महेन्द्राय च रोषमाहर्तुं नार्हसि । आवयोरनुग्रहेण ते भद्रमस्त्विवति ॥ ३३ ॥ इति श्रीभागवतटिप्पण्यामेकोनविंशोऽध्यायः ॥४-१९॥

॥ हरि ॐ ॥ निरात्मन इत्यत्र आत्मन इति पदच्छेदं न चात्मन इति पदच्छेदं आत्म इत्यस्यावृत्तिं अनात्मन आत्मन इति जात्यभिप्रायमेकवचनं पर इत्यस्यावृत्तिं चाङ्गीकृत्यानात्मनो जडानामात्मनो जीवानामात्मनो विष्णोः सकाशात्परोऽन्यः पर उत्तमः । स्वामीति यावत् ।

नास्ति । जीवजडात्मकस्य सर्वस्य जगतो विष्णुरेव स्वामीति अनात्मन इत्यादि पदं व्याख्येयम् । एतेनात्मा सर्वस्य जगत इति तात्पर्यमुन्मूलिमिति परास्तम् ॥ ७ ॥

मे प्रसादाच्छान्तिं स्वरूपानन्दाविर्भावलक्षणमोक्षं समवस्थानमेकप्रकारावस्थानविशिष्टं कैवल्यं केवलं निर्दुःखब्रह्म आनन्दादि गुणपूर्णं परं ब्रह्म चाश्नुते प्राप्नोतीत्यर्थः ॥ ११ ॥

उरगविद्विषो गरुडस्योन्नतेंऽसे आरोहणार्थं पदैकेन पादेन क्षितिं भूमिमस्पृशन्तमेकेन पादेन क्षितिं स्पृशन्तमत एव गरुडस्योन्नतेंऽसे विन्यस्तहस्ताग्रमित्यर्थः ॥ १३ ॥

हे जगदीश यद्यस्मात् लालसोऽहमखिलपुरुषोत्तमं गुणालयं ज्ञानानन्दाद्यनन्तगुणाश्रयं पद्मकरा। अत्र प्रथमा तृतीयार्थे । पद्मकरया । सहितमिति शेषः । लक्ष्म्या सहितं त्वामाभजमाभजामि । अथ तस्मात्त्वच्चरणैकताऽनयोस्त्वच्चरणमुख्याश्रययोरप्यावयोर्महा-लक्ष्म्याश्चेत्युभयोरेकपतिस्पृधोरिव । एकपतिस्त्रियोर्यथा कलहस्तथा वा जगत्यां राजभजक-लोकविद्यमानस्य जन्तोरामात्यादि भजनं विना केवलराजभजकस्य जन्तोः कर्मणि राजभजन-रूपकर्मणि वैशसं कलहः स्यादेव । तथा कलिः कलहः कृत उत्पन्नो न स्यात् । कलहप्रसक्तिरेव न भविष्यतीति भावः । एतेन भागवतोत्तमस्य पृथुराजस्य लक्ष्मीवद्भजनं करोमीत्यभिधानं तन्निमित्तकलहप्रसक्त्यभिधानं चायुक्तम् । कलहपरिहारनिमित्ताभिधानं विना कलहो न स्यादित्यभिधानं चायुक्तमिति परास्तम् । अल्पपुण्यस्य तव महापुण्यसाध्यमद्भजन-योग्यत्वाभावाद्भजनमनुपपन्नमित्यत आह ॥ नः समीहितमिति । हे दीनवत्सल यतो नोऽस्माकं फल्ग्वप्यल्पमपि समीहितं चेष्टितं पुण्यं वात्सल्यादेव । उरु महत्करोषि । अतोऽल्पपुण्यस्यापि मम त्वद्भजनम् । युक्तमिति शेषः । वात्सल्यादेव तव सर्वेभ्योऽभीष्टदानमित्यत्र कैमुत्यन्यायमाह ॥ स्व एवेति । स्वे धिष्ण्ये एव स्वमहिम्न्येवाभिरतस्य तव वात्सल्यं विना तया लक्ष्म्याऽपि किं प्रयोजनम् । लक्ष्म्या अभीष्टदानं वात्सल्यादेव किम्वन्येभ्य इति भाव इति ॥ २८-२९ ॥ इति श्रीभागवतटिप्पण्यां विंशोऽध्यायः ॥ ४-२० ॥

॥ हरिः ॐ ॥ तोयैरित्येतत् अर्शआद्यन्तमित्येतदङ्गीकृत्य शुद्धोदकपूर्णसुवर्णकुंभैरिति व्याख्येयम् । एतेन तोयार्द्रेत्यनेन पुनरुक्तिरिति परास्तम् ॥ २ ॥

अच्युतगोत्रत इत्येतत् । अच्युतो नारायणो गोत्रमिव सद्वंश इव परिपालको यस्य क्षत्रियादेस्तस्मात् । महावैष्णवक्षत्रियादि कुलादिति यावत् । इति व्याख्येयम् ॥ १२ ॥

यस्याधिकारिणो दिष्टदृक् अदृष्टसाक्षात्कारवान्नारायणो ध्यानादिना साधनेन तुष्यति । तस्य यत् । ये कामसन्दोहाल्लोकाः स्युर्भवन्तीति ब्रह्मवादिन आहुस्ते लोकास्तदनुष्ठानात्

प्रजापालनानुष्ठानात् । मे स्युर्मम भवन्त्विति बुद्ध्याऽहं धात्रा योजित इति पूर्वेणान्वयः । एतेन भागवतोत्तमस्य पृथुराजस्य लोका मे स्युरिति प्रार्थनमयुक्तमिति परास्तम् ॥ २२ ॥

यूयमात्मवृत्तिभिरात्मनो देहस्य वृत्तिरवस्थानं यैर्देहधारणोपयुक्तभोजनादि व्यापारैस्तैरपि तं नारायणमेव भजतेत्यर्थो द्रष्टव्यः । तेन मनोगुणैरित्यनेनात्मवृत्तिभिरित्यस्य पुनरुक्तिरिति दूषणस्यानवकाशः ॥ ३२ ॥ इति श्रीभागवतटिप्पण्यामेकविंशोऽध्यायः ॥ ४-२१ ॥

॥ हरिः ॐ ॥ हे द्विजश्रेष्ठा वो युष्माकमागतमागमनं सु समीचीनम् । सुखसाधनमिति यावत्। ननु बालानामस्माकमागमनं कथं सुखसाधनमित्यत आह ॥ यद् व्रतानीति । एव शब्दोऽप्यर्थे । यद्यस्माद्बाला एव बाला अपि भवन्तो धीरा ज्ञानिनो यस्माच्च मुमुक्षवः सन्तो बृहन्ति व्रतानि श्रद्धया चरन्ति इत्येतद्वै प्रसिद्धम् । तस्मात् । ननु भवतां सुखं स्वतःसिद्धम् । किमस्मदागमनेनेत्यत आह ॥ कश्चिदिति । हे नाथा व्यसनावापे व्यसनान्युच्यन्तेऽस्मिन्निति व्यसनावापस्तस्मिन्नेतस्मिन्संसारे कर्मभिः पतितार्थार्थवेदिनां इन्द्रियविषयेषु शब्दादिषु पुरुषार्थत्ववेदनशीलानां अस्माकं कुशलं सुखमस्ति कच्चित् अस्ति किम् । नास्तीति यावत् । ननु कुशलप्रश्नेनास्मासु सुखं निश्चित्य भवदागमनेनास्माकं सुखमिति वक्तव्यमित्यत आह ॥ भवत्स्विति । यत्र येषु कुशलाः पुण्यपापविषया मतिवृत्तयो बुद्धिवृत्तयो न सन्ति । किन्तु केवलपुण्यविषया मतिवृत्तयः सन्ति तेष्वात्मारामेषु भवत्सु सुखस्य निश्चितत्वेन सुखस्य निर्णयार्थं कुशलप्रश्नः सुखप्रश्नो नेष्यत इति ॥ १२-१४ ॥

अर्थेन्द्रियारामगुणेषु अर्थस्य देहेन्द्रियाणामारामेषु क्रीडावनेषु गुणेषु विषयेष्वतृष्णया तृष्णावर्जनेन तत्संमतानां देहेन्द्रियसंमतानां स्रक्चन्दनवनितादीनामपरिग्रहेण च विविक्तरुच्या आत्मन् आत्मनि देहभोगविषये परितोषे । निमित्तसप्तमीयम् । परितोषेणालम्बुध्या ब्रह्मणि रतिः स्यादिति वक्ष्यमाणेनान्वयः । ननु देहभोगविषयेऽलंबुद्धेर्भगवद्रतिसाधनत्वाङ्गीकारे हरिगुण-कथामृतपानेऽलंबुद्धिः कार्या स्यात् । केषाश्चिदधिकारिणां भगवत्कथामृतपानस्य भोग-रूपत्वादित्यत आह ॥ विनेति । हरेर्गुणपीयूषपानाद्गुणकथामृतपानाद्विना देहभोगविषयेऽलंबुद्धिर्न भवतीति साधनमिति भावः ॥ २३ ॥

तृतीया प्रथमार्थे । ततश्चैवं योजना । तीव्रं तमस्तितीर्षुः पुरुषः कर्हिचित्कदाचिदपि सङ्गं विषयसङ्गं न कुर्यात् ॥ ३४ ॥

यथा स्वप्ने क्रिया स्वप्नावस्था परिदृश्यमानगजतुरगादि कार्यं मनःकारणम् । तथेदं विश्वं नारायणस्य मनोमात्रं मनसा मीयते निर्मीयत इति मनोमात्रम् । मनःकारणमिति यावत् । विश्वं प्रति

भगवन्मनसो निमित्तत्वं स्वाप्नकार्यं प्रति जीवमनउपादानत्वमिति विशेषः । क्रिया च जगत्प्रवृत्तिश्च वासनामात्रं वसति संकोचे कारणाभावात् सर्वत्र वसति सर्वत्र व्याप्नोतीति व्युत्पत्त्या वासना नारायणमनस्तन्मात्रं तदधीना । यदधीना यस्य सत्ता तत्तदित्येव भण्यत इति वचनात् । अत एव तात्पर्यम् । अनेन जगदुत्पत्तिस्थितिसंहारा ईश्वरेच्छाधीना इत्युक्तं भवति ॥ ३७ ॥

अप्लवेशा इत्यस्य भगवत्पादलक्षणतरीश्रेष्ठरहिता इत्यर्थः ॥ ४३ ॥

मे मदीयत्वेन परिदृश्यमानमात्मना सह देहेन सहितं सर्वं राज्यादिकं साधुदत्तं साधुभ्यो भवदादि ब्राह्मणेभ्यो भगवता दत्तम् । भगवदाज्ञया सर्वं ब्राह्मणाधीनमिति यावत् । इत्येतद्धि स्वीयं वेदविदां सर्वमित्यादि प्रमाणप्रसिद्धम् । अतः किं ददे ददामि । देयं किमपि नास्तीति यावदिति ॥ ४६ ॥

सर्वं निवेदितमित्यस्य यथा कोशपालाः कोशगृहे विद्यमानं धनादिकं सर्वं राज्ञे निवेदयन्ति । तथा सर्वं प्राणादिकं भवद्भ्यो निवेदितं विज्ञापितमित्यर्थो वर्णनीयः ॥ ४७ ॥

निगमभिर्वैदिकैरात्मवादे वेदान्ते एकान्ततो मुख्यतो या भगवतो हरेर्गतिः स्थितिः प्रतिपादिता सा हरेरीदृशी गतिः । यैर्भवद्भिर्नोऽस्मभ्यं प्रतिपादिता तेऽदभ्रकरुणाः पूर्णकारुण्यसंपन्ना भवन्तः स्वकृतेन मदुद्धारेणैव नित्यं तुष्यन्तु । न तु प्रत्युपकारेण । कुत इत्यत आह ॥ को नामेति । तत्तेषां भगवदुपदेष्टृणां को नाम प्रतिकरोति प्रत्युपकारं कर्तुमिच्छति । सो विनोदपात्रमपहासपात्रमिति ॥ ४९ ॥

पृथुः विष्वक्सेनानुवर्तिषु श्रीनारायणानुवर्तिषु गोगुरुविप्रेषु । गवां विष्वक्सेनानुवर्तनं नाम श्रीनारायणसम्यगवस्थानविशिष्टत्वम् । भक्त्या ह्रिया प्रश्रयशीलाभ्यां परोद्यमे । सप्तमी तृतीयार्थे। परोद्यमेन परार्थमुद्योगेन । परेषां हितकृत्येनेति यावत् । आत्मतुल्यो रामनामक-परमात्मतुल्यः पुंभिः रामकथाभिज्ञैः पौराणिकैः सर्वेषां श्रवणार्थमूर्ध्वगीतयोच्चैर्गीतया कीर्त्या सतां रामकथासक्तानां पुरुषाणां रामकथासक्तानां स्त्रीणां च कर्णरंध्रेषु राम इव रामचन्द्रो यथा प्रविष्टो भवति । तथा पृथुस्त्रैलोक्ये तत्र तत्र स्थाने पुंभिरूर्ध्वगीतया कीर्त्या पुरुषाणां स्त्रीणां च कर्णरंध्रेषु प्रविष्टो हेति ॥ ६४-६५ ॥ इति श्रीभागवतटिप्पण्यां द्वाविंशोऽध्यायः ॥ ४-२२ ॥

॥ हरि ॐ ॥ प्रजापतिः पृथुरात्मना परमात्मप्रसादेन वर्धिताशेषसानुसर्गोऽन्वनन्तरं सर्ग उत्पत्तिर्येषां तेऽनुसर्गाः पुत्रपौत्रादयोऽनुसर्गे सहिताः सानुसर्गाः कुटुम्बिनः । अशेषाश्च ते सानुसर्गाश्च अशेषसानुसर्गाः । वर्धिताः अशेषसानुसर्गा येन स वर्धिताशेषसानुसर्ग इत्यर्थः ॥१॥

पृथुविरहाद्वियोगाद्रुदतीमात्मजामिव स्थितां पृथ्वीमात्मजेषु पुत्रेषु विमनःसु विशिष्टबुद्धिमतीषु प्रजासु च न्यस्य सदारः सन्नेक एव तपोवनमगादित्यर्थः ॥ ३ ॥

छिन्नान्यधीर्निरस्तान्यविषयकज्ञानो निरीहो लोकचेष्टारहितः पृथुर्येन वयुनेनापरोक्षमनोवृत्तिज्ञानप्रभेदशब्दितेन भगवन्निरीक्षणेनेदं संसारबन्धनमनिच्छत् । तन्मनोवृत्तिज्ञानमधिगतात्मगतिः प्राप्तभगवद्विषयकस्वरूपज्ञानः संस्तत्यजे । स्वरूपज्ञानेन वृत्तिज्ञानं त्यक्तवानिति भावः । ननु स्वरूपज्ञानं संपाद्य तेन वृत्तिज्ञानत्यागे किं निमित्तमित्यत आह ॥ तावदिति । अयं पुरुषो यावद्योगगतिभिर्योगादुत्पन्नैः स्वरूपज्ञानैर्वृत्तिज्ञानं न त्यजेत् । यावत्पर्यन्तं वृत्तिज्ञानं तिष्ठतीति यावत् । तावदप्रयत्नः प्रयत्नरहितः । प्रयत्नं विनेति यावत् । गदाग्रजकथासु नारायणकथासु रतिं सम्यग्रतिं न कुर्यात् । किन्तु यतिः यतत इति यतिः प्रयत्नवान् । प्रयत्नेनैवेति यावत् । गदाग्रजकथासु रतिं कुर्यात् । अतः प्रयत्नं विना गदाग्रजकथासम्यग्रतिसिद्ध्यर्थं स्वरूपज्ञानसंपादनं वृत्तित्यागश्चावश्यक इति भावः । यद्यपि सर्वथा वृत्तित्यागो मोक्ष एव । तथाऽप्येष्यत्तु निश्चितं तदतीतत्वेन भण्यत इति वचनानुसारेण मोक्षे वृत्तिज्ञानत्यागनिश्चयाभिप्रायेणोपमर्दाभिप्रायेण वा तत्यज इत्युक्तिरुपपन्नेति ॥ १२ ॥

ब्रह्मभूतो दृढमित्यस्य ब्रह्माधारतया स्थित इति ॥ १३ ॥

उत शब्दोऽप्यर्थे । यद्यपि मर्त्या विद्युल्लोलायुषोऽल्पायुषस्तथाऽपि ये मर्त्या अल्पकालेनैव नैष्कर्म्यं मोक्षसाधनं भगवत्पादं साधयन्ति तेषां मर्त्यानामन्यद्भगवत्पादादन्यद्दुरापं किं न किमपीति ॥ २७ ॥ इति श्रीभागवतटिप्पण्यां त्रयोविंशोऽध्यायः ॥ ४-२३ ॥

॥ हरिः ॐ ॥ तप्तहेमनिकर्षाभमित्यस्य तप्तसुवर्णश्रेष्ठाभामित्यर्थः । निकर्ष शब्दस्योत्कृष्टार्थत्वात् ॥ २५ ॥

हे आत्मविद्धुर्याः परमात्मज्ञानिश्रेष्ठा वो युष्माभिर्जितम् । यतः स्वस्तिसद्भाववाचिनः शब्दाः सर्वे ते सुखवाचका इति वचनात्पूर्णानन्दो नारायणः । वो युष्माकं स्वस्तये मोक्षसुखाय । अस्तु भविष्यति । भवतां भवद्भिः । राधसे मोक्षाय स्वस्तिर्नारायणः सर्वस्मै सर्वान्तःस्थित्वा नियामकायात्मने परमात्मने नम इत्युच्चार्यं राध्यं राध्यः पूज्य इति । उत्तरत्र श्लोकेषु सर्वत्र नम इत्यतःपरं इत्युच्चार्येत्यध्याहृत्य तस्याराध्यमित्यनेनान्वयो वक्तव्यः । उत्तरश्लोकस्थानामर्थलिङ्गाय नभस इत्यादि पदानां सर्वान्तर्यामकत्वात् । सर्वनामा जनार्दन इत्याचार्येणोक्तप्रमाणानुसारेणार्थादि नियामकायेत्यर्थो द्रष्टव्यः ॥ ३३ ॥

एतत्सर्वस्मा इत्याद्युक्तसर्वनियामकत्वादि गुणविशिष्टरूपं नारायणस्य रूपमनुसम्यग्ध्येयमित्यर्थः । भवान् भक्तिमतां लभ्य इत्यादि श्लोका ध्येयगुणान्तरनिरूपणार्थं प्रवृत्ता ।। ५४ ।।

यद्भेदबुद्धिर्यस्य परमेश्वरस्य भेदो जीवादिभ्यो भेदस्तद्विषयिणी बुद्धिः स दिवा दिवा सम्यग्ज्ञानं तत्सिद्धानां सम्यग्ज्ञाननिष्ठा भ्रमज्ञानरहितब्रह्मादिनिष्ठत्वाद्भेदज्ञानं प्रमेति यावत् । इति व्याख्येयम् । अत एव तात्पर्यम् । अत्र सम्यग्ज्ञानविषयेत्यस्य सम्यग्ज्ञानिनो विषया आश्रया यस्या इति विग्रहमाश्रित्य सम्यग्ज्ञानिनिष्ठेत्यर्थो ज्ञातव्यः ।। ६२ ।।

सुप्तशक्तिरित्यस्य सुप्तेत्येतन्निर्वचनत्वात् । अकारस्य उकारे वकारस्य लोपे स्वाप्तशब्दस्य रूपमित्यङ्गीकृत्य स्वस्मिन् स्वात्मन्येवाप्तशक्तिर्लक्ष्मीरूपा भार्या यस्य स इत्यर्थो वक्तव्यः ।। ६४ ।। इति श्रीभागवतटिप्पण्यां चतुर्विंशोऽध्यायः ।। ४-२४ ।।

।। हरिः ॐ ।। त्वं किं पतिं विचिन्वती ऱ्हीरसि । अथ किं पतिं विचिन्वती भवानीन्युमाऽसि। किंवा पतिं विचिन्वती वाक् वागभिमानिनी सरस्वत्यसि । अथवा किं मुनिवद्वने रहः पतिं नारायणं विचिन्वती रमाऽसि । मम पतिविषयकविचारोऽस्तीति त्वया कथं ज्ञायत इत्यत आह ।। त्वदंघ्रीति । तव पतिविचारो न चेत् । त्वदाङ्घ्रिसाम्याप्तसमस्तकामः समस्तैः काम्यन्त इति समस्तकामाः सौन्दर्यादि गुणास्त्वदङ्घ्रिसाम्येनाप्ताः प्राप्ताः समस्तकामा यस्य स तथा । त्वत्पादवत्सर्वापेक्षितसौन्दर्यादि गुणविशिष्टत्वात् । अत्युपादेय इति यावत् । पद्मकोशः क कराग्रात्कुतः पतितस्तेन ज्ञायते तव पतिविचारोऽस्तीति ।। २९ ।। इति श्रीभागवतटिप्पण्यां पञ्चविंशोऽध्यायः ।। ४-२५ ।।

।। हरिः ॐ ।। राजवने श्रुतिदृष्टेषु श्रुतिप्रसिद्धेषु तीर्थेषु प्रयागादि तीर्थेषु च मेध्यपशून् आदीन् यावदर्थं यावदारब्धयज्ञनिष्पत्तिरूपात्मप्रयोजनमलं लुब्धः । अत्रालंशब्दः प्रतिषेधार्थः । अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वेति पाणिनिसूत्रात् । अतोऽलं लुब्ध इत्यस्य अलुब्ध इत्यर्थः । हन्यादिति नियम्यते विधीयते । उपलक्षणमेतत् । सज्जनलोकोपकारार्थं यज्ञनिष्पत्तिरूपात्मप्रयोजनादधिकमप्यलुब्धो हन्यादिति नियम्यते । ऐतेन लोभस्यैव त्याज्यत्वेनातिशयलोभस्य सुतरां त्याज्यत्वात् । अलं लुब्धो हन्यादिति वचनमयुक्तमिति परास्तम् । अत एव तात्पर्यम् ।।६।।

वा शब्द उपमार्थः । माता वा माता यथा । पुत्राणां देवता यथा । पतिदेवता पत्युर्देवता पत्नी यदि गृहे न स्यादित्यर्थः । एतेन मोहनिमित्तकप्राधान्यकथनवेलायां पतिर्देवता यस्या इति पत्युः प्राधान्यकथनमनुपपन्नमिति परास्तम् ।। १५ ।। इति श्रीभागवतटिप्पण्यां षड्विंशोऽध्यायः ।। ४- २६ ।।

॥ हरिः ॐ ॥ हे बर्हिष्मन् पिता ययातिर्यां निमित्तीकृत्य । यत्स्वीकारणेति यावत् । तुष्टः सन् राजर्षये पुत्राय पुरवे वरमदात् । या लोके दुर्भगेति विश्रुता प्रसिद्धा । या च कालस्य दुहिता कालाज्जायत इति कालस्य पुत्री काचित्कालदुहितृत्वेन प्रसिद्धा आत्मन आत्मनाममुक्तजीवानां दौर्भाग्येन त्रिलोकीं पर्यटन्तीं वरं पतिमिच्छन्तीं सेति । प्रथमा द्वितीयार्थे । सतां जरां कश्चन न प्रत्यनन्देति ॥ १९ ॥ २० ॥ इति श्रीभागवतटिप्पण्यां सप्तविंशोऽध्यायः ॥ ४-२७ ॥

॥ हरिः ॐ ॥ उभयत्रात्मनो मृजन्नित्यस्यात्मनः स्वस्योभयत्र बाह्यं मानसं चेत्युभयं मलं मृजन् क्षालयन्नित्यर्थः ॥ ३५ ॥ इति श्रीभागवतटिप्पण्यामष्टाविंशोऽध्यायः ॥ ४-२८ ॥

॥ हरिः ॐ ॥ दिष्टमित्यस्य अर्शआद्यजन्तत्वमङ्गीकृत्य दृष्टं प्राप्तमित्यर्थो वक्तव्यः । एतेन दण्डादीनां दिष्टसाधनत्वेन तद्रूपत्वाभावाद्दिष्टं दण्डमोदनमित्यभेदोक्तिरनुपपन्नेति परास्तम् ॥३१॥

हे अनघ प्राचीनबर्हिष्मन् केवलं कर्म भगवत्ज्ञानं विना कृतं कर्म कर्मणामेकान्ततो मुख्यतः प्रतीकारो न भवति । हि यस्माद्द्वयं निवर्त्यं निवर्तकं चेति कर्मद्वयम् । अविद्योपसृतमीश्वरज्ञानोपसृतम् । निवर्त्यनिवर्तकयोरुभयोरप्यविद्योपसृतत्वे दृष्टान्तमाह ॥ स्वप्न इति । स्वप्ने निवर्त्ये स्वप्ने जाते सति स्वप्नो जायमानस्तं निवर्तकः स्वप्नो निवर्त्यनिवर्तकश्चेति । स्वप्नद्वयमिति यावत् । इव यथाऽविद्योपसृतं बाह्यज्ञानोपसृतं तथा कर्मद्वयमविद्योपसृतमिति । एतेन निवर्तकस्वप्नेन निवर्त्यस्वप्नस्यात्यन्तिकनिवृत्तेरदर्शनात् । दृष्टान्तोऽसङ्गत इति दूषणं परास्तम् । ननु देहात्मत्वादिज्ञानमूलो हि संसारः । देहात्मत्वादि ज्ञानं तु सर्वदा न संभवति । देहात्मत्वादेरविद्यमानत्वात् । न ह्यविद्यमानस्य शुक्तिरजतादेर्ज्ञानं सर्वदा भवति । अतो देहात्मत्वादि ज्ञानाभावेनैव संसारो निवृत्तो भविष्यति । किं तदर्थं भगवत्ज्ञानेनैवेत्यत आह ॥ अर्थे हीति । अर्थे देहात्मत्वादिरूपेऽर्थे । अविद्यमानेऽपि लिङ्गरूपेण रूपं विग्रहो लिङ्गदेहनिमित्तेन विचरतो नियमेन देहात्मत्वादि ज्ञानवतः । चरतेर्गत्यर्थत्वेन ज्ञानार्थत्वात् । पुरुषस्य संसृतिः संसारो न निवर्तते । अर्थस्याविद्यमानत्वेऽपि तत्ज्ञानं नियमेन भवतीत्यत्र दृष्टान्तमाह ॥ मनसेति ॥ स्वप्ने स्वप्नावस्थायामर्थे जाग्रत्वरूपेऽर्थे अविद्यमानेऽपि मनसा यथा विचरति नियमेन जाग्रत्वज्ञानवान्भवति हि तथा नियमेन देहात्मत्वादि ज्ञानवानिति ॥ ता. अर्थः ॥ संसृतेः संसारस्य स्वप्नसाम्यं स्वप्नसाम्यघटकं तु यथार्थज्ञानवर्जनं नियमेन यथार्थज्ञानवर्जनमर्थे विद्यमानेऽपि नियमेन। तत्ज्ञानमिति यावत् । कोऽसावविद्यमानोऽर्थो यस्य ज्ञानं स्वप्ने जाग्रति च नियमेन भवतीत्यत आह ॥ जाग्रतीति । जाग्रति जाग्रदवस्थायां केवलं देहात्मत्वादि । आदि शब्देन ममतादिकं गृह्यते । देहात्मत्वममतादिकमेव । अविद्यमानं तु जगदविद्यमानं स्वप्ने स्वप्नावस्थायां तु

जाग्रत्वज्ञानमेवाविद्यमानमविद्यमानार्थविषयं जाग्रत्वमेव विद्यमानं न तु स्वाप्नम् । गजतुरगादिकमिति यावत् । पूर्वोक्तसमुच्चये च शब्द इति ॥ ३५-३६ ॥

यतो यस्मान्नृणां क्षेमो भवति तत्पादमूलं तस्य हरेः पादमूलं शरणम् । अर्श आदिभ्योऽच् । शरण्यम् । ननु नृणां स्वप्रियैः पित्रादिभिः क्षेमो भवति । अतः पित्रादीनामेव शरण्यत्वमित्यत आह ॥ स वा इति । हि यस्मात् स पित्रादिस्थितो हरिः प्रियतमः पित्रादीनां प्रियत्वस्य भगवत्संपर्कलब्धत्वादित्येतत् । वै ये संपर्कप्रिया आसंस्ततः कोन्वपरः प्रिय इत्यादि प्रमाण-सिद्धम्। अतो भगवानेव मुख्यतः क्षेमप्रदः मुख्यतः शरण्यश्च । नृणां क्षेम इत्युक्तमुपपादयति ॥ अस्येति । अस्येत्यस्यावृत्तिः । यतः कारणादस्य मनुष्यसमुदायस्य सकाशात् । परमेश्वर-प्रसादादिति यावत् । इह संसारे । निमित्तसप्तम्येषा । संसारनिमित्तं भयमण्वपीषदपि न भवति । मुक्तो भवतीति यावत् । ननु मोक्षजनकीभूतप्रसादार्थं भगवत्ज्ञानं संपादनीयम् । तत्ज्ञानं कीदृशमिति तत्राह ॥ इतीति ॥ योऽधिकारी इति । भगवत्पादमूल एव शरण्यं भगवानेव प्रियतमो भगवानेव मोक्षप्रद इति वेद । स वै स एव विद्वान्मोक्षसाधनज्ञानवान् । ननु मोक्षसाधन-ज्ञानं स्वगुरुणा भवतीति वक्तव्यम् । तथा भगवत्ज्ञानद्वारा मोक्षदातृत्वं गुरोरेव वक्तव्यम् । अतः प्रियतमत्वं गुरोरेवेत्यत आह ॥ यो विद्वानिति ॥ य इति । प्रथमा पञ्चम्यर्थे । यस्मात्स्वयं विद्वान्मोक्षसाधनज्ञानवान् सः स्वगुरुर्हरिर्हरिसन्निधानविशेषपात्रं हरिरेव गुर्वन्तर्गतः सन् स्वज्ञानमुत्पाद्य मोक्षं ददातीति प्रियतमः । गुरुस्तु भगवत्संपर्कात्प्रिय इति यावदिति ॥ ५४ ॥

सर्वरहोरह इत्यस्य रहो ब्रह्म सर्वरहः सर्वेषु कालेषु रहस्यम् । नित्यमिति यावत् । अनित्यस्य सर्वकालेषु रहस्यत्वायोगात् । ब्रह्मनिमित्तमिति वक्तव्ये सर्वकालेषु रहस्यत्वोक्ति-स्त्वनुपलंभबाधपरिहारार्थेत्यर्थः । रहः शब्दस्य ब्रह्मार्थत्वे तात्पर्ये प्रमाणमुदाहृतम् ॥ ८३ ॥ इति श्रीभागवतटिप्पण्यामेकोनत्रिंशोऽध्यायः ॥ ४-२९ ॥

॥ हरिः ॐ ॥ प्रचेतसस्तपयज्ञेन तपसा च पुरंजनं पुरेषु शरीरेषु अज्यते व्यज्यते पुराणि जनयति पुराणि अंजयति व्यञ्जयतीति वा पुरंजनो विष्णुः । आद्यपक्षे तृतीयपक्षे च पुर अंजत इति स्थिते पुररूपत्वम् । द्वितीयपक्षे पुरशब्दे मुमागमः । तमतोषयन्नित्यर्थः । पुरंजन शब्दस्य विष्ण्वर्थकत्वे पुरव्यंग्यत्वं पुरजनकत्वं पुरव्यञ्जकत्वं च प्रवृत्तिनिनित्तमित्यत्र तात्पर्यप्रमाणस्यार्थः। जीवः पुरेषु शरीरेष्वंजनाद्व्यंजनात् । व्यंग्यत्वादिति यावत् । पुरंजन इतीरितः । चार्थस्तु शब्दो विष्णुरित्यनेन संबध्यते । न केवलं जीवो विष्णुश्च पुरुषु जना पुरंजन इतीरितः । विष्णुपुराणां जननादपि पुरंजन इतीरितः । तयोर्विष्णुजीवयोः पुरंजनशब्दवाच्यत्वे पुरुषेषु व्यंग्यत्वमिव पुराणां

व्यंजकत्वमपि प्रवृत्तिनिमित्तं पुरव्यंजकत्वाच्च विष्णुजीवयोः पुरंजन शब्दवाच्यत्वमिति यावदिति ।। ३ ।। इति श्रीभागवतटिप्पण्यां त्रिंशोध्यायः ।। ४-३० ।।

।। हरिः ॐ ।। सर्वेषामपि श्रेयसां फलानामात्मा नारायणोऽवधिरवधिभूतं फलं स्वर्गादि फलानां तात्पर्यं तमेव फलदत्वं यावत्पर्यन्तं नारायणप्राप्तिर्नास्ति । नारायणप्राप्त्यनन्तरं तु नारायण एवार्थितोऽपेक्षितो न तु स्वर्गादिकम् । तस्मादात्मा सर्वफलानामवधिभूतं फलमित्यर्थः ।। ता. अर्थः ।। तावत्पर्यन्तं भगवत्प्राप्तिपर्यन्तमेव स्वर्गादिकं फलम् । भगवत्प्राप्त्यनन्तरं तु भगवानेव फलं न तु स्वर्गादिकमिति हेतोर्भगवान् अवधिरवधिभूतं फलमित्युच्यत इति । एतेन पुण्यफलानां मोक्षेऽपि विद्यमानत्वात् । तावत्पर्यन्तमेव फलमित्यनुपपन्नमिति परास्तम् ।। १३ ।।

छिद्रवदित्यस्य छिद्राकाशवदित्यर्थः । आकाशवदित्युक्ते आकाशस्य व्याप्तत्वात्सरणा-भावेऽपीश्वरस्याणुत्वात्सरणं भविष्यतीत्याशङ्का स्यात् । सा माभूदिति छिद्राकाशवदित्युक्तम् ।। २१ ।। इति श्रीभागवतटिप्पण्यामेकत्रिंशोऽध्यायः ।। ४-३१ ।।

।। इति श्रीमदश्रुतपदवाक्यप्रमाणव्याख्यातॄणामभिनवचन्द्रिकाऽभिनवताण्डवाभिनव-गदाऽभिनवामृतादि बहुग्रन्थकर्तॄणां जगत्पूज्यपादुकानां श्रीसत्यनाथश्रीपादानां शिष्येण सत्याभिनवयतिना त्वया भागवतटिप्पणं कारयिष्यामीति तदीयामोघसंकल्पमात्रमवलंब्य कृतायां श्रीमद्भागवतटिप्पण्यां दुर्घटभावदीपिकायां चतुर्थः स्कंधः समाप्तः ।।

### प्राक्श्रीनिवासाचार्यविरचितः

# विरोधोद्धारः

॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीमपध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मी हयग्रीवाय नमः ॥ प्रियव्रतेति । अत्रेयमाशङ्का । उभयोर्युगपत्सार्वभौमत्वं कथम् । न च षट्त्रिंशद्वर्षसाहस्रं शशास क्षितिमण्डलमित्यनेनोत्तानपत्पुत्रस्य ध्रुवस्य माण्डलिकत्वम् । भूमण्डलं जलधिमेखलमाकलय्य कालोपसृष्टमिति स प्रययौ विशालमित्यनेन सार्वभौमत्वसूचनात् । तद्वंशीयानां पृथ्वादीनां सार्वभौमत्वप्रसिद्धेश्च । तर्हि प्रियव्रतवंशीयानां माण्डलिकत्वमस्त्विति चेन्न । तेषु जंब्वादिषु बार्हिष्मतीपतिरनुव्रतानात्मजानाग्नीध्रेध्मजिव्हयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्रसंज्ञान् यथासंख्यमेकैकस्मिन्नेकैकमेवाधिपतिं विदधे इति वचनात्सार्वभौमत्वस्य कैमुत्यसिद्धेरिति । अत्रोच्यते । प्रियव्रतस्योभयोर्मध्ये ज्येष्ठत्वेन सार्वभौमाधिकारित्वेऽपि यो नारदादात्म-विद्यामधिगम्येत्यनेन नारदसेवायां रतत्वाद्राज्याकरणेनोत्तानपादीयैर्दशप्रचेतः पर्यन्तं सार्वभौमत्वं कृतम् । ततः प्रचेतसोऽन्तरुदधौ पितुरादेशकारिणः । जपयज्ञेन तपसा पुरंजनमतोषयन् । दिव्यवर्षसहस्रान्ते पुरुषस्तु सनातनः । तेषामाविरभूत्कृच्छ्रं शान्तेन शमयन् रुचेति वाक्येनोक्त-कालपर्यन्तं राजाभावप्राप्त्या सत्यां ब्रह्मजप्रप्रियव्रतवंशीयैः विरजपर्यन्तं कृतराज्यान्ते पुनः प्रचेतोभिः स्वपितृराज्यं गृहीत्वा दक्षद्वारा चन्द्रसूर्यवंशीयानां प्रवृत्तिः कृतो । अतो नोभयोर्युगपद्राज्यप्रवृत्तिः ॥ ८ ॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥ ४-९ ॥

॥ हरिः ॐ ॥ सप्तमाष्टमश्लोक्योः पुनरुक्तिर्दृश्यते । अतोऽर्थान्तरम् । यजमानस्य पृथोः । धर्मदुघा धर्मेण स्वदेहे प्रजाधारणरूपासाधारणधर्मेण क्षत्रधर्मेण वा क्षुधितजनदर्शनजन्यदयादि-रूपधर्मेण वा दुह्यते सा भूमिः । सर्वकामदुघा सती सर्वे प्रातिस्विकत्वेनानेके कामा अपेक्षितपदार्था येषां तैर्देवादिभिः दुह्यते सा तथा सती भवती ॥ अथवा ॥ स्वजातिश्रेष्ठत्वरूपो धर्मोऽस्त्येषामिति धर्माः । अर्श आद्यच् । स्वायंभुवादयो वासास्तैः दुह्यते स्नुता भवतीति धर्मदुघा सती । अभीप्सितान् दोग्ध्रभिलषितान् । अर्थान् अन्नादिकामान् । दोग्धि स्म दुदुहे । स्म योगेन लडपि भूतार्थे । एवमर्थाङ्गीकारे न पुनरुक्तिभीः ॥ एतमुक्तार्थमाक्षिप्य समाधातुं विजयध्वजीय-टीकामवतारयति ॥ गोपालेति । गोपालानां तरसानां चतुर्विधान्नजनित्वेनेति पाठो बहुपुस्तकेषु दृश्यते । तत्र तरसानामिति पदं पक्ष्यर्थकत्वेन केनविद्याख्यातमपि तच्चिन्त्यम् । तरसशब्दस्य पक्ष्यर्थकत्वेऽनुशासनाद्यभावात् । गोपालानामिति षष्ठ्याश्चासंगतत्वात् । तस्मात्प्रथमलेखक-हस्तदोषेण पुस्तकेषु तथा लेखेऽपि व्याख्याकारविवक्षितपाठस्त्वित्थम् । गोपालानीतरसानां

चतुर्विधान्नवाचित्वेन कथं तत्संभव इति तत्राहेति । अस्यार्थः । गौः ग्मेति नैघंटुकात् । भूपालकत्वात्स्वायंभुवो वत्सरूपो गोपालः तेन आनीताः प्रापिता रसा अन्नसंबन्धिनः । तेषां चतुर्विधान्नवाचित्वेन लेह्यपेयचोष्यखाद्यभेदेन चतुर्विधान्नस्य भक्ष्यस्य वाचित्वेन अपरपर्यायत्वेनैवेत्यर्थः । तत्संभवः तस्य सर्वकामदोग्ध्रीत्वस्य संभवः संभावना कथं स्यात् । नैव स्यादित्याक्षेपे प्राप्ते तत्र तत्परिहारविषये आह ब्रवीति मैत्रेयः । न केवलमिदमेवाश्चर्यं यद्गोरूपिणी भूमिः सर्वकामान् दोग्धीति । किन्तु नद्योऽपि सर्वरसान् । तरवो वृक्षाश्च क्षीरदध्यन्नगोरसान् क्षीरान्नं दुग्धोदनं दध्यन्नं दध्योदनं गोरसान् । केवलदुग्धदधिनवनीतघृतादीन् ऊहुः अवहन् । नापि केवलं सामान्यतो वृक्षाः क्षीरान्नादीनूहुः । अपि तु भूरिवर्ष्माणः जरदंगाः मधुच्युतः मधुसारघं च्योतते स्रवति येभ्यस्ते तथा विधाः सन्तः प्रासूयन्त । पत्रपुष्पफलादीनि जनयामासुः । तस्मादाश्चर्यगणे एकमेवाश्चर्यं कर्तुमयुक्तम् । पृथ्वाविष्टहरेर्महिम्नो लोकविलक्षणत्वादिति भावः ॥ ७-८ ॥ इति श्रीभागवतटिप्पण्यामेकोनविंशोऽध्यायः ॥ ४-१९ ॥

**॥ इति श्रीभागवते विरोधोद्धारे पांघरीश्रीनिवासविरचिते चतुर्थस्कन्धः समाप्तः ॥**

# श्रीमद्भागवतचतुर्थस्कन्धश्लोकानुक्रमणिका

## श्लोकानुक्रमणिका

## ओ, औ

## ज



## त

### द

## फ



## ब

## र

## ह

**प्रकाशिका** – निन्दामेवाह ॥ न यस्येति । लोके विद्यमानानां देहभृतां शरीरिणां प्रियात्मनोऽभीष्टरूपस्य रुद्रस्यातिशायनो योग्यतातिरेकेणातिशायनः प्रियो द्वेष्यश्च नास्ति तस्मिन्समस्तात्मनि सर्वमनोभिमानिनि भवंतमृते कतमः पुरुषः प्रतीपको द्वेषी न कोऽपीत्यर्थः ॥ ११ ॥

**दोषान् परेषां हि गुणेष्वसाधवो**
**गृह्णन्ति केचिन्न भवादृशा द्विजाः ।**
**गुणांश्च फल्गून् बहुलीकरिष्णवो**
**महत्तमास्तेष्वविदद् भवानघम् ॥ १२ ॥**

**प्रकाशिका** – साधुस्वभावविरुद्धत्वादसाधुस्वभावत्वाच्च न त्वं साधुरित्याशयेन तदुभयस्वभावं दर्शयत्याह ॥ दोषानिति । केचिदसाधवो दुर्जनाः परेषामुत्तमानां गुणेषु सत्सु दोषानेव गृह्णन्ति । न गुणान् । भवादृशा महत्तमा द्विजाः फल्गूनल्पान्गुणान् बहुलीकरिष्णव एव न दोषान् गृह्णन्ति। तेषु महत्तमेषु गणितो भवान् गुणपूर्णे शिवेऽघमविदत्ज्ञातवान् । अतस्त्वं न साधुरित्याशयः ॥ १२ ॥

**नाश्चर्यमेतद् यदसत्सु सर्वदा**
**महद्विनिन्दा कुणपात्मवादिषु ।**
**सेर्ष्या महापूरुषपादपांसुभि-**
**र्निरस्ततेजस्सु तदेव शोभनम् ॥ १३ ॥**

**प्रकाशिका** – एवमसाधुत्वमुपपाद्य तत्र महद्विनिन्दनं युक्तमेवेत्याह ॥ नाश्चर्यमिति । कुणं कर्मफलं पिबतीति कुणपो देहः स एवात्मेति वादिनस्तेषु ईर्ष्यया सह वर्तमानाः सेर्ष्याः महतां विनिन्दाऽस्तीति यन्नैतदाश्चर्यं किन्तु तदेव महन्निन्दनमेव शोभनं तद्योग्यगतिसाधनम् । कथं भूतेष्वसत्सु । महापूरुषपादपांसुभिर्निरस्ततेजःसु । पांसुभिरित्यनन्तरमपि निन्दितैरिति शेषः । तथा च महापुरुषपादपांसवोऽपि निन्दितास्तेजो निरस्यन्ति तदा महापुरुषा निन्दिताश्चेत्किमु वाच्यमिति कैमुत्यमनेनोक्तमिति ज्ञातव्यम् ॥ १३ ॥

**यद् द्व्यक्षरं नाम गिरेरितं नृणां**
**सकृत् प्रसङ्गादघमाशु हन्ति तत् ।**